श्री वेङ्कटाध्वरिविरचितम्

# लक्ष्मीसहस्रम्

## (प्रथमभागः)

**श्रीकृष्ण ब्रह्मतन्त्र परकालमुनीन्द्र विरचितया**
**रत्नप्रकाशिकाव्याख्यया समलंकृतम्**

*महामहोपाध्याय*

**श्री-न-च-रघुनाथाचार्येण**

पीठिकाटिप्पण्यादिलेखनेन परिष्कृतम्

लक्ष्मीसहस्रम्
सत्सम्प्रदायपरिरक्षणसभा प्रकटनम्
प्रथममुद्रणम् - क्रीस्ताब्दः 2000
1000 प्रतयः

**मूल्यम् : रू. 100-00**

प्राप्तिस्थानम्
**श्री न.च. रघुनाथाचार्यः**
16-4-523, शिवनगर
वरंगल् -506 002 आन्ध्रप्रदेशः

मुद्रणम् :
दिव्यवाणी कम्प्यटर प्रिन्टर्स

श्लो : सृष्टिस्थितिप्रळयरूपतया प्रसिद्धा
नाट्यक्रिया रसघना भुजगाद्रिभर्तुः।
यन्मानसप्रसदनैकफलः प्रयासः
वृष्टिं रमा शुभमयीं मयि सा कृषीष्ट॥

काव्यरूपवाङ्मयविभागे इष्टदेवतावर्णनरूपा स्तोत्रप्रक्रिया अर्थकृते शिवेतरक्षतये वा कविभिः उपयुज्यते इति निश्चप्रचम्। तत्रार्थकृते इत्यनेन न धनलब्धिमात्रविवक्षेति संभाव्यम्। किन्तु पुरुषार्थकृते इत्येव तदाशयः। तत्र केषांचन स्तुतिप्रबन्धानां अर्वाचीनकर्तृकाणां लौकिकपुरुषार्थफलकत्वे अनिष्टनिवारणफलकत्वे च दृष्टेऽपि, विरक्त-भक्तकर्तृकाणां तु परमपुरुषार्थैकपर्यवसायितया, कवेरिव तदनुसन्धातॄणामपि स एव कांक्षणीयं फलं भवति। अत एव हि ईदृशेषु कविषु अग्रणीत्वमासेदिवान् श्रीमान् वेंकटनाथार्यः कवितार्किककेसरी वेदान्ताचार्यः। स खलु स्वकरणत्रयं प्रत्येकं शिक्षामेवमनैषीत्- ''मातर्भारति! मुंच मानुषचटून्, भो देह! लब्धैरलम्, लुब्धद्वार-दुरासिकापरिभवैः जोषं जुषेथाः मनः!'' इति ब्रुवाणः। तस्य तां दूष्प्रवृत्तिं विनिवर्त्य, आत्मीयैस्सह स्वात्मा तेन रंगधामनि स्वामिनि समर्पितः- स एव पादुकासहस्रेऽपि दृढमध्यवसायमात्मीयं एवं प्रकटं

श्लो : शरणमुपगतोहं शार्ङ्गिणः पादरक्षे!
सकृदपि विनियुक्तं त्वत्सपर्याधिकारे।
पुनरपि कथमेनं हस्तमुत्तानयेयं
धनमदमुदितानां मानवानां समाजे? - इति व्यधत्त॥

अगाधभगवद्भक्तिभरितेषु आल्वार् इति व्यपदिष्टेषु दिव्यसूरिवरेषु प्राधान्यं आसेदिवान् श्रीशठकोपसूरिः स्वीये सहस्रगीतप्रबन्धे ''वाय् कोण्डु मानिडं पाडवन्द कवियेनल्लेन्'' (भगवद्दत्तया वाचा न मानवाधमं कंचिदपि कविरहं कदाचिदपि स्तुयाम्) इति जोघुष्यमाणः, अत एव धन्यमात्मानं संगिरमाणश्च इतरेषामपि भक्तकवीनां मार्गदर्शीति व्यपादिश्यत। तमेव अनुसरन् ''जिह्वे! कीर्तय केशवं'' इत्यादिना स्वीयं करणग्रामं नियच्छंश्च भक्ताग्रणीः कुलशेखरो महाराजोऽपि ''बद्धेनांजलिना, नतेन शिरसा.... अस्माकं सरसीरुहाक्ष! सततं सम्पद्यतां जीवितम्'' इत्यादिकांश्च॥ एषा हि कवीनां भक्तानां

प्रदर्शयितु स्वयमेव [illegible]
परितस्तरे। भगवति प्रावण्यमिव विरक्तिमपि पुष्कलां विषयेषु वहन्नसौ महाकवि यशोलिप्साविडंबित एव नूनमासीदिति हन्त कथमिदं विश्वस्यते? नूनं कवय ईदृशा एव स्तोत्रवाङ्मये प्राथम्यमर्हन्ति। कवयोऽपि ये वैषयिकीं भोगतृष्णां अजहतः, भगवत एव सकाशात् अर्थकामादिकं लिप्समानाः स्ववाग्वैभवेन तमेव तुष्टूषन्ते, त इमे द्वितीयां श्रेणिमाटीकन्ते। शब्दार्थयोरुपरि स्वाधिकारमिव प्रज्ञामपि नवनवोन्मेषां विचित्रार्थ विष्फारणपटीयसीं प्रदर्शयितुमुद्युञ्जते च। मयूरादयः कवय ईदृशाः। स हि स्वारोग्यमभिकांक्ष्य सूर्यमस्तावीत्॥

ये तु मुग्धकवयः प्रभवन्तोऽपि सरसकाव्यनिर्माणे विविधराजसभासु प्रविष्टाः सम्माननाम् आकांक्षन्तः "वानरीमिव वाग्देवीं नर्तयन्ति गृहे गृहे" इत्युक्तरीत्या राजपौरुष-तत्पत्नी-पुत्रादि-मिथ्यास्तवेन अमलामपि स्ववाणीं कलुषयन्ति उदरंभरयः - त एते तृतीयां श्रेणिं आतिष्ठन्ते, ईदृशास्तु विद्यानाथादयः कुकवयः॥

तेष्वसौ वेङ्कटाध्वरिकविः द्वितीयश्रेण्यां निवेशनमर्हति। एष हि महाकविः अधिगत शास्त्रसारोऽपि लब्ध भगवद्रामानुजसम्प्रदायसम्बन्धोपि तटस्थ सहृदयजनपिप्रीषया विश्वगुणादर्श चम्पूप्रबन्ध-शृङ्गारदीपादि भाणग्रन्थ-सुभाषित कौस्तुभादिचाटुकाव्य-निर्माणेन लोके स्वकीर्तिं प्रतिष्ठापयामास। असौ दूषणभूषणसाधारण्येन प्रवर्तितैः विश्वगुणादर्शादिभिः कीर्तिमिव पापपंकमपि नवे वयसि विजृम्भमाणेन प्रतिभाविशेषेण समपीपदत् बहुळमिति प्राज्ञास्संगिरन्ते॥

न चायं परमप्रपन्नजनवत् भगवदेकनिष्ठो विमुखश्च लौकिकमहीपालाद्याश्रयणे इति मन्तव्यम् - महाकवित्वेन विद्वद्वरत्वेन च राजसभासु सन्माननामाप्तुं कृतप्रवेशत्वात्। उक्तं च स्वेनैव कटाक्षस्तबके 33 श्लोके, यथा -

शय्येत्थायं जननि! धनिनां वासं आसायमित्थं
गत्वा गत्वाप्यनुदिनमनुच्छिन्नतृष्णोद्गमोऽहम्।
हृद्यापां गामिव भवदवप्लोषशान्त्यै रमे! त्वां
हृद्यापाङ्गां मधुरिपुवशीकारविद्ये! प्रपद्ये॥

अत एवास्य कवेः पूर्वोक्तः द्वितीयश्रेणिनिवेशः॥

## कवेः देशकालादिकम्

## शास्त्रेषु वैदुष्यम् - पटीयसी काव्यनिर्माणप्रतिभा च

वरदाभ्युदयचम्पूप्रबन्धे कविरसौ स्वस्य चतुश्शास्त्रपारावार पारीणतां रसालंकार सरणिमादृत्य विवधकाव्यनिर्माणधुरीणतां च स्वयं इत्थं प्रकटयामास। यथा -

''व्यायामं गमितात्वलंकृतिपथे व्यापारिता व्याकृतौ,
तर्कारण्यगतागतैः श्रमवती तन्त्रांगणे नर्तिता।
त्रय्यद्रेः अधिरोपिता च शिखरं तर्षादियं भारती,
गम्भीरं गजभूधरेश्वरकथागंगाझरं गाहते।।'' इति।

अनल्पकल्पनाभरिते काव्यपथे इव व्याकरणे महाभाष्यस्फूर्तिं, तर्कशास्त्रे मणिसार खण्डनं, मीमांसायां विधित्रयपरित्राणं, विशिष्टाद्वैतवेदान्ते नयद्युमणिदीपिकां च, प्रणीत वानेषः स्वीयां चतुश्शास्त्रपारीणतां प्राचीकशत्। चम्पूग्रन्थाननेकान् नाटकानि च त्रिचतुराणि लक्ष्मीसहस्र श्रवणानन्दप्रभृतीनि च विविधस्तोत्राणि एतत्कर्तृकाणि पठतां अस्य ''श्लेषयमकचक्रवर्ति'' बिरुदं अन्वर्थमेवेति सहृदयानां चेतसि प्रतिभायात्। कल्पना-प्रवाहकरम्बितां विसृत्वरीं प्रतिभां अस्य साक्षात् अध्यक्षयद्भिः समकालिकैः पण्डितप्रवरैः अयमपि कविः सबहुमानं उपश्लोकित इति कंचित् मुक्तकश्लोकं श्लेषचमत्कृतं रसिका उदाहरन्ति - यथा -

''वेङ्कटाध्वरिणानेन जितौ गुरुफणीश्वरौ ।
धिषणाहीनतां प्राप्तौ जग्मतुर्जीवशेषताम्।।'' इति।

अत्र गुरुः बृहस्पतिः। तस्यैव अमरकोशानुसारात् जीव इति धिषण इत्यपि नामान्तरम्। अथ फणीश्वरः अनन्तः। स खलु अहीनां सर्पाणां इनः - प्रभुः। स एव शेष इत्यपि प्रथते। इमौ गुरुफणीश्वरौ प्रज्ञापाटवे वाग्वैभवे च अमुना वेङ्कटाध्वरिणा पराजितौ धिषणाहीनतां प्राप्तौ - बुद्धिहीनौ जातौ इति चटूक्तिः। कश्चित् धिषणः, अपरः अहीनश्च, जात इति वस्तुतत्वम्। तथाभूतौ च तौ जीवशेषतां प्राणावशिष्टताञ्च जग्मतुः इति अपरा चटूक्तिः। कश्चित् जीवनामकः, अपरः, शेषनामकश्च, अजायेतां इति वस्तुतत्वम्। एतेन प्रज्ञया बृहस्पतिं, वाचा आदिशेषमपि, अत्येति सोयमिति व्यञ्जितं भवति। सभङ्गाभङ्गश्लेषसंदर्भणे यमकानुप्रासादिशब्दचमत्कृतौ च पितृवत् असावपि

संभाव्यते ॥

अत्र काचित् किं वदन्ती। अयं वेङ्कटाध्वरिः कविः विविधराजपरिषत्सु सं
मनस्वी यशस्वी च यदा प्रथमान आसीत् - तदा असूयन्तः तत्कालवर्तिनो वि
अभ्युन्नतिमस्य नैवासहन्त। बहिष्कृतश्चासौ पित्रा सह तैर्विद्वद्वरैः उत्सवान्तरेषु
अत्रान्तरे एष अल्पायुः दुर्व्याधिना पीडितः पितरि जीवत्येव प्रमीत आसीत्। कुणपं
वोढुं श्मशानान्तिकन्नेतुमपि उक्तपूर्वामसूयां पुरस्कृत्य न कश्चिदपि ब्राह्मणः
तत्राजगाम। पामरास्तु जनाः तद्गृहमागत्य पितरमाश्वासयन्तः "पुत्रस्तव लौ
वैदिकेषु च सर्वकृत्येषु निर्वाहको ह्यासीत्" इति बहुथा प्रशशंसुः। तस्यामपि कष्ट
स पिता "नूनमेव मत्पुत्रः जीवन्नपि निर्वाहकः - अद्यमृतोपि निर्वाहक एवासीत्'
श्लेषोक्ति मुद्गरति स्म इति। इदमास्ताम्।

## लक्ष्मीसहस्रमुद्दिश्य

यद्यपि- संस्कृतवाङ्मये स्तुतिरूपेण प्रवृत्तानि काव्यानि लघूनि कानि
शतकात्मना पंचशतीरूपेण च प्रवृत्तानि वर्वृतति। तथापि सहस्रेण श्लेकौः अव
स्तोत्रेषु श्रीवेदान्तदेशिकोपज्ञं पादुकासहस्रमेव प्राथम्य मंचति। तदपि महाकविद्वयस्य
मध्यस्थकल्पितेन स्पर्धाविशेषेणैव नियते समये आशुधारया विनयमसृणस्व
श्रीदेशिकेनोपक्लुप्तमिति प्रथा जागर्ति। तेन कवितार्किकसिंहेन विनयमेव आविष्
सति भगवदनुग्रहे शतसहस्रिकामपि श्लोकानां प्रणेतुं प्रभूष्णुरस्मीति मनाक् अहंयापि
स्वोक्तौ क्वचन। आशुकवितायामपि क्वचिदेव पद्धतौ शब्दालङ्कार डम्बरं प्रदर्श्य प्रायस
सरळया शैल्या रसभावालङ्कारबन्धुरया भक्तिभूमभरितया च तत् स्तोत्रं निरमी
तदास्ताम् ॥

अनेन वेङ्कटाध्वरिणा तु लक्ष्मीसहस्रनिर्माणे श्रीवेदान्तदेशिकं अनुसिर
श्लेषादिशब्दालङ्काराणां, यमकानुप्रासादीनां च शब्दार्थचित्राणामेव स्वप्रतिभया प्र
प्रादर्शीति सहृदयानां सुगमम्। असौ विश्वगुणादर्शे तत्र तत्र गुणदोषपरीक्षायां विसृ
मात्सीर्यं भावावेशं अनिगृह्य विशृंखलवचोविन्यासः पुण्यक्षेत्राण्यपि कानिचिदुपाल
साधूनपि ब्राह्मणान् विजगर्हे। सजातीयानपि महाभागवतान् शिष्टान् 'यदशनं
व्यवायक्रिया' इति अश्लीलैर्भावैः विनिनिन्द। तत्पापफलत्वेन तस्मिन्नेव जन्मनि दु
रोगेण पीडितोसौ कविः तत्परिहाराय बहुमखं महालक्ष्मीं अनेन ...

तत् तथ्यं इति निरूपयितुं इह दशावतारस्तबके पद्यमेकं निदर्शनीयम्।

मात्स्यज्योतिषि मंदरक्षणपरेऽनंतोच्चहर्षावहे
हर्यास्यस्पृशि चारुवर्णिनि कृताशेषाधिकोपक्रिये
एणश्रीमुषि कामपालविभवे कृष्णे कलिध्वंसने
देवि! त्वद्दयितावतारदशकं ध्यायाम्यपांगे तव॥

अत्र हि श्लोके देव्याः कटाक्षे भगवदवतारदशकं दशभिर्विशेषणैः न्यबंधि। "मात्स्यज्योतिषि" इति प्रथमेन, मीनतौल्यं नयनयोः प्रकटितम्। तथा प्रथमावतारोपि। "मंदरक्षणपरे" इति द्वितीयेन तस्य मंदेषु दीनेषु रक्षणपरत्वं निरूपयता मंदरपर्वत पुरस्कारेण क्षीराब्धिं मथ्नतः अधश्च कूर्मरूपेण तं गिरिं वहतः भगवतो वैभवं उद्दिष्टम्। तृतीयेन "अनंतोच्चहर्षावहे" इति विशेषणेन अनंतस्य भगवतः उच्चहर्षावहत्वं प्रतिपादयता, अनंतायाः भूम्याः हिरण्याक्षेण पाताळं नीतायाः उद्धरणपूर्वकं हर्षापादनेन वराहावतारप्रक्रिया प्रत्यपादि। चतुर्थेन 'हर्यास्यं' भगवन्मुखमेव एकाग्रतया वीक्षते इति निबन्धनेन, देव्या अपांगे सिंहमुखावतारकथा निगुंभिता। पंचमेन 'चारुवर्णिनि' रुचिराञ्जनवर्ण निरूपणेन चारुवर्णित्वं सुन्दरवामनब्रह्मचारिवेषः उट्टंकितः - षष्ठेन "कृताशेषाधिकोपक्रिये" इत्यनेन अशेषाणामधिकमुपकारं इष्टफलप्रदानरूपं आविष्कृत्य अशेषक्षत्रियेषु कोपक्रियापि परशुरामकृता अभिवर्णिता। सप्तमेन "एण श्रीमुषि" इति मृगाक्षीत्वं आविष्कुर्वता, एणस्य मारीचस्य प्राणहंता रामः अभिवर्णितः। अष्टमेन आश्रितानां कामान् परिपालयति अपांगे "कामपालस्य" बलरामस्य वैभवं उट्टंकितम्। नवमेन "कृष्ण" पदेन नैल्यमिव कृष्णावतारोपि संजगृहे। अथ दशमं "कलिध्वंसने" इति विशेषणं कलिकालप्रभवं दुःखं ध्वंसयतीति अपांगस्य कल्किभगवदवतारस्य च समं अन्वेति, इत्थं सभंगाभंगश्लेष-चारिम्णा दशावतारवैभवसंग्रहः देव्या अपांगे उपश्लोकितः। ईदृशी चमत्कृतिः नैतदुपज्ञमात्रम्। अस्य कवेः पूर्वमेव अप्पयदीक्षितोपि कुवलयानन्दे "रत्याप्तप्रियलाञ्छने कठिनतावासे रसालिंगिते.... भाति श्रीरमणावतार दशकं बाले! भवत्याः स्तने" इति श्लोकमुदाहृत्य प्रक्रियामेनां प्रादीदृशत्।

अस्य लक्ष्मीसहस्रस्य व्याख्यानत्रयं प्राचीनैः अर्वाचीनैश्च कृतं उपलभ्यते। तत्र एकं बालबोधिनीनामकं श्रीनिवासपण्डितविरचितं मुद्रितं च काश्यां उपलभ्यते। अपरं च व्याख्यानद्वयं गूढार्थविवरणमिति बुधामोदिनी इति च अस्तीति प्रकृतमुद्रितव्याख्याने

व्याख्यानमेकं रसभावालंकारध्वनिविशेषविवरणप्रख्यं अभिनवं अमुद्रितपूर्वं सहृदयजन-सुकृतफलायितं अस्मद्दृष्टिपथं गतमास्ते। ग्रन्थरत्नमिदं मा स्म विलयं गच्छत् इत्यवधार्य नागरलिप्या अस्य प्रकटनं रसिकसम्मोदाय चिकीर्षितम्। अलंकारशास्त्रे, कोशपरिज्ञाने, छन्दोविवेचने, व्याकरणमवलंब्य सौशब्द्यपरीक्षणे च स्पृहयाळवः सहृदयाः व्युत्पित्सवोपि छात्राः एतदध्ययनेन भृशं उपकृता भविष्यन्तीति संभावयामः। यद्यपि एषा रत्नप्रकाशिका नाम्नी अभिनवव्याख्या पंचमस्तबकपर्यन्तमेव अस्माभिरुपलब्धा - इदानीं प्रकटिता भवति। अपरस्यापि भूयसो ग्रन्थभागस्य लाभाय प्रयतामहे।

## प्रकृत व्याख्यातृ परिचयः

यावदुपलम्भं व्याख्यामिमां सुन्दरैरान्ध्राक्षरैः विलिख्य रक्षितवान् गणित-शास्त्रोपन्यासकः **श्रीमान् पुल्लगुम्मि श्रीनिवासाचार्यमहोदयः** प्रथमतः कृतज्ञतामर्हति। अल्पेनापि स्वस्य संस्कृतपरिचयेन सावधानं प्रायो निर्दुष्टं च व्याख्यानमिदं विलिख्य रक्षितवान् स एव चतुश्शतपुटेनापि एकपुस्तकात्मना संग्रथ्य स्वसुहृदे आंग्लविद्याविशारदाय खम्मंनगरनिवासिने **श्री एन्.सीएच्. रामानुजाचार्याय**, एम.ए., न्यासमिव प्रत्तवान्। यस्य सकाशात् मुद्रणार्थं वयं अलभामहि। स एव श्रीनिवासाचार्यः व्याख्यातृ महाभागस्य चरितमपि संक्षेपेण **श्री कोदण्डरामाचार्याय** विदुषे खम्मंनगरवासिने यथा प्रोक्तवान् तदेवात्र तद्वचनैरेव विलिख्यते।

एते परकालमठाधीश्वराः कृष्णब्रह्मतन्त्रपरकालमुनीन्द्राः पूर्वाश्रमे कर्णाट जनपदस्य चित्रदुर्ग मण्डलान्तर्गते नवहोसदुर्गपुरे घनगिरि श्रीमदप्पलाचार्यसूरिमणेः शुचितमं वंशं अलंचक्रुः। तेषां जननी श्रीकृष्णांबा, पिता श्रीमांस्तातार्यः। विकारिवत्सरे (1838) क्रीस्त्वब्दे निजज्येष्ठमासे एतेषां जन्म। आबाल्यादेव प्रज्ञाविशेषशालिभिः एतैः काव्यनाटकग्रन्थाः, व्याख्यानग्रन्थाः, अलंकारमणिहारादि स्वतन्त्रग्रन्थाश्च शताधिका एव प्राणायिषत। तत्र षोडशवर्ष परिमिते वयस्येव परकालगुरु विजयाख्यः चम्पूप्रबन्धः प्रणीत इति ज्ञायते। तथा विद्यानगराधिपतेः तिरुमलदेवरायस्य प्रार्थनया रंगराजविलासः, गद्वालरामभूपालस्य अभ्यर्थनया कार्तिकोत्सवदीपिका आत्मकूरु सीतारामनृपालस्य याच्ञया श्रीनिवासविलासः इत्येवं विविधराजास्थानेषु सम्मानितैरेतैः सुबहूनि काव्यानि व्यरच्यंत। तत्र श्रीनिवास विलासकाव्यं शतावधानित्वेन प्रसिद्धाभ्यां तिरुपति वेङ्कटकविभ्यां आन्ध्रभाषायामनूदितमिति, श्रीमतामाचार्याणामेव शिष्येण राळ्ळपल्लि अनन्तकृष्णशर्मणा विद्वद्वरेण तदीयं समयामृतं नाम काव्यं आन्ध्रभाषायामनूदितमिति च ज्ञायते। एतैः पूर्वाश्रमे

छात्राणां पाठ्यग्रन्थत्वेन पूर्वं निर्णीतः। वनपर्तिसंस्थाने पूर्वं प्रकटितं श्रीमहाभागवतस्य वीरराघवीय व्याख्यानमपि एतैरेव परिष्कृत्य मुद्रणाय सज्जीकृतमिति वदन्ति। क्रीस्तुशक 1885 प्रभृति 1914 पर्यन्तं श्रीपरकालमठे आचार्यपदवीं निर्वहद्भि रमीभिः श्रीभाष्यादि ग्रन्थप्रवचनमुखेन मठानुबन्धिविविधाभ्युदयकर्मभिरपि सकलः कालः महता वैभवेन यापितः, षट्सप्ततितमे अब्दे अमी परमपदमलंचक्रुः।

## अथ व्याख्यानवैखरीमधिकृत्य

अलंकारशास्त्रानुबन्धिनि व्याकरणकोशादि विषये वा कूलंकषं वैदुष्यं बिभ्रतां एषां प्रतिभा व्याख्यानेस्मिन् प्रतिपदं प्रस्फुटा भवति। ग्रन्थविस्तरमपि अविगणय्य व्युत्पित्सुजन सौकर्याय तत्तद्विषयेषु समग्रा चर्चा अत्र व्याख्याने विधीयते। तद्वत् इतरव्याख्यातॄणां त्रयाणामपि निरूपणे बहुषु स्थलेषु अस्वारस्यं च विव्रियते। नानाविषयपरिज्ञानं समग्रमिह व्याख्याने जिज्ञासूनां लभ्यमिति बुध्यैव असमग्रमपीदं सम्मुद्र्य प्रचिकाशयिषितं अस्माभिः। एकामेव मातृकां अवलम्ब्य तत्रापि अव्युत्पन्नमतिना विलिखितां तां मुद्रयितुमुपक्रान्तवतां सावधानं परीक्षितवतां च बहुषु स्थलेषु शोधनमुखेन टिप्पणीनिवेशनमपि आवश्यकमासीत्। लेखकस्य करकृतापराधात् प्राप्तं वर्णादिव्यत्ययं तत्र तत्र समीकृत्य परिष्कर्तुं भूयानेव क्लेशोनुभूतः। एतदर्थं तत्तदनुबन्धिप्रामाणिकग्रन्थाश्च यथावसरं परिशीलिताः। अस्मत्कृत परिष्करणेषु दिङ्मात्रमुदाहरामः।

कारुण्यस्तबके एकोनविंशतिश्लोके "गलति कलितायासे श्वासे कफार्गळिते गळे" इत्यादौ श्रीदेशिकविरचितः रहस्यत्रयसारगतः तत्र निर्याणाधिकारे प्रथमं निर्दिष्टः "मनसि करणग्रामम्" इत्यादिश्लोक उदाहृतः। अत्रान्ते लेखकदोषात् "स्वविदविदुषोः इत्थं साधारणे सरणेर्मुखे" इति विलिखतमास्ते। अनन्वितं चेदं "साधारणी सरणिर्मुखे' इति वा 'साधारणी सरणेर्मुखैः' इति वा साधीयान् पाठः तत्र परिशीलनीयः। एवं वक्षस्स्थलावस्थानस्तबके तृतीये एकविंशश्लोकव्याख्यानावसरे "श्रीवत्साङ्कमिश्राश्चाहुः स्वरूपं स्वातन्त्र्यं भगवत इदं चन्द्रवदने" इत्यादिना श्रीगुणरत्नकोशगतः श्लोक उदाहृतः। वस्तुतस्तु स श्लोकः न श्रीवत्सचिह्नमिश्रकर्तृकः। तत्पुत्रप्रणीतं हि स्तोत्रं तत्। अतः श्रीवत्सचिह्नमिश्राणां सुताः पराशरभट्टार्याः इति तत्र लेखनीयं भवति। इतरे विषयाः टिप्पण्यामेव अधो निर्दिष्टाः परिशीलनायाः।

विषये, जगत्कारणत्वविषये, दयास्वरूपादिनिरूपणविषये, कैवल्यादिनिरूपण विषये च तत्र तत्र इतरसम्प्रदाय प्रतिक्षेपणं यद्विहितं तत्र प्रतिवक्तव्यत्वेपि अस्माभिरुदासितम्। मा भूत् वाद प्रतिवादवर्द्धनमनर्थकमिति। व्याख्यातॄणामाशयः स तथैव प्रकटनीयः इति च संभाव्य न तदुपरि टिप्पण्यां किंचित् निवेशितम्।

अत्र केचन वैयाकरणानां अवधानहेतवः विशेषविचाराः यथा - प्रथमस्तबके चतुर्विंशश्लोके द्वन्द्वशब्दार्थविचारः, चरणद्वन्द्वसमास विचारः ; प्रथमस्तबके त्रयोदशश्लोके चिरशब्दार्थविचारः ; प्रथमस्तबके चतुर्दशश्लोके हनुमत्-हनूमच्छब्दसाधुत्वविचारः ; कारुण्यस्तबके हरिणाङ्कसोदरि इत्यत्र अष्टमश्लोके सोदरीशब्दसाधुत्व विचारः; प्रथमस्तबके एकादशश्लोके पुरतश्शब्दविचारः ; प्रथमस्तबके द्वादशश्लोके "वियाताः वयं ग्रध्नीमः" इत्यत्र बहुवचनविचारः, तत्रैव श्लोके वैदिकजामिशब्दविचारः इत्येवमादयः बहवो विचाराः प्रशंसावहाः परिदृश्यन्ते।

अलंकारशास्त्रे श्लेषालङ्कारे, विशेष्यश्लेषे शब्दशक्तिमूलध्वनौ च विपुलं प्राचां मतं उपपाद्य स्वनिर्णयः सम्यगेतैः प्रकटितः, प्रतिश्लोकं तत्तदलङ्काराणां सलक्षणनिरूपणं संसृष्टिसाङ्कर्यादिप्रतिपादनं च हृद्यतमम्। अस्ति खलु व्यवस्था काचित् मूलश्लोककर्तरि संभावितानां दोषाणां परिहारेण व्याख्यातृभिः समर्थनं कार्यमिति। तां व्याख्यातृ सम्प्रदायमादृत्य एतैरपि बहुषु स्थलेषु मूलकर्ता वेङ्कटाध्वरिः परिरक्षितः। अशक्यत्वे पाठभेदसूचनेन मूलपरिवर्तनं च कृतम्। इदं प्रथमस्तबके एव एकोनविंश श्लोके क्रमभंग दोषमुद्भाव्य महाभाष्यकैयटाद्युदाहरणेन सुबहु विचार्य कथंचित् परिहृत्य च अंततः पाठभेदेन मूलपरिवर्तनात् अदोष इति समाहितम्। व्याख्यानं चेत्, ईदृशेन तेन भवितव्यम्- इति विमर्शकानां प्रशंसामर्हन्ती इयं व्याख्या अस्माभिः सत्सम्प्रदायपरिरक्षणसभाद्वारा प्रकटीक्रियते॥

श्लो :आयस्यन्नपि वार्द्धकेन, बहुथा सद्ग्रन्थसंशोधने
धन्योस्मीति मुदं भजामि विबुधस्वान्तैकसंप्रीणात्।
चित्ते चक्षुषि चाप्यपाटववशात् लब्धास्पदं मामकात्
दोषाणां निचयं निरस्य कृपया ग्रन्थं पठेयुर्बुधाः॥

इति विज्ञापयति

*"महामहोपाध्यायः"*

**श्री न-च- रघुनाथाचार्यः**

# लक्ष्मीसहस्रम् - प्रथमस्तबकः

## (वेङ्कटाध्वरिकृतिः - सव्याख्यानम्)

**मू.** **लक्ष्मीचरणराजीव - लाक्षालक्षितवक्षसे।**
**विश्वसर्गादिलीलाय वेंकटब्रह्मणे नमः॥**

श्रीरञ्जनगिरिनायक - वक्षस्स्थलनीलसौधदीपशिखा।
गाढतमानि तमांसि, व्यपनयतां संपदं च नस्तनुताम्॥

आ भगवत्तश्श्रुतिमुखविदिततरां गुरुपरंपरां विनुमः।
यच्चरणशरणवरणाल्लक्ष्मीः प्रचुरागसोऽपि नः पाति॥

नीरन्ध्रशुभगुणाढ्यं दूरं वेधस्य धूनितत्रासम्।
स्वैरं हृदि विलसतु मे सारं तन्निगममौळिगुरुरत्नम्॥

आवासयामि हृदये श्रीवासब्रह्मतन्त्रपरकालम्।
आवासं सुगुणानां श्रीवासकृपैकनिलयमाचार्यम्॥

श्रीवास देशिकेन्द्र श्री-ब्रह्मतन्त्रकलिद्विषः।
आचार्यस्य पदद्वन्द्वमप्रतिद्वन्द्वमाश्रये॥

सकलबुधाळ्यग्रसरं सरसगुणश्लाघ्यचर्यमाचार्यम्।
संचिन्तयेऽन्तरङ्गे रङ्गेन्द्रब्रह्मतन्त्रकलिमथनम्॥

चिरन्तनसरस्वतीचिकुरबन्धनाडिंधम
स्स्फुरन्निखिलसद्गुणः कलितनूत्न दुर्गस्थितिः
सुरद्रुसुममञ्जरी मधुझरी लसन्माधुरी
धुरीण फणितिश्श्रियं दिशतु तातसूरिर्गुरुः॥

श्रीवासब्रह्मतन्त्राग्रिमपदकलिजिद्देशिकेन्द्रानघांघ्रि
द्वन्द्वाब्जानुग्रहात्तप्रतिपदविविधग्रन्थ निर्माणशक्तिः।

पाश्चात्यश्रीवास-व्याख्यामलिनस्य मम विवृतिरनघा
लक्ष्मीसहस्रनाम्नो रत्नस्यैषा प्रकाशिका भूयात् ॥

नालंकारान्न च रसगुणान्नोपपत्ती र्न शब्द-
स्वारस्याद्यप्यलिखदिति यत्पश्चिमोऽत्रैतदास्ताम् ।
टीकाव्याजाद्यदयमतनोन्मूल मेवान्यरूपं
भिन्नैः पाठैस्स्वमतिकलितैस्तद्विधून्वन्विवृण्वे ॥

कोशान् सूत्राण्यलंकारान् रीतवृत्तिरसादिकम् ॥
प्रब्रवीमि प्रयत्नेन यथास्थानं यथामति ॥

न मदीयव्याख्यानं यद्यपि विवृणोति यावदिष्टार्थम् ।
तदपि बुधा आददते- यदुपनतं तेन ते हि तुष्यन्ति ॥

प्रतीच्य व्याख्यानापरिचयवतोऽहं बुधमणी
नियन्तं याचेऽर्थं सविनयमुदस्ताञ्जलिभरः ।
मदुक्तव्याख्याने तदुचितमिति क्वापि भवतां
भ्रमोऽल्पो वा माभूद्यदि सुकृतलेशो मम भवेत् ॥

पाश्चात्य व्याख्यानादसाररूपादिहाल्पसारापि ।
अनशनतः कदशनमपि वरमिति मद्विवृतिरीक्ष्यतां सद्भिः ॥

वीक्ष्याद्यन्तममत्सरात्कृतिमिमामालोच्य पूर्वोत्तरं
विद्वांसो निगदन्तु दूषण मथ प्रेम्णाऽपि वा भूषणम् ।
मात्सर्यादनिरीक्ष्य शास्त्रपदवीमुल्लंघ्य चेद्दूषये
द्यः कश्चित्सहसा कुतस्सहृदया गृह्णन्तु तत्कोविदाः

अभ्यस्तैकैकविद्याः क्वचन मम कृतिं वीक्ष्य हृष्यन्तु मा वा
तत्तादृक् सर्वविद्यापरिचयनिपुणा हन्त! हृष्यन्त्यवश्यम् ।
प्रायो मात्सर्यमेषां न खलु विधिवशाद्यद्यमीषामपि स्या
त्किंकार्यं, श्रीहयस्यो जयति गुणनिधिः सर्वविद्यानिषद्या ॥

श्रीरस्मिन्नायिका भगवती, शृंगारनामा रसो-
मुख्योऽन्यैरपि वीरशांतकरुणप्रष्ठै रसैरंगवान्।
पञ्चाङ्गी[1] सुभगा वृषाचलपतौ श्रीशे प्रपत्तिः फलं
धन्योऽयं सुकविर्वयं च कृतिनो व्याख्यानतस्तद्गिराम्॥ 18

अतिमितमतिरिह जल्पति- यदयं व्याख्यापदेशतः कृष्णः।
सदसद्वा सोढव्यं- तत्सर्वं विषयगौरवात्सद्भिः॥ 19

अथ तत्र भवान् सकल कविकुल मूर्धन्यस्सर्वतन्त्रस्वतन्त्रप्रतिभाविशेष श्श्रीमदात्रेयवेंकटाध्वरिकविः- "प्रकाव्यमुशनेव ब्रुवाणो देवो देवानां जनिमाविवक्ति। महिव्रतश्शुचिबन्धुः पावकः पदा वराहो अभ्येति रेभन्॥" "अभिप्रियाणि काव्या विश्वा चक्षाणो अर्हति- ध्रुवासो अस्य कीरयो जनासः" इत्यादिश्रुतिभिः, "अदोषं सगुणं काव्यमलंकारैरलंकृतम्। रसान्वितं कविः कुर्वन्कीर्तिं प्रीतिं च विन्दति" इत्यादिस्मृतिभिश्चानुगृहीतैः- "काव्यं यशसेऽर्थकृते" इत्याद्यालंकारिकवचनैः काव्यस्यानेकश्रेयस्साधनतां- "तं धीरासः कवय उन्नयन्ति"- "स्वरूपरूपविभवगुणकर्माणि शार्ङ्गिणः- व्याचक्षीत निबध्नीयाच्छृणुयाद्विलिखेत्पठेत्॥ संकीर्तयेज्जगन्नाथं वेदं वापि समीरये"दित्यादि श्रुतिस्मृतिरूपविशेषशास्त्रैस्सत्काव्यकर्तव्यतावबोधकैः, "काव्यालापांश्च वर्जये"दिति सामान्यनिषेधस्य कादम्बर्याद्यसत्काव्यपरतां च निर्धारयन्नपवर्ग-पर्यन्तसमग्रसंपद्विश्राणनबद्धदीक्षश्रीमहालक्ष्मीविषयकं लक्ष्मीसहस्राख्यं प्रबन्धमारभमाणो निरन्तरभगवदनुसन्धानादिसंप्राप्तान्तरायविरहोपि व्याख्यातृ- श्रोत्रध्येतॄणां निरन्तरायव्याख्याश्रवणाध्ययनप्रचयगमनार्थं "मंगलादीनि मंगलमध्यानि मंगलान्तानि शास्त्राणि प्रथन्त" इत्यादि भगवद्भाष्यकार[2]वचनं- "आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुख"मित्याशीराद्यन्यतमस्य प्रबन्धमुख लक्षणत्वप्रतिपादकमाचार्य दण्डिवाक्यं च प्रमाणयन्- शिष्टाचारप्राप्तं तुष्टूषिताया निरतिशयैश्वर्यवितरण धुरीणाया जगज्जनन्या अपि "श्रियश्श्रीश्च भवेदग्र्ये"त्याद्युक्तरीत्या अतिशयाधायकस्य स्वकुलदैवतस्य श्रीनिवासस्य परब्रह्मणः प्रणामरूपं मंगलमादौ शिष्यशिक्षायै निबध्नाति।

---

1. पंचांगी सुभगा - इति प्रपत्तेर्विशेषणम्। "आनुकूलस्य संकल्पः- प्रातिकूल्यस्य वर्जनम्। रक्षिष्यतीति

भोग्यत्व मंगलत्वानि- तदनुबन्धेन लाक्षारसस्य रागातिशयश्च व्यज्यन्ते ॥ तयोः- लाक्षा- लाक्षाशब्दोऽत्र तद्रसपरः - अन्यथा भगवदुरसस्तल्लक्षितत्वायोगात्। अत एव "भवती- पाद लाक्षारसांक" मित्याचार्याः। तया अविदारिताख्यरतिबन्धलग्नया- लक्षितं चिह्नितं- वक्षो-यस्य-तस्मै। अनेन भगवतो लक्ष्मीविभ्रमवैभवक्रीतत्वं तद्वक्षसश्च मुद्राक्षर वद्व्यतिषक्तपरिस्फुटकमलाचरणकमलतल विलसित हल-कुलिश-जलज-मकरादि सर्वेश्वरत्व व्यञ्जकरेखाविन्यासवत्त्वं- लाक्षारस[1] चिह्न-भगवदुरसोर्वर्णवैसादृश्याद्वान्नु बिम्बान्तरिक्षयोरिव लोकोत्तरः कोपि परभागश्च प्रतीयन्ते ॥ अविदारितबन्धलक्षणं तु- "नारी स्वपादौ दयितस्य वक्षस्थितौ समालिंग्य करद्वयेन। किंचिन्नतोरू रमते तदासौ प्रोक्तो मुनीन्द्रैरविदारिताख्य" इति ॥

विश्वस्य जगतः - सर्गःसृष्टिः - आदिर्येषाम् तानि- "जन्माद्यस्य यत" इत्यत्रेव तद्गुण संविज्ञानबहुव्रीहिः - आदिशब्देन स्थितिलययोर्ग्रहणम्। तान्येव लीला क्रीडा यस्य तथोक्ताय- लीलाशब्देन भगवतः परिपूर्णत्वानन्यप्रेर्यत्व स्वच्छन्दचेष्टितत्वादिक मभिप्रेतम्। अनेन "यतो वा इमानि भूतानि जायन्ते- येन जातानि जीवन्ति- यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व- तद्ब्रह्म" - "क्रीडार्थं[2] सृष्टिरित्येके" - "जन्माद्यस्य यतः" - "लोकोवत्तु लीलाकैवल्यं" - "अखिलभुवनजन्मस्थेमभंगादिलीले" - इति श्रुति सूत्र श्रीभाष्योपक्रम्म स्थिता अर्थाः प्रत्यभिज्ञाप्यन्ते। वेंकटे, वेंकटस्य वा, ब्रह्म वेंकटब्रह्म- तस्मै- 'सप्तमी' इति- योगविभागात्संबन्धसामान्यषष्ठ्या वा समासः- वेंकटगिरिस्थिताय- "बृहति बृंहयति तस्मादुच्यते परं ब्रह्म- बृहत्वाद्बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते" इति श्रुतिस्मृति निर्वचनानुसारात्स्वरूपेण गुणैश्च निरतिशयबृहत्त्वयोगिवस्तुने- पुरुषोत्तमायेत्यर्थः- "ब्रह्मशब्देन च स्वभावतो निरस्तनिखिलदोषोऽनवधिकातिशयासंख्येय कल्याणगुणगणः

1. लाक्षारसचिह्नस्य - भगवदुरसश्च - इतिद्वंद्वः ॥
2. इदं मांडूक्योपरि गौडपादस्य कारिकावाक्यम्। न तु मांडूक्यमन्त्रगतम्। "अनादिमायया सुप्तः..." इत्यादि कारिकावाक्ये इव "क्रीडार्थ" मित्यादि वाक्येपि श्रुतिवाक्यत्वभ्रमः सांकर्यात् प्राचाम्-अतो विमृश्यमिदम् ॥

सप्रोक्त-कटस्तस्य तु दाहकः। पापानां दाहकत्वाद्धि वेंकटाद्रिरितीयते इति ब्रह्माण्डस्थ नाम निर्वचनात्- "वेंकटाद्रिसमं स्थानं ब्रह्माण्डे नास्ति किंचन। वेंकटेशसमो देवो न भूतो न भविष्यती"ति पुराणान्तरेषु, गिरेर्वेंकटत्वेन श्रीनिवासस्य वेंकटेशत्वेनैव प्रसिद्धेश्च, वेंकटशब्देन परब्रह्माभिधानायोगात्- न हि "गिरिगजो-मलयमारुत" इत्युक्ते गिर्याख्यो गजो मलयाख्यो मारुत इति कश्चिदप्यनुन्मत्तो जानाति- किंतु तदधिकरणकत्वेन तत्संबन्धित्वेनैव वा। न च पापदाहकत्वमेव निमित्तीकृत्य पर्वत इव ब्रह्मण्यपि वेंकटशब्दः कुतो न प्रवर्ततामिति प्रत्यवस्थातव्यं- प्रस्तुत पर्वत एवास्य योगरूढत्वादसंभवन्त्या मनुपपत्तौ योगरूढशब्दानां केवलयोगार्थपरत्ववर्णनस्यान्याय्यत्वात्। तथात्वे पंकजादिशब्दानां भेकादिष्वपि निर्विशंकप्रयोगापत्तेः। वेंकटेश इत्यत्रार्श आद्यजन्ततामाश्रित्य सामानाधिकरण्य निर्वाहक्लेशस्य स्वारसिकोपपत्तिसंभवेऽनुचितत्वाच्चेति दिक्॥

यद्यप्यत्र क्रियापदानुपादानात्- "क्रियापदेन रहितमशरीरं तदुच्यत' इत्युक्ताशरीराख्य काव्यदोषावभासात् अस्य पद्यस्य दुष्टता। आह च दण्डी "तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथंचन। स्याद्वपुस्सुन्दरमपि श्वित्रेणैकेन दुर्भग"मिति। तथाप्यस्त्विति क्रियापदाध्याहाराद-दोषः - तदाह वामनः - "न प्रसिद्धे क्रियाध्याहारदोष" इति। युक्तं चैतत्- "अस्तिर्भवन्ति परोऽप्रयुज्यमानोप्यस्ती"ति महाभाष्यात्- यद्यपि "भवन्तीति लटस्संज्ञा प्राचा"मित्युक्तम्। तथापि कालविशेषप्रतिपत्ते रौचित्येन कर्तव्यत्वात्तस्यैव सर्वलकारोपलक्षणता स्वीक्रियते महाकविभिरित्यवधेयम्।

अत्र वेंकटब्रह्मण इति- लक्ष्मीचरणेत्यादि च पदं श्रीमद्भाष्यमंगळ श्लोकस्थस्य "ब्रह्मणि श्रीनिवासे" इति पदद्वयस्य प्रत्यभिज्ञापकम्। विश्वसर्गादिलीलायेति कारणत्वाभिधायकं पदं च, "कारणं तु ध्येय" इति श्रुत्युक्तक्रमेणास्यैव ध्येयत्वं सूचयति। किंचात्र सर्वशाखाप्रत्ययन्यायेन सर्ववेदान्तप्रत्ययन्यायेन च सर्वेषां कारणवाक्यानामेक-विषयत्वावश्यं भावे सति "छागो वा मन्त्रवर्णा"दिति न्यायेन सामान्य शब्दानां सति विशेषे तत्पर्यवसानस्यावश्यकत्वात्पशुशब्दस्य च्छाग इव "सदेव सोम्येदमग्र आसीदि"ति कारणवाक्यस्थसच्छब्दस्य बृहदबृहत्साधारणत्वात् "ब्रह्म वा इदमग्र आसी"दिति

ब्रह्मशब्दोक्तविशेषे पर्यवसाने कृते, तस्य चेतनाचेतनसाधारणत्वेन ''आत्मा वा इदमेक एवाग्र आसी''दिति चेतनैकान्तात्मशब्दोक्तविशेषे पर्यवसानं वक्तव्यम्-एवमुत्तरोत्तरस्मिन् पर्यवसाने कर्तव्ये सत्यात्मशब्दस्य जीवपरसाधारणतया कारणत्वेन शंकितशिवादि शब्दाभिहितदेवताविशेषपर्यवसानसंभावनायां, ''श्वश्श्रेयसं शिवं भद्र''मित्यनुशासनेन ''शिवास्ते सन्तु पन्थानः-शिवं कर्मास्तु-शिवो भदप्रजाभ्य'' इत्यादि लौकिक वैदिक प्रयोगानुसारेण शिवशब्दस्य मंगळादिसाधारण्यावगमात् ''शाश्वतगं शिवमच्युतम्-कृष्णस्साक्षात्स्वयं शिवः'' इत्यादौ विष्णावपि प्रयोगदर्शनाच्च सदादिशब्दतुल्यतया न तेन शब्देन पर्यवसानं युक्तम्। शंभुशब्दोपि ''शंभुर्धातृहरीशेष्वि''त्यनुशासनात् ''इति नारायणश्शंभु''रित्यादि प्रयोगाच्च साधारण एवेति न तेनापि निर्णयस्सुशकः। ''पाति यस्मात्प्रजास्सर्वाः प्रजापतिरितीरितः - हिरण्यमस्य गर्भेभूद्धिरण्यस्यापि गर्भजः - तस्माद्धिरण्यगर्भोऽसा''वित्यादि निर्वचनात् - ''सर्वश्शर्वश्शिवस्स्थाणुः - स्वयंभूः शंभुरादित्यः - ईशानः प्राणदः प्राणो ज्येष्ठश्रेष्ठः प्रजापतिः - हिरण्यगर्भो भूगर्भः'' इत्यादिना सहस्रनाममध्ये कारणवाक्यस्थशिवादिशब्दपाठाच्च सर्वेप्येते साधारणा एवेति ज्ञायन्ते। नारायण शब्दस्त्वन्यत्राप्रयुक्तत्वात्, ''ऋते नारायणादीनि नामानि पुरुषोत्तमः। प्रादादन्यत्र भगवान्भजते वै स्वकं पदम्। न तु नारायणादीनां नाम्नामन्यत्र संभवः - अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्तित'' इति स्कान्दवामनपुराणकण्ठोक्तेश्च विशेषशब्दमूर्धन्यः सन्नसाधारण इति तेनैव सर्वेषामपि शब्दानां तद्वाच्ये पर्यवसानं युक्तम्। यदाहुराचार्याः - ''निस्साधारण्य नारायणपदविषये निश्चयं यान्त्यबाधे-सद्ब्रह्माद्यास्समानप्रकरणपठिताः शंकितान्यार्थशब्दा'' इति। ततश्च ''यतो वा इमानि भूतानी''त्यादिषु श्रुतं कारणत्वं ''नारायणादेव सर्वाणि भूतानि समुत्पद्यन्त'' इत्यादि श्रुतमनन्यसाधारणं नारायणशब्दमादाय तदभिधेये श्रियःपत्यौ विश्राम्यतीति सूचयितुं तदसाधारणं ''ह्रीश्च ते लक्ष्मीश्च पत्न्यौ''विति श्रुतं लक्ष्मीपतित्वं, लक्ष्मीचरणेत्यादि विशेषणेन प्रकाशितमिति वेदितव्यम्। अत्र ''अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा''- ''वेदान्तास्तत्त्वचिन्तां मुरभिदुरसि यत्पाद चिह्नैस्तरन्ति''- ''यत्संकल्पाद्भवति कमले! यस्य देहिन्यमीषां जन्मस्थेमप्रळयरचना जङ्गमाजङ्गमानाम्। तत्कल्याणं किमपि यमिनामेक लक्ष्यं समाधौ पूर्णं तेजस्स्फुरति भवतीपादलाक्षारसाङ्क''मित्याद्युक्तरीत्या लक्ष्मीवल्लभत्वेनैवैतस्यैतादृशं माहात्म्यमनीदृशां विधिशिवादीनां [illegible]

तदनुस्मरणसमनन्तरजनित रोमोद्गमानन्दबाष्पमुखविकासादिभिरनुभावैः - तद्विषय चिन्तास्मरण हर्षादिभिरनुमीयमानैर्व्यभिचारिभिश्च परिपोषितः कवेस्सर्वात्मना श्रीनिवास विषयक भक्तिभावोऽभिव्यज्यत इत्यसंलक्ष्यक्रमो भावध्वनिः - असंलक्ष्यकमव्यंग्यस्तु रसादि ध्वनिर्भवति। तदुक्तं शृंगारतिलके "रसभाव तदाभास भावशान्त्यादिरक्रमः - भिन्नो रसाद्यलंकारादलंकार्यतया स्थित" इति। एवमत्र श्लोके वस्त्वलंकार भावभेदेन त्रिधा ध्वनिरिति ध्वनिप्रस्थान रसिकानां संभ्रमः - रतेरेव भक्तित्वं - रतिस्तु विषयभेदाद्बहुधा भवति- देव गुर्वादि विषया भक्तिः- कान्ता विषया रतिरिति निर्णीतत्वात्। अत एवोत्तमकाव्यत्वमस्य- "वाच्यातिशायि व्यंग्यं यदुत्तमं तद्ध्वनिश्च स" इति लक्षणात्।

अलंकारमात्ररसिकानां संभ्रमस्तु - अत्र लक्ष्मीरूपेणालम्बन विभावेन-चरणराजीव शब्दाभिव्यंजितेन-"उद्दीपनं चतुर्धा स्यादालम्बन समाश्रयाः-गुणचेष्टालंकृतयस्तटस्थाश्चेति भेदतः- यौवनं रूपलावण्ये सौन्दर्यमभिरूपता-मार्दवं सौकुमार्यं चेत्यालम्बनगता गुणा" इत्याद्युक्तेन यौवन सौकुमार्यादि गुणरूपेण लाक्षाशब्दोपलक्षितेन "चतुर्थाऽलंकृतिर्वासो भूषामाल्यानुलेपनै" रित्युक्त लक्षणालंकृतिरूपेण- लक्षितवक्षश्शब्दप्रतीयमानेन रतिवैदग्ध्य प्रकाशन प्रौढिमादिचेष्टारूपेण- निष्प्रत्यूहविस्रम्भविहारानुमितेन- "प्रासादगर्भसंगीत क्रीडाद्रिसरिदादय" इत्याद्युक्तेन यथा संभव तटस्थरूपेण चोद्दीपन विभावेन- अनुमीयमानैः- भ्रूविक्षेपस्मितादिभिरनुभावैः-स्तम्भप्रलयरोमाश्रादिभिस्सात्त्विकभावैः मदगर्वधृति हर्षौत्सुक्यचापलादिभिर्व्यभिचारिभावैश्च भगवद्गतप्रेमरूपरतेः स्थायिनः परिपोषणात्- "अनुकूलौ निषेवेते यत्रान्योन्यं विलासिनौ। दर्शन स्पर्शनादीनि स संभोग उदाहृत" इत्युक्त लक्षणस्संभोग शृंगारो व्यज्यते। तस्य च कविगत श्रीनिवास विषयक रतिभावांगत्वाद्रसव-दलंकारः। तदुक्तम्, "विभावानुभाव व्यभिचारिभिरभिव्यञ्जितो रतिहास शोकादिश्चित्तवृत्ति विशेषो रस स्स यत्रापरस्यांगं भवति तत्र रसवदलंकार" इति। किंच, लक्ष्मीचरणेत्यस्य विशेषणगत्या वेंकटब्रह्मणो विश्वसर्गादिलीलत्वहेतुत्वात्पदार्थहेतुकं काव्यलिंगमलंकारः। "हेतोर्वाक्यपदार्थत्वे काव्यलिंगमलंकृति" रिति लक्षणात्। लक्ष्मीचरणेत्यस्य विशेषणस्य ब्रह्मशब्दित नारायणपरत्व वर्णनाभिप्रायगर्भतया परिकरालंकारः। "अलंकारः परिकरस्साभिप्राये विशेषणे" इति लक्षणात्- चरणराजीवेत्यत्र राजीवस्य विषयिणस्स्वतो भगवद्वक्षसि लाक्षारस चिह्नकरणानुपयोगितया लक्ष्मीचरणलक्षण विषयात्मना परिणत्यपेक्षणात् परिणामालंकारः - "परिणामः क्रियार्थश्चेद्विषयी विषयात्मने" ति

साधकबाधकान्यतर प्रमाणानुपलम्भात्संदेह सकरः। अनेक व्यंजन पुनरावृत्तव्यृत्त्यनुप्रासः शब्दालंकारः - तदुक्तं "एकद्विप्रभृतीनां तु व्यंजनानां यदा भवेत्। पुनरुक्ति रसौ नाम वृत्त्यनुप्रास इष्यत" इति- उक्तरसवदलंकारस्य काव्यलिंगादीनां च स्फुटावगम्यमान भेदत्वात् संसृष्टिः- "तिलतण्डुलसंश्लेषन्यायाद्यत्र परस्परम्। संश्लिष्येयुरलंकारास्सा संसृष्टिर्निगद्यत" इति लक्षणात्- काव्यलिंगपरिकरयोर्वृत्त्यनुप्रासस्य चैकवाचकानुप्रवेश लक्षणस्संकरः- अस्य चोपमारूपकसंदेहसंकरस्य च संसृष्टिरिति। उक्तालंकारोपस्कृत उक्तभावध्वनिरिति तु तत्त्वम्। एतेन चरणराजीवेत्यत्र रूपकालंकारं वदन्पाश्चात्यः प्रतिक्षिप्तः।

नन्वत्रोक्तरीत्या शृंगाररसस्य भक्तिभावांगत्वेनापरांगत्वात् "अगूढमपरस्यांग" मित्याद्युक्त प्रक्रिययाऽस्य गुणीभूत व्यंग्यत्वान्मध्यमकाव्यत्वमेव स्यात्कथमुत्तमकाव्यतोक्ति रिति चेत्सत्यमेवम्- अथापि कविसंरम्भस्यात्र भक्तिभावाभिव्यक्तावेवौत्कट्येन विश्रान्तेः उत्तमकाव्यत्वम्- यत्र तु मुख्यतात्पर्य विषयस्यैव रसादेरपरांगत्वं तत्र गुणीभूत व्यंग्यत्वमित्य विरोधः- अत एव काव्यप्रकाशिकायां- "यद्यपि स नास्ति विषयो यत्र ध्वनिगुणीभूत व्यंग्ययोस्स्वप्रभेदादिभिः संकरस्संसृष्टिर्वा नास्ति- तथापि प्राधान्येन व्यपदेशा भवन्तीति क्वचित्केनचिद् व्यवहार" इत्युक्तं संगच्छते। अत्र कमलाकरः- "ननु अयं स रशने"त्यादौ करुणस्य प्राधान्याद्गुणीभूत व्यंग्यत्वाभावात्कथं मध्यमकाव्यत्वमत आह। यद्यपीति। स्वभेदैः गुणीभूतव्यंग्यभेदैः- आदिपदाद्विजातीयभेदैरंगांगित्वे संकरः- द्वयोः प्राधान्ये संसृष्टिः- प्राधान्यंच चमत्कारकारित्वं तात्पर्यविषयत्वं वा- कवेश्शृंगारे तात्पर्ये तस्य गुणत्वान्मध्यमकाव्यत्वं- करुणे तात्पर्ये तु मुख्यध्वनित्व मेवेत्याशय" इति। अथ यदि शृंगार एव कवेस्तात्पर्यमिति कश्चिदागृह्णीयात्तदा तस्यात्र भक्तिभाव गुणत्वेन गुणीभूत व्यंग्यत्वादस्तु वा मध्यमकाव्यत्वम्। ननूक्तयोः तयोः कथं संकर इति चेदुपधेय संकरेऽप्युपाधे रसंकरादिति ध्येयम्।

अत्र समासभूयस्त्वोद्भट पदत्वाभ्यां गौडीया रीतिः- तदुक्तं- "ओजः कान्ति गुणोपेता गौडीयारीति रिष्यत" इति। ओजस्समासभूयस्त्वं- कान्तिरुद्भटपदत्वंवृत्तिस्तु मध्यमकैशिकी- "मृद्वर्थेऽप्यनतिप्रौढबन्धा मध्यमाकैशिकी"त्युक्तेः-न चास्याश्शृंगाररस विरोधित्वं शंक्यम्- "मध्यमारभटी त्वन्या तथा मध्यमकैशिकी- वृत्ती इमे उभे सर्वरस साधारणे मते" इत्यस्यास्सर्वरस साधारण्यस्योक्तत्वात्-अत्र लक्ष्मीचेत्युपक्रमे तगणस्य "तगणोऽन्त्य

मतान्तरे शुभफलदायित्वेपि मध्यमफलदत्वेनैव पर्यवसानात्प्रयोगानर्हत्वेऽपि, "सौम्यग्रहाधिष्ठितत्वात्तगणोऽपिच शोभनः- मित्रामित्रगणैस्साकं शुभाशुभ फलप्रद" इति साहित्य चन्द्रोदयोक्तेस्सामान्यनिषेधस्य गुरुशत्रुभूतशुक्रदेवताकयगणान्वित तगण विषयतया व्यवस्थापितत्वाद्गुरुदेवताकतगणसाक्षाद्दुष्टफलकत्वकथनानौचित्यात् इहच तगणस्य शनिदेवताकसगणानुसृतत्वेनामित्र गणयोगाभावाच्च शुभफलदत्वमेवेति वक्तुं युक्तम् । वस्तुतस्तु "देवतावाचकाश्शब्दा ये च भद्रादि वाचकाः- ते सर्वे नैव निन्द्यास्स्युर्लिपितो गणतोऽपि वे"त्युक्ते- स्सामान्यदेवतादि वाचकानां शब्दानामेवानिन्द्यत्वे सिद्धे सर्वमंगळमांगळ्यभूत श्रीवाचकलक्ष्मीशब्दप्रयोगेण गुणवर्णादि सर्वदोषाणामपि दूरोत्सारितत्वं कैमुतिक न्यायसिद्धम्। अत एव "श्रीकारश्शुभदः प्रोक्त" इत्युपक्रम्य "एवं श्रीवाचकाश्शब्दास्सर्वे सर्वशुभप्रदाः- गणवर्णविचारोऽत्र न कर्तव्यः कदाचन । मंगळार्थाभिधाने वा देवनामांकने पि वा। गणो न दूष्यो वर्णो वा देवताधिष्ठिताश्मव"दित्यादि स्मृतयश्च संगच्छन्ते। एतेनैव "लकारो जडतां धत्त" इत्यलंकारमुक्तावळ्यां "लो जाड्य"कृदिति लक्षणदीपिकादावप्युक्तेरादौ लवर्णप्रयोगानुचितत्व संभावनापि प्रतिक्षिप्ता । वृत्तमानुष्टुभं पथ्यावक्त्रम्। "युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तित"मिति लक्षणात् । एवं प्रतिस्तबकमादावानुष्टुभमन्ते त्वार्याभेद इति प्रायशोऽत्र प्रबन्धे पादुकासहस्र इव द्रष्टव्यम् ।

**मू. असदृशमरुणाब्जदृशं - प्रस्फीतपयोधरस्फुरन्मूर्तिम्।**
**मनसि दधीमहि सततं - मातारं मातरं च लोकानाम्॥ 2**

एवं पूर्वश्लोके लक्ष्मीश्रीनिवासयोरुभयोर्जगदीश्वरत्वसाम्येपि- "भवती पादलाक्षारसांक"मिति निर्देशानुसारेण लक्ष्म्याश्शाब्दप्राधान्य निर्देशः कृतः- संप्रति "त्वं माता सर्वलोकानां देवदेवो हरिः पिते"त्याद्युक्तप्रकारेणोभयोरखिल जगन्निरूपित मातापितृत्वेन समप्रधानभावमनुसंधायोभावपि ध्येयत्वेनानुसंधत्ते। असदृशमिति । भगवत्पक्षे समान इव पश्यतीति सदृशः- समान इव ज्ञानविषयो भवतीत्यर्थः- पश्यतीति कर्मकर्तरि व्युत्पत्तिः- "तमिवेमं पश्यन्ति जनास्स इवायं पश्यति ज्ञानविषयो भवती"ति भाष्ये तादृशशब्दस्य व्युत्पादितत्वात्- "त्यदादिषु दृशोऽनालोचने कञ्च" इत्यत्र "समानान्ययोश्चेति वाच्य"मिति वार्तिकेन दृशेः कञ्प्रत्यये "दृग्दृशवतुष्वि"ति समान शब्दस्य सभावः- अविद्यमानस्सदृशस्समानो यस्य तं तथोक्तं- "नञोऽस्त्यर्थानां वोत्तर

अत्र ''न तत्समश्चाभ्यधिकश्च दृश्यत'' इति श्रुतिः - ''न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य'' इति स्मृतिः- ''सर्वोत्कृष्टा सर्वमयी- अनौपम्या निर्विकल्पे''त्यादि ब्राह्मादि पुराण वचनानि चानुसंधेयानि- अरुणो भानुः- अब्जश्चन्द्रश्च दृशौ यस्य तं तथोक्तं- अरुणस्य ग्रहपतित्वेन दक्षिणनेत्रत्वेन चाभ्यर्हितत्वादल्पाच्तराजाद्यदन्तादप्यब्ज शब्दादरुण-शब्दस्यैव ''अभ्यर्हितं चे''त्यनेन पूर्वनिपातः- ''अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ''विति निरंकुश स्वतन्त्रश्रुत्युक्तक्रमातिक्रमश्च- न चाल्पाच्त्वादब्ज शब्दस्यैवा''ल्पाच्तर''मित्यनेन पूर्वनिपातः कुतो न स्यादिति शंकनीयम्- ''वासुदेवार्जुनाभ्यां वुन्नि''ति निर्देशादप्रतिषेधेन सर्वतोऽभ्यर्हितं पूर्वमिति ज्ञापितत्वात्- पक्षे- अरुणे अव्यक्तरागे- अब्जे कमले इव दृशौ यस्यास्तां ''कमलाक्षी शशिप्रभा''- ''पद्मालये पद्मदळायताक्षी''त्यादिकमिहानुसंधेयम्। ''अरुणोऽव्यक्तरागेऽर्के संध्यारागेऽर्कसारथौ। निश्शब्दे कपिले कुष्ठभेदेनागुणिनि त्रिषु। अब्जोऽस्त्रीशशांके ना निचुले धन्वन्तरौ च हिमकिरणे। क्लीबं पद्म'' इत्युभयत्रापि मेदिनी॥ प्रस्फीतः प्रकर्षेण स्फीतः प्रवृद्ध इत्यर्थः। प्रपूर्वकात् स्फायतेः कर्तरि क्तः। ''स्फायस्स्फी निष्ठाया''मिति स्फीभावः- ''स्फीतं भूयश्च भूरि चे''त्यमरः- प्रावृषेण्य इति भावः- पयोधरः मेघ इव स्फुरन्ती मूर्तिस्तनुर्यस्य तं- पक्षे- प्रस्फीतयोरतिपीवरयोः- पयोधरयोः स्तनयोः- स्फुरन्ती-मूर्तिः काठिन्यं- यस्यास्तां ''स्त्रीस्तनाब्दौ पयोधरौ''- ''मूर्तिः काठिन्यकाययो''रित्युभयत्राप्यमरः- अत्रान्तःध्येयस्य भगवतो मेघश्यामलत्वं च ''तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थितः- नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरे''ति श्रुत्युक्तमनुसंधेयम्। वह्निशिखा आत्मज्वाला- अणीयसी ऊर्ध्वा ऊर्ध्वाग्रा- अणीयोर्ध्वेति कर्मधारयः- संधिश्छान्दसः- व्यवस्थित इति लिंगव्यत्ययश्छान्दसः - नीलतोयदमध्यस्थेति- नीलतोयदश्यामलभगवद्विग्रहाश्रयत्वान्मध्यस्थनीलतोयदविद्युन्निभेत्यर्थः- मध्यस्थेति नीलतोयदविशेषणस्य पूर्वनिपाताभावश्छान्दस इति रंगरामानुजमुनयः।

लोकानां त्रयाणामित्यर्थः- कपिञ्जलाधिकरणन्यायेन बहुवचनस्य त्रित्वे पर्यवसानम्। ''बालेन विष्णुनाक्रान्तास्त्रयो लोकास्त्रिविक्रम'' इत्यादीतिहासपुराणानुरोधात्- मातारं पदत्रयेण मितिकर्तारं- ''मा माने'' अस्माददादिकाल्लुटि कर्तरि तृच्- पदत्रयाक्रान्त जगत्त्रयमित्यर्थः- ''त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः''-''यस्योरुषु त्रिषु विक्रमणेषु'' ''अधिकियन्ति भुवनानि विश्वा'' इत्यादिश्रुतिभ्यः- अत्र पौराणिकी वामनावतार कथाऽनुसंधेया-पक्षे-लोकानामित्यनेन सर्वजगत्साधारणं सूचितं-मातरं जननीं-

दधीमहि-ध्यायेमेति यावत्। वयमिति शेषः। एवं श्रुतिस्मृत्याद्युक्तक्रमेण लक्ष्म्या जगन्मातृत्वस्यासंदिग्धत्वात्तत्पतेः भगवतो जगत्पितृत्वमर्थसिद्धमिति नात्र श्लोके तस्य लोकपितृत्व कण्ठोक्तिः।

एतेनोदाहृतश्रुतिस्मृत्यभिधानकोशानुसारेण जनकत्वसमानाधिकरणस्त्रीत्वरूपं मातृत्वं च न कारणत्वमन्तरेणोपपद्यत इति तत एवार्थात्कारणत्वमपि लभ्यते। तथा "अस्येशाना जगतो विष्णुपत्नी"-"ईश्वरीग्ं सर्वभूतानां तामिहोपह्वये श्रियं"-"ईशाना देवी भुवनस्याधिपत्नी"त्यादिषु कारणत्व समनियत जगदैश्वर्य प्रतिपादनेन कारणत्वं* लक्ष्म्या अप्यस्तीति गम्यते। "अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वे"त्यादि लक्ष्मीसूक्तादिवाक्यैस्साक्षात्कारणत्वाभिधानात्। ईश्वरद्वित्वप्रसंगादिकं त्वैश्वर्यस्तबके वारयिष्यते। एवं श्रीश्रीनिवासयोः श्लिष्टविशेषणैर्यौगपद्येन वर्णनादनयोरन्योन्यं नित्यसंश्लिष्टत्वं च विवक्षितम्- अत्रोभयोरपि स्तुत्यत्वेन प्रस्तुतयोस्तयोर्ध्यानक्रियारूपैक-धर्मान्वयात् तुल्ययोगितालंकारः- "वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिते"ति लक्षणात्- सा च श्लेष प्रतिभावलम्बिनीत्यनयोरंगांगिभावसंकरः- अस्य च- अरुणाब्जदृशं- प्रस्फीत पयोधर स्फुरन्मूर्तिमिति पदद्वयाश्रय संसृष्ट लुप्तोपमालंकारद्वयस्य चैकवाचकानुप्रवेशसंकरः- एव मुक्तालंकारोपस्कृत सूक्तितः कवेः सर्वात्मना श्री श्रीनिवासोभयविषयको भक्तिभावोऽभि व्यज्यत इत्यसंलक्ष्यक्रमो भावध्वनिः- वृत्तं गीतिः- "आर्या प्रथमदळोक्तं यदि कथमपि लक्षणं भवेदुभयोः। दळयोः कृतयतिशोभां तां गीतिं गीतवान्भूजंगेश" इति लक्षणात्। यत्त्वत्रोभयोरपि स्तव्यत्वेन प्रकृत श्लेषालंकारः इति पाश्चात्यः। तन्मन्दम्- विशेष्यस्यापि श्लिष्टतायामेव तदवतारादत्र विशेष्ययोरश्लिष्टत्वात्। किंचास्मिन्पद्ये मातारं मातरं च लोकानामिति सार्वलौकिकं पाठमनादृत्य लोकानां मातरं च पितरं चेति पाश्चात्यस्य प्रत्यग्र

---

* अत्र व्याख्यातृमहाभागैः प्रोक्तं लक्ष्म्याः कारणत्वं श्रीदेशिकसूक्तिविरोधाद्विमृश्यम्। तथाहि- परिपूर्ण ब्रह्मानुभवाधिकारे एवंहि श्रीदेशिकसूक्तिः द्राविडी- "ईश्वरनुक्कु छत्रचामरादिगळै प्पोले लक्षणमाग च्चोन्न जगत्कारणत्व-मोक्षप्रदत्व-सर्वाधारत्व-सर्वनियन्तृत्व-सर्वशरीरत्व-सर्वव्यापित्व-लक्ष्मीसहायत्वादिगळ् प्रतिनियतंगळ्" इति। अत्र प्रातिस्विकरूपेण भगवदसाधारणतयोक्तानां जगत्कारणत्व-मोक्षप्रदत्व-सर्वव्यापित्वादीनां लक्ष्म्यां लक्ष्मीसहायत्वासंभववत् उक्तानामपि तस्यामसंभवस्य स्पष्टत्वेन, मूलकृतां व्याख्यातॄणां च तस्यां जगत्कारणत्वविभुत्वादिप्रसाधनं श्रीदेशिकोक्तिविरुद्धमिव भाति। किंच व्याख्यायामिह "अहमेव वात इव...." इत्यादिरुदाहृता श्रुतिरपि न साक्षाल्लक्ष्मीकारणत्वपरा। किन्तु "अहं मनुरभवं सूर्यश्चे"त्यादि वामदेववचनवन्निर्वाह्येति बोध्यम्। अन्यथा उक्तदेशिकसूक्ति विरोधात्।

प्त्रादिग्रहणस्य व्युत्पत्तिपक्षे नियमार्थत्वादुपधादीर्घो दुर्घट इति विपरीतज्ञानं वा- अस्तु व शब्दस्यासाधुत्वमथापि मातारं मातरमिति पुनरुक्तिस्स्यादित्यापाततो भ्रमो वेति न विद्मः- ननु लोकानां मातरं च पितरं चेति पाठेऽपि समीहितसिद्धौ किं छिन्नं तवेति चेत्सत्यमेवं- तथापि मातरं मातारं चेति व्यञ्जनत्रयावृत्तौ मातरं च पितरं चेत्यतोऽपि वर्णान्तराव्यवहित वृत्त्यनुप्रास वैचित्र्य विशेषस्य- लोकमातृत्वेनोभयोस्साम्येपि, "कृपणस्य कृपाणस्य च केवलमाकारतो भेद" इतिवत् व्यतिरेकस्यापि कविसंभ्रमगोचरत्वेन विच्छित्तिविशेष सद्भावस्य च साहितीरसपरिपाकसुरभिळहृदयसुजनैकवेद्यत्वादेक "च" शब्देनैव समुच्चयलाभे च शब्दान्तरस्य निष्प्रयोजनत्वाच्च यथोक्त एव पाठो विश्वजनीन इत्यलं बहुना।

**मू. प्रातरम्बुजविडम्बिलोचनां - मातरं त्रिजगतामुपास्महे।**
**शीतरम्यकरुणावलोकनै - र्या तरंगयति मंगळानि नः॥** 3

एवमाद्येन श्लोकेन जगज्जनन्या लक्ष्म्या अपि "भर्ता नाम परं नार्या भूषणं भूषणादपि"। "श्रियश्श्रीश्च भवेदग्र्या"-"कश्श्रीः श्रियः"- इत्याद्युक्त प्रकारेणातिशयाधायकतया श्रीनिवासं प्रणम्य- द्वितीयेन मध्यमणि सदृशेन लक्ष्मीश्रीनिवासावुभावप्यभिध्याय तृतीयेन केवलं श्रियमेव प्रबन्धप्रतिपिपादयिषितामुपास्ते। प्रातरिति- प्रातर्विद्यमाने- अम्बुजे- विडम्बयतः परिहसत इति प्रातरम्बुज विडम्बिनी- लोचने- यस्यास्तां- प्रातरम्बुजेत्यनेन प्रत्यग्रविकसितत्वाम्लानत्व भोग्यतमत्व सुकुमारत्वादीनि व्यज्यन्ते- "श्रियमुन्निद्र पद्माक्षी"मिति विष्णुपुराणोक्तं च स्मार्यते। विडम्बीति ताच्छील्यार्थकणिनिना तत्परिहासस्य स्वाभाविकत्वद्योतनान्नित्यप्रसन्नत्वं व्यञ्जितम्- तेन "अनुग्रहमयीं वन्दे नित्यमज्ञातनिग्रहा" मित्युक्तरीत्या निग्रहासमानाधिकरणानुग्रहवत्त्वं द्योतितम्- त्रिप्रकाराणि च तानि जगन्ति चेति शाकपार्थिवादित्वात् मध्यमपदलोपी समासः- त्रीणि च तानि जगन्ति चेति कर्मधारयस्तु न युक्तः- "दिक्संख्ये संज्ञाया"मिति नियमात्- अत एव "द्विगोर्लुगनपत्य" इत्यत्र त्र्यवयवा विद्या त्रिविद्या- तामधीते वेत्ति वा त्रैविद्यः- न तु तिस्रो विद्या अधीत इत्यणप्रत्यय निमित्त "स्तद्धितार्थे"त्यादिना समासः- अत एवाणप्रत्ययस्य लुगभाव इति भाषितम्- मातरं जननीं- उपास्महे। वयमिति शेषः। तामेव विशिनष्टि। या - यच्छब्देन "सर्वमंगळमांगळ्ये"ति नामसहस्रोक्त मंगळदेवतात्व प्रसिद्धिस्सूच्यते। वक्ष्यमाणमंगळोत्तरंगणानुगुण्यात्। शीतानि रम्याणि करुणाप्रचुराण्यवलोकनानीति मध्यमपदलोपी समासः-तैः-शिशिररमणीयदयार्द्र- कटाक्षैरित्यर्थः। शीतेत्यनेन "शीतो भव हनूमत" इत्युक्तरीत्याऽस्मादृशतापत्रयातुरविषये

वा- ''बहुवचनस्य वस्नसा''वित्यस्मच्छब्द षष्ठीबहुवचनस्यानुदात्तो नसादेशः- ''एते वां नावादय आदेशा अनन्वादेशे वा वक्तव्या'' इत्यन्वादेशाभावेऽप्यत्र वैकल्पिकत्वेन नसादेश इति भाव्यम्॥ यद्वा, पूर्वं ध्यानं विधातुमुपात्तानां पुनर्मंगळ गोचरत्वं विधातुमुपादानादन्वादेश विषयत्वान्नित्यमेवायमादेश इति बोध्यं, ''अन्वादेशे, नित्यं स्यु''रित्युक्तेः- मंगळानि- निश्श्रेयससाम्राज्यप्राप्तिपर्यन्तकल्याणानि- बहुवचनेन तेषामानन्त्यं द्योतितम्। तरंगयति- अभिवर्धयति॥ तरंगवच्छब्दा''त्तत्करोति तदाचष्ट'' इति णिचि-णाविष्ठवद्भावा- ''द्विन्मतोर्लु''गिति मतुपो लुक्- वर्तमाननिर्देशेन मंगळानां सर्वदेश सर्वकाल सर्वावस्थानुवर्तमानत्वं-कर्तरि प्रत्ययेनानितरप्रेर्यत्वं च व्यज्येते।

अत्र यच्छब्दस्योत्तर वाक्यार्थगतत्वेन पूर्ववाक्यार्थे तच्छब्दानुपादानं ''साधुचन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामतारके'' इत्यादाविवादोषाय॥ तदुक्तं काव्यप्रकाशे, ''यच्छब्दस्तूत्तरवाक्यार्थ-गतत्वेनोपात्तस्सामर्थ्यात्पूर्ववाक्यार्थगतस्य तच्छब्दस्योपादानं नापेक्षत'' इति। अत्राम्बुज विडम्बिलोचनामित्यत्र- अम्बुजमुपमानं, विलोचनमुपमेयं- विडम्बिशब्द उपमावाचक-श्चेत्येतेषां त्रयाणामेवोपात्तत्वाद्धर्मलुप्तोपमालंकारः। न च विडम्बिशब्दस्योपमाबोधकत्वं कथमिति शंक्यम्- महाकवि परिगृहीतत्वात्॥ तदुक्तं काव्यादर्शे ''इववद्वा यथा शब्दास्समान निभसन्निभाः तुल्यसंकाशनीकाशप्रकाशप्रति रूपकाः- प्रतिपक्षप्रतिद्वंद्विप्रत्यनीक विरोधिनः। सदृक्सदृशसंवादि सजातीयानुवादिनः। प्रतिबिम्बप्रतिच्छन्दरूप समसंमिताः। सलक्षण सदृक्षाभसपक्षोपमितोपमाः। कल्पदेशीयदेश्यादि प्रख्यप्रतिनिधी अपि। सवर्णतुलितौ शब्दौ ये चान्यूनार्थवादिनः। समासश्च बहुव्रीहिश्शशांकवदनादिषु। स्पर्धतेयुध्यतिद्वेष्टिद्रुह्यति प्रतिगर्जति। विडम्बयति संधत्ते हसतीर्ष्यत्यसूयति। तस्य मुष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति। तेन सार्धं विगृह्णाति तुलां तेनाधिरोहति। तत्पदव्यां पदं धत्ते तस्य कक्ष्यां विगाहते। तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति। तस्य वाऽनुकरोतीति शब्दास्साधर्म्य वाचकाः। उपमायामिमे प्रोक्ताः कवीनां बुद्धिसौख्यदा'' इति। अत्राभिधया लक्षणया व्यंजनया वा शब्दानां उपमाबोधकत्वं यथायथं बोध्यम्'' -उपासनस्य कटाक्ष-कल्याणोत्तम्भकत्व रूपवाक्यार्थहेतुकत्वाद्वाक्यार्थ- हेतुकं काव्यलिंगम्॥ उक्तोपमाया अस्य च तिलतण्डुलवद्भेदस्य स्फुटमवगमात्संसृष्टिः। द्वितीय तृतीययो स्सस्वरव्यंजनयोः अर्थभेदेन प्रतिपादमावृत्तेर्यमकं नाम शब्दालंकारः। तदुक्तं साहित्यरत्नाकरे, ''आवर्त्यतेऽर्थभेदेन सस्वरव्यंजनावळिः। यदा तदा स्याद्यमकं

प्रवेशाभावात्कथमेकवाचकानुप्रवेश संकर इतिचेदेक वाचकाश्रितत्वमात्रस्यैवा-न्नैकवाचकानुप्रवेश शब्दार्थत्वादित्यवधेहि॥ न चैवमर्थालंकारस्य वाचकवृत्तित्वाभावात् कथमेकवाचकानुप्रवेश विषयतेति वाच्यम्॥ तस्यापि वाच्यतासंबन्धेन तद्वृत्तितया तदुपपत्तेः। तस्मादेकवाचकानुप्रवेशसंकरः केवल शब्दालंकाराणां केवलार्थालंकाराणां मिळितानां च तेषां यथायथं भवत्येवेति संक्षेपः। विस्तरस्तु काव्यप्रकाशरसिकरंजन्यादौ॥ प्रायशोऽस्य कवेर्ग्रन्थे शब्दालंकारचातुरी। प्रतिपद्यं विभात्येव विभाव्या सा बुधोत्तमैः। अत्र प्रथमश्लोकस्य श्रीनिवास विषयकत्वेन तृतीयश्लोकस्य लक्ष्मीविषयकत्वेन द्वितीय-श्लोकस्योभयगोचरत्वेन च ग्रथनं पृथक्प्रवहतोर्गंगायमुनाप्रवाहयोः प्रयागे संगम इव कामपि सहृदयहृदयंगमतामाविष्करोतीति रसिकजनैर्विभावनीयम्। रथोद्धतावृत्तम्। ''रान्नराविह रथोद्धता लगा''विति लक्षणात्॥3॥

मू. आचक्रायुधं आ च मामकगुरोराचार्यवर्गं भजे।
मध्यस्थैरिह नाथयामुनमुखैर्मान्यैस्सनाथीकृतम्।
क्षीराम्भोधिसुतापयोधरपयःपूरा इवोदित्वरा
यद्वाचां विसरा जगन्ति नितरामुज्जीवयन्ति स्वयम्॥ 4

अथ लोकमातृवैभवादिरहस्यं प्रबन्धद्वारा शिष्येभ्यः प्रचिकटयिषुः ''यदा यदा स्वशिष्योभ्यो रहस्यं वक्तुमिच्छति। तदा तदाऽनुसंदध्यात्सम्यग्गुरुपरंपरा''मित्युक्त प्रकारेण गुरुपरंपरानुसंधानावश्यकतामभिसंधाय ''तमिमं सर्वसंपन्नमाचार्यं पितरं गुरुम्''- ''ममाप्यखिललोकानां गुरुर्नारायणो गुरुः''- ''कमप्याद्यं गुरुं वन्दे''- इत्याद्युक्त प्रकारेण पूर्वं प्रस्तुतस्य भगवतः प्रथमाचार्यतां विशदीकुर्वन् ''स चाचार्यवंशो ज्ञेयो भवत्याचार्याणा-मसावसावित्या भगवत्त'' इत्याम्नातक्रमेण स्वाचार्यपर्यन्तं सर्वानाचार्यान्यौगपद्येन नमस्यत्ये-केन पद्येन, आचक्रायुधमिति। इह एतद्ग्रन्थारम्भे- चक्रं आयुधं यस्य स चक्रायुधो भगवान्- अनेन ''बहिरन्तस्तमश्छेदि ज्योतिर्वन्दे सुदर्शन''मित्याद्युक्तरीत्या- आयुधस्यैव सर्वतमोनिरासकत्वे किं पुनर्न्यायेन भगवतस्तथाविधत्वं व्यंजितम्। तेनास्य शास्त्रोदितं गुरुत्वमपि सूचितम्। यन्निरुच्यते गुरुशब्दः ''गुशब्दस्त्वन्धकारस्स्याद्रुशब्दस्तन्निरोधकः। अन्धकारनिरोधित्वाद्गुरुरित्यभिधीयत'' इति। आ- चक्रायुधात् आचक्रायुधम्-चक्रायुधमभिव्याप्य-तस्मादारभ्येति यावत्- ''आङ्मर्यादाभिविध्यो''रित्यव्ययीभावः-''नाव्ययीभावादतोऽम्त्व पंचम्या'' इत्यम्।

"आङ्मर्यादाभिविध्यो" रित्यस्य विभाषाधिकारस्थत्वाद्वैकल्पिकस्समासाभावः- आचार्याणां "आचिनोति हि शास्त्रार्थानाचारे स्थापयत्यपि। स्वयमाचरते यस्मात्तस्मादाचार्य उच्यत" इत्युक्त लक्षणानां- वर्गं-समूहं-परंपरामित्यर्थः- भजे सेवे।

तमेव वर्गं विशिनष्टि। मध्यस्थैरिति। मध्यस्थैः मध्यभागे विद्यमानैः- न्यायवर्तिभि-रित्यप्युपकार्यं- "न्याय्येऽपि मध्य" मित्यमरः। मान्यैः पूज्यैः मध्यस्थैरित्यनेन तैषां नायकरत्न तौल्यं द्योत्यते। अत एव मान्यैरित्युक्तमपि युज्यते। वदन्ति हि "अत्रासं मानदं रत्नं स्थिरं भोग्यं प्रकाशकं- महार्घं मंगळं मान्यं सुरक्ष्यं सुग्रहं नृणां" इति रत्नलक्षणं- अत्र मान्यै-रित्यनेनोपलक्षिता अत्रासत्वादयोऽपि यथार्हं द्योत्यन्त इति ध्येयम्- तेनाचार्यवर्गस्य मुक्ताहार साधर्म्यं- तेन तत्सेवितु स्स्वस्य महाभाग्यं च व्यज्यते- अत एवोपमालंकारध्वनिः- नाथश्च यामुनश्च नाथयामुनावाचार्यौ- मुखे प्रधानभूतौ येषां तैराचार्यैरित्यर्थः- "मुखं प्रधाने प्रारम्भे वक्त्रे निस्सरणेऽपिचे"ति नानार्थरत्नमाला-यामुनग्रहणं चतुश्श्लोक्यां लक्ष्मीवैभव-स्थापयितृत्वेनाभ्यर्हितत्वात्- नाथग्रहणं च- "नाथाय मुनये"-"पितामहं नाथमुनिं विलोक्ये"ति वदतस्तस्याप्यभ्यर्हितत्वात्- "नाथोपज्ञं प्रवृत्तं बहुभिरुपचितं यामुनेय प्रबन्धैस्त्रातं सम्यग्यतीन्द्रैरिदमखिलतमःकर्शनं दर्शनं नः" इत्युक्तरीत्या सत्संप्रदाय सिद्धान्तस्य तदुपज्ञत्वाच्च। सनाथीकृतम्॥ नाथेन सह वर्तत इति सनाथः, "तेन सहेति तुल्ययोग" इति सहपूर्वपदबहुव्रीहौ, "वोपसर्जनस्ये"ति सहशब्दस्य सभावः- असनाथस्सनाथस्संपद्यमानः कृतस्सनाथीकृतः- तं तथाभूतं- "कृभ्वस्तियोगे संपद्यकर्तरि च्विः- अभूत तद्भाव इति वक्तव्यमिति च्विप्रत्यये "अस्य च्वा"वित्यकारस्य-ईदादेशः- नाथयामुनमुखाचार्याभिन्ननाथविशिष्टं संपद्यमानं कृतमित्यर्थः- नाथयामुनाद्याचार्यनाथवत्तावैधुर्ये अनाथ एवायं संपद्येतेति भावः- "श्रीमद्यामुनमुनिना नाथसहायेन नाथवानस्मी"त्यादिकमत्र भाव्यम्। उदित्वराः विसृमराः उत्पूर्वकादिण् धातोः "इणणसीजस्तरिभ्यः क्वरबि"ति ताच्छील्ये कर्तरि क्वरप्प्रत्ययः "ह्रस्वस्य पिति कृति तुगि"ति तुक् - उत्पूर्वकेत्वरशब्देन वात्सल्यभूम्ना क्षीराणामयत्नप्रस्नुतत्वं व्यज्यते। तेन स्वयमुज्जीवयन्तीति वक्ष्यमाणलोकोज्जीवनस्योज्जीवनं कृतमिति ध्येयम्। क्षीराम्भोधेस्सुतायाः लक्ष्म्याः अनेन निखिलचेतनोज्जीवनौपयिकक्षीरपौष्कल्यं-अमृत

द्योत्यते - तेनोज्जीवनस्य सौकर्यं व्यजितम्। पयसां क्षीराणां "दुग्धं क्षीरं पयस्समे" इत्यमरः। पूराः प्रवाहा इव - जगन्मातृस्तनक्षीरस्य पूरसाधर्म्येण शुचित्व मधुरत्व सर्वोपभोग्यत्वादीनि व्यज्यन्ते- यद्वाचां यत्संबन्धिगिरां- विसरास्समूहाः- "संदोहविसरव्रजा" इत्यमरः। प्रसरा वा ग्रन्थरूपा इति यावत्। जगन्ति लोकान् बहुवचनेन "विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोके"ष्विति श्रुत्युक्तानां सर्वेषां लोकानां संग्रहः। संकोचकाभावात्। न हि सर्वजगज्जनन्या गर्भभूतलोकोज्जीवने क्वापि वैषम्यमुदियादिति भावः- नितरां यावत्पर्याप्ति- स्वयं प्रेरकान्तरानपेक्षं- न हि स्तनंधयोज्जीवने जनन्यावेक्ष्यते प्रेरकान्तरम्- उज्जीवयन्ति उत्कर्षेण प्राणयन्तीत्यर्थः- अत एवानुगृहीतमाचार्यैः "समस्तजननीं वन्दे चैतन्यस्तन्यदायिनी"मिति। आचार्य श्रीसूक्तिपक्षे तु। जगन्तीत्यनेनोत्तम मध्यमादि विभागानादरेण सामान्यतस्सर्वाधिकारिणां संग्रहः- तेन संक्षेप विस्तराभ्यां तत्तद्बुद्ध्यानुगुण्येनोपयोगस्सूचितः। अत्र "कृतिनः कमलाकान्तकारुण्यैकान्तिनो भजे। धत्ते यत्सूक्तिरूपेण त्रिवेदी सर्वयोग्यता"मित्यादिकमनुसंधेयम्। नितरामित्यस्य पुनरपि यथा पूर्वावस्थानोदियात् तथेति भावः। स्वयमित्युज्जीवयन्ति तत्त्वहितपुरुषार्थप्रकाशनेन लब्धसत्ताकानि कुर्वन्तीत्यर्थः। अनेन जगदुज्जीवनप्रवृत्तेस्स्वाभाविकत्वं द्योतितम्। तेन क्वचिदनुज्जीवकत्वम् अपि स्यादिति संभावनाया नावकाश इति सूचितम्। अनेनामृतमय श्रीस्तनक्षीरपूरसदृशाचार्य श्रीसूक्तिप्रसरणात्पूर्वं जगतां दुर्मताशीविषमूर्छितत्वं ध्वन्यते। अस्य श्लोकस्य आन्य पर्येपि लक्ष्मीप्रसंगापरित्यागात्तत्स्तुतावेवान्तर्भावः - एवमग्रेऽप्यूह्यम्।

यत्तु इहेति पदस्याचार्यवर्गे इति व्याख्याय-मध्यस्थैर्नाथयामुनमुखैर्मान्यैः सनाथीकृतमाचार्यवर्गं भज इति पाश्चात्यः- तत्तु "जीर्णकाननसंकीर्णे विन्ध्ये काननवृत्तय" इत्यादिवत्पौनरुक्त्यदोषदुष्टत्वादयुक्तम्। न ह्यस्मिन्वने मध्यस्थैश्चन्दनादितरुभिर्युक्तमिदं वनं पश्येत्येवं जातीयकाः प्रयोगा अश्नुवते क्वापि साधुताम्। तस्माद्यथोक्तव्याख्यानमेव साधु। अत्राचार्य भजनावश्यंभावे "आचार्यदेवो भव" - "देवमिवाचार्यमुपासीत" - "यथा भगवत्येवं वक्तरि वृत्ति"रित्यादि प्रमाणान्यनुसंधेयानि। नन्वत्र "आचार्याणामसावसावित्या भगवत्त" इत्याम्नातक्रमेणावरोहणक्रमेण गुरुपरंपरानुसंधानमिति व्याख्यानमयुक्तम्। "आभगवत्तः प्रथितामनघामाचार्यसंततिं वन्दे"- इति श्रीमद्रहस्यत्रयसारश्लोकव्याख्यावसरे अवरोहणक्रम विवक्षायां श्रुतिक्रमानुविधानभंग इति सारविवरणीकृदुक्तेरिति चेन्न- आभगवत्त इत्यस्यारम्भाभिविधिविवक्षायां भगवत आरभ्येत्यर्थ लाभादवरोहण

चावरोहणक्रमेणाप्यनुसंधानमाचार्याणां संगच्छते। अत एव ''अस्मद्गुरु समारम्भां''-''लक्ष्मीनाथसमारम्भां''-मित्युभयथाप्यनुसंधानं सार्वलौकिकमिति दिक्।

अत्र पूर्वार्धे चकारादि व्यञ्जन पौनरुक्त्याद्वृत्त्यनुप्रासः- उत्तरार्धे रेफादि व्यञ्जन पुनरावृत्तेरन्योपि वृत्त्यनुप्रासः- पूरा इत्युपमानस्य वाचां विसरा इत्युपमेयस्य-इवेत्युपमावाचकस्य- जगदुज्जीवनस्य समानधर्मस्य चोपादानात्पूर्णोपमालंकारः- उत्तरार्धस्थ वृत्त्यनुप्रासेनैक वाचकानुप्रविष्टेन संकीर्यते, पूर्वार्धस्थ वृत्त्यनुप्रासेन संसृज्यते च- किंच। कविगतस्याचार्य वर्गविषयकरतिभावस्य तच्छ्रीसूक्ति विषयकरतिभावोंऽगमिति प्रेयोऽलंकारः। ''प्रेयोपरांगं भावस्य यदि भावरसांगते''ति लक्षणात्। सर्वेषामेषा-मेकवाचकानुप्रवेशलक्षणस्संकरः- तल्लक्षणं त्वभिन्नपदबोध्यनानालंकारघटितत्वम्। शार्दूलविक्रीडितं वृत्तम्। ''सूर्या श्वैर्मसजास्स्ततास्सगुरवश्शार्दूल विक्रीडित''मिति लक्षणात्॥4॥

**मू.** **जलधिदुहितुस्स्तुत्यासत्त्या सती मम भारती**
**रचयतु नमो वाचे प्राचेतसाननजन्मने।**
**भवदवभवं तापं लोपं नयन्त्यनघा यया**
**भुवि सुलभतां नीता सीताचरित्रसुधाझरी॥** **5**

एवं सर्वसाधारण्येनानुष्ठितया नमस्यया, पर्याप्तिमलभमानो रहस्यरक्षादिप्रबन्धैः लक्ष्मीवैभवप्रतिष्ठापन पटिष्ठतयाऽभ्यर्हिततमं श्रीमन्निगमान्तमहादेशिकमणिमेव प्रत्येकं श्रेयांसि प्रार्थयिष्यमाणः प्रथमं श्रीवैभवप्रतिष्ठापने स्वप्रबन्धद्वारा तस्यापि महोपकारकतया प्राचेतस पराशरयोर्यौगपद्येन नमस्कार्यत्वेपि श्रीसीताचरित्रग्रथन संपदा पराशरस्यापि तद्वैभव प्रतिपादनमार्गदर्शित्वेनाभ्यर्हिततरत्वात्प्राचेतसस्यैव प्रथमतरनमस्कार्यतां मन्वानस्तदीय दिव्यश्रीसूक्तिमधुरिमविवशितस्तन्नमस्ययैव तस्य[1] नमस्कृतप्रायतामनुसंदधानस्तामेव तच्छ्रीसूक्तिं तावदादौ नमस्यति। **जलधिदुहितुरिति**। यद्वा व्यंग्यमर्यादया- स्वकण्ठोक्त्या-परस्पर विप्रतिपद्यमान सर्वोपनिषत्पुराणादि सामरस्य संपादनेन च स्वस्वप्रबन्धैर्लक्ष्मीविभुत्व प्रतिष्ठापयितृत्वेन प्राचेतसपराशरनिगमान्तदेशिकानां ''यथोत्तरं मुनीनां प्रामाण्य'' मित्युक्तरीत्या उत्तरोत्तरोत्कर्षमनुसंधाय सोपानारोहणक्रमेण यथाक्रमं त्रिभिश्श्लोकैः तद्विषयक मंगळान्याचरति। एतेनादिकवित्वाद्वाल्मीकिं स्तौतौति- वैष्णवमुख्यत्वात्पराशरं स्तौति-

सती प्रशस्ता अभ्यर्हिता वा- "प्रशस्ते अभ्यर्हिते च स"दित्यमरः। इयं च स्वभारत्याः प्रशंसा लक्ष्मीस्तुत्यौन्मुख्यप्रयुक्त धन्यतानुसंधान विजृंभिता- मम भारती वाणी- जलधिदुहितुः लक्ष्म्याः स्तुतेः आसत्त्या अव्यवधानेन - आसत्तिरव्यवधानमिति मञ्जूषायाम्। "आसत्तिस्संगमो लाभे" इति मेदिनी। भारतीत्यनेन सरस्वत्याश्श्रीस्तुति- कैंकर्यप्रवृत्तिस्स्वरूपानुरूपैवेति व्यज्यते। प्रचेतसोऽपत्यं प्राचेतसः- वाल्मीकिरित्यर्थः- निश्चलतरतपोविशेषैणास्य वल्मीकावृतौ जातायां प्रचेतसा वरुणेन कृतनिरन्तरवर्षेण प्रादुर्भावोऽभूदिति भृगुपुत्रस्यैवास्य प्रचेतःपुत्रत्वम्-यद्वा-प्रचेताःनाम भृगुवंश्यः कश्चित्तस्यायं पुत्रः ऋक्षो नाम- "चक्रे प्रचेतसः पुत्र इति पुत्रत्वाभिधानादिति श्रीरामायणभूषणे स्पष्टम्। आद्ये अपत्यप्रत्ययो भागीरथी कावेरीत्यादाविव गौणीमपत्यता मादाय निर्वाह्यः - द्वितीये तु न काचिदनुपपत्तिः - वस्तुतस्तु द्वितीयपक्ष एव स्वरसः - "प्रचेतसोऽहं दशमः पुत्रो राघवनन्दन। न स्मराम्यनृतं वाक्यमिमौ तु तव पुत्रका"वित्युत्तरकांडे वाल्मीकिवचनात् - "यथाऽहं प्रचेतस औरसः पुत्रस्तथैव तवेमौ पुत्रौ। अनृतं वाक्यमहं मनसा न स्मरामि, कथनं तु दूरत एवेति भाव" इति भूषण एव तदर्थस्योक्तत्वाच्च। तस्य- आननात् वदनात्, जन्म रामायणात्मनाऽभिव्यक्तिर्यस्यास्सेति व्यधिकरणपदो बहुव्रीहिः। यद्यपि, "अनेकमन्यपदार्थे" इति सूत्रेण समानाधिकरणानामेव बहुव्रीहिरिति फलितम्- तथापि- "अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदे" इति वामनोक्तेः क्वचिद्व्यधिकरणानामपि बहुव्रीहिरंगीकार्यः- एतच्च "सप्तमी विशेषणे बहुव्रीहाविति ज्ञापकात्सिद्धमित्याहुः - "ऋन्नेभ्य" इति प्राप्तस्य ङीपो "मन" इति निषेधान्न ङीप्- वाचे वेदरूपायै वाण्यै इत्यर्थः। "अनादिनिधना ह्येषा वागुत्सृष्टा स्वयं भुवेति" वेदे वाक्छब्द प्रयोगात्- "वेदवेद्ये परे पुंसि जाते दशरथात्मजे- वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मने" त्युक्तेश्च, नमः प्रह्वीभावं- रचयत्विति प्रार्थनायां लोट्- "भगवद्वन्दनं स्वाद्यं गुरुवन्दन पूर्वकं- क्षीरं शर्करया युक्तं स्वदते हि विशेषत" इत्युक्तरीत्या लक्ष्मीस्तुतिनान्तरीयकतया आदौ प्राचेतस श्रीसूक्त्युद्देश्यक प्रणामं विदधात्विति भावः - यद्वा। आसत्त्या आसक्त्येत्यर्थः- सती प्रशस्ता, मम भारतीति यथा पाठमेव योजना, अत्र लक्ष्मीस्तुत्यासत्तेर्नमस्कर्त्र्याः कविभारत्या नन्तव्यायाः प्राचेतसवाचस्तत्प्रवर्त्यसीताचरित्रसुधाझर्याश्च- स्त्रीत्वेनान्योन्यानुरूप्यं व्यज्यते।

तामेव वाचं विशिनष्टि। भवेति। यया सीताचरित्ररूपप्राचेतसवाचा- भवस्संसार एव दवः वनहुताशनः- "दवो वनहुताशनः" इत्यमरः- भवस्य दवत्वरूपणेन

तथास्यान्नीहृकृष्वहा। मिति परिगणनान्नियतेर्द्विकर्मकत्वं- अत एव- अविद्यमानं- अघं दुःखं पापं वा यस्यास्सेति पञ्चमीबहुव्रीहिः- सर्वाघनिवर्तिकेत्यर्थः "अंहोदुःखव्यसनेष्वघ" मित्यमरः- "ब्रह्महत्यासहस्राणि वीरहत्याशतानि च। स्वर्णस्तेयसुरापान गुरुतल्पायुतानि च। कोटि कोटि सहस्राणि उपपातकजान्यपि। सर्वाण्यपि प्रणश्यन्ति रामचन्द्रस्य कीर्तना" दिति रामोपनिषदाद्युक्तम्। "यः पठेद्रामचरितं सर्वपापैः प्रमुच्यत" इत्यादिकं चेहानुसंधेयम्। सीतायाश्चरित्रमेव सुधाझरी अमृतनदी- सीताचरित्रे सुधाझरीत्वरूपणेन माधुर्यगाम्भीर्य पापनिवर्तकत्व जगदुज्जीवकत्वादीनि व्यज्यन्ते। भुवि भूलोके- सुखेन लभ्यत इति सुलभा- तस्याभावस्सुलभता- तां सौलभ्यमित्यर्थः- "ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्"। "तस्य भावस्त्वतला" विति तल्। "संज्ञाजातिक्रियाशब्दान् हित्वाऽन्ये गुणवाचिन" इति प्राचां पक्षे सुलभाशब्दस्य गुणवचनत्वात् "त्वतलोर्गुणवचनस्ये" ति पुंवद्भावः- "संज्ञाकृदन्त तद्धितान्तसमस्तसर्वनामसंख्याशब्दातिरिक्तश्शब्दो गुणवचने नोच्यते। आकडार सूत्रभाष्यतस्तथैव लाभा" दिति शब्देन्दुशेखरकृत्पक्षे त्वस्य गुणवचनत्वालाभात् "शरदः कृतार्थता" - "सा मुमोच रतिदुःखशीलता" मित्यादाविव सामान्ये[1] नपुंसकं- ततस्तलिति बोध्यं- नीता प्रापिता- पूर्ववन्नयतेर्द्विकर्मकत्वं- रामायणमिति वक्तव्ये सीताचरित्रमित्युक्तिः श्रीरामायणे रामचरितस्य प्रतिपादनमप्राधान्येन सीताचरितस्यैव प्राधान्येनेति तात्पर्याल्लक्ष्मी- प्रशंसाया एव प्रकृतत्वाच्च- अत एव- "काव्यं रामायणं कृत्स्नं सीतायाश्चरितं मह" दिति श्रीरामायण एवोक्तम्। "सापराधेष्वपि रक्षणप्रवीणायाः भगवत्प्राप्तिपुरुषकारभूतायाः सीतानाम्न्याश्श्रिय एव प्राधान्येन वर्णनाद्रामायणस्य शरणागतिमन्त्रोपबृंहणत्वं- श्रीमदष्टाक्षरोपबृंहणश्रीभागवतादौ भगवत्प्राधान्यम्- अत एव तत्र - "नारायणकथामिमा" मित्युक्तम्। अत एव "श्रीमद्रामायणमपि परं प्राणिति त्वच्चरित्रे" इति श्रीगुणरत्नकोशोक्तिः- "प्रातर्द्यूतप्रसंगेन मध्याह्ने स्त्रीप्रसंगतः- रात्रौ चोरप्रसंगेन कालो गच्छति धीमता" मित्याभाणकश्च संगच्छते। स्वयं च वक्ष्यत्यैश्वर्यस्तबके। "दत्ताशयासु भवतीमहिमोपदेशे तत्तादृशीषु निगमान्तसरस्वतीषु। नारायणप्रियतमे! निखिलाभ्युपेतं रामायणं ननु जयत्युपबृंहणं नः" इति।

एतेन श्रीरामायणस्येव स्वचिकीर्षितस्यापि प्रबन्धस्य श्रीचरितप्राधान्याच्छरणागति मन्त्रार्थप्रकाशकत्वं भूयादित्याशंसा व्यज्यते। सीताचरित्र सुधाझरी भुवि सुलभतां नीतेत्यनेन भगीरथगंगावतारणनयेन दुष्करत्वमाश्चर्यत्वम् - "वाल्मीकिना च यत्प्रोक्तं रामोपाख्यानं

---

लेशमप्यनपेक्ष्य सीताचरित्रसुधाझर्यास्तत्सात्करणात्प्राचेतसवाचस्सिन्धुमथनादिबहुतर प्रयास लब्ध सुरलोकजनमात्रसात्कृतसुधायाः[1] परदेवताया अप्युत्कर्षः- तेनास्याः ''नन्तव्यः परमश्शेषी''त्युक्तायास्तस्या अपि नन्तव्यतमत्वं च द्योत्यते। अपि च। सीताचरित्र प्रतिपादकस्य ऋग्वेदादेस्साक्षाच्छ्रवणे ''पद्युह वा एतच्छ्मशानं यच्छूद्रः तस्माच्छूद्रसमीपे नाध्येतव्य''मिति ''अथ हास्य वेदमुपशृण्वत स्त्रपुजतुभ्यां श्रोत्रप्रपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेद'' इति श्रुतिस्मृत्यर्थसंग्राहकाभ्यां ''श्रवणाध्ययनार्थप्रतिषेधात्''- ''स्मृतेश्चे'' त्यपशूद्राधिकरण सूत्राभ्यां शूद्रादीनामनधिकारस्य निर्णीतत्वात्तेन वाल्मीकि श्रीसूक्ति रूपतामापद्य तेष्वप्यनुग्रहः कृत इति ध्वन्यते। अत्र ''सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु- श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रत'' इति- ''चतुर्णामपि वर्णानां यानि प्रोक्तानि श्रेयसे। धर्मशास्त्राणि राजेन्द्र शृणु तानि नृपोत्तम। विशेषतस्तु शूद्राणां पावनानि मनीषिभिः- अष्टादश पुराणानि चरितं राघवस्य चे''ति श्रीभारतभविष्यपुराणादि वचनान्यनुसंधेयानि।

तथाहि- ऋग्वेदे सीताचरितं श्रूयते। ''भद्रो भद्रया सचमान आगात्स्वसारं जारो अभ्येति पश्चात्- सुप्रतीकैर्द्युभिरग्निर्वितिष्ठन्नुशद्भिर्वर्णैरभिराममस्था''दित्यादौ। इदं चास्य निरुक्तम्। भद्रो रामभद्रो- भद्रया-मंगळरूपया सीतया सचमानस्संबध्यमान आसमन्तादागात् पितुर्नियोगवशादरण्यमागात्- जारः परदारापहर्ता रावणस्स्वसारं मातृवत्पूज्यां जगन्मातरं सीतां पश्चादभ्येत्य अरण्य गमनानन्तरं समीपे आगतवान्- सेतुबन्धनद्वारा रावणे हते सीतायां चाग्नौ प्रविष्टायां तस्यार्थं विश्वासार्थमग्निस्तां गृहीत्वा रामं रघुनाथमभ्याभिमुख्येनास्थात्। तस्सुप्रतीकैस्सकलार्तिहारिभिर्द्युभिः कान्तिभिरुशद्भिः कमनीयाभिर्वर्णैराकार विशेषैश्चैव तिष्ठंस्तस्योत्तराभूयसे निर्वचनाय शुभवचनायेत्यादि। रामपूर्वतापनीयोपनिषदि चाम्नायते। ''स्तुवन्त्येवं हि ऋषयस्तदा रावण आसुरः - रामपत्नीं वनस्थां यस्स्वनिर्वृत्यर्थमाददे। स रावण इति ख्यातो यद्वा रावाच्च रावणः। तद्व्याजेनेक्षितुं सीतां रामो लक्ष्मण एव च। विचेरतुस्तदा भूमौ देवीं संदृश्य चासुरम्। हत्वा कबन्धं, शबरीं गत्वा तस्याज्ञया तदा। पूजितो वायुपुत्रेण भक्तेन च कपीश्वरम्। आहूय शंसतां सर्वमाद्यन्तं रामलक्ष्मणौ। स तु रामे शंकितस्सन्प्रत्ययार्थं च दुन्दुभेः। विग्रहं दर्शयामास यो रामस्तदचिक्षिपत्। सप्तसालान्वि-भिद्याशु मोदते राघवस्तदा। तेन हृष्टः कपीन्द्रोऽसौ स रामस्तस्य पत्तनम्। जगामागर्जदनुजो वालिनो वेगतो गृहम्। तदा वाली निर्जगाम तं वालिन मथाहवे। निहत्य राघवो राज्ये सुग्रीवं स्थापयोत्ततः। हरीनाहूय सुग्रीवस्त्वाह चाशाविदोऽधुना। आदाय मैथिलीमद्य ददताश्वाशु गच्छत। ततस्ततार हनुमानब्धिं लंकां समाययौ। सीतां दृष्ट्वाऽसुरान् हत्वा पुरं

आदावाकास्थिता कृत्वा स्वपुरं तदगमत्सः। ततस्सिंहासनस्थस्सन् द्विभुजो रघुनन्दनः। धनुर्धरः प्रसन्नात्मा सर्वाभरणभूषितः'' इत्यादि।

अत्र प्राचेतसश्रीसूक्तिनमस्यायास्सीताचरित्रसुधाझरीभूलोकसौलभ्यावहत्व वर्णनरूपोत्तरवाक्यार्थहेतुकत्वाद्वाक्यार्थहेतुकं काव्यलिंगम्। उत्तरार्धे, सीताचरित्रपूर विषयस्य सुधाझरीरूपविषयताद्रूप्यरंजितत्वात् प्रसिद्धसुधाझर्यपेक्षयास्यास्सुधाझर्या भूलोक सुलभतारूपाधिक्यवर्णनाच्चाधिक ताद्रूप्यरूपकम्। ''विषय्यभेदताद्रूप्यरंजनं विषयस्य यत्। रूपकं तत्त्रिधाऽधिक्यन्यूनत्वानुभयोक्तिभि''रिति लक्षणात्। अप्रस्तुतभगीरथ गंगावतरणवृत्तान्त प्रतीतेस्समासोक्तिश्च - ''समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य य'' दिति लक्षणात्। भकार दकारादि व्यञ्जन पुनरुक्तेर्वृत्त्यनुप्रासश्चेत्येतैरेकवाचकानुप्रवेश संकीर्णैस्संसृज्यते। पूर्वार्धगत वृत्त्यनुप्रासेन संकीर्यते च। किं च श्रीरामायणविषयक रतिभावस्य सीताविषयकरति भावोंऽगमिति प्रेयोऽपरांगम्। दुष्करसीताचरित्रसुधाझरी भूलोकानयन वर्णनेन गम्यमानस्य प्राचेतसवाणीविषयकाद्भुतरसस्य प्रेमभावातिशयमापन्नस्य तद्विषयक कविगतरतिभावांगतया रसवदपरांगम्- ''रसे रसांगे भावांगेऽप्येषु स्याद्रसव''दिति लक्षणात्। यद्यपि रसभावमापन्नस्यांगता न संभवति- तथापि रसस्थायिभावस्यांगतया रसस्यांगत्वोपचार इति ध्येयम्। अत एव ''इतरांगीभूत स्थायिभावत्वं रसवदलंकारत्वं- स्थायिभावस्यैवेतरांगत्वे रसवदलंकार व्यवहारः- न त्वलौकिकाखण्डब्रह्मानन्द सब्रह्मचारिणो विभावादिपरामर्शजीवितावधे रसस्यांगत्वमस्ती''ति रसिकरञ्जनीकृदुक्तं संगच्छत इत्यन्यत्र विस्तरः- उक्तानां काव्यलिंगादीनां प्रेय आदीनां चैकवाचकानुप्रवेश संकरः- वाचक शब्दस्य प्रतिपादकमात्रपरतया व्यंजक साधारण्यादिति दीक्षितोक्तेः। अपरांग व्यंग्यस्य चमकृतिकारितासंरंभेऽस्य गुणीभूतव्यंग्यत्वान्मध्यमकाव्यत्वं- कवेः सर्वात्मना वाल्मीकिवाणीविषयकरतिभावस्यैव चमत्कारकारितासंरंभे तूत्तमकाव्यत्वमेव- अन्यत्तु निरूपितमाद्यश्लोके। हरिणीवृत्तम्। ''रसयुगहयैर्नौम्रौंस्लौगो यदा हरिणी तदे''ति लक्षणात्।

यत्तु- आसत्त्येति तकार द्वित्वाघटित पाठस्यैव दर्शनाद्वा, तकार द्वित्वं परित्यज्य- स्तुत्या-सत्येति पदद्वयं विरचय्य- ''जलधिदुहितुः-सत्या यथार्थया स्तुत्या स्तोत्रेण सती शुची भूता मम भारती''ति पाश्चात्यः- तन्न- लक्ष्मीस्तुति योग्यतौपयिक-रसनाशुचित्व संपादनायैव प्राचेतससूक्तिनमस्करणे विवक्षिते तद्वैपरीत्येन लक्ष्मीस्तुत्यैव शुद्धया रसनया तत्सूक्ति प्रणाम कथनस्यानौचित्यादित्यलं बहुना।

श्रय- तुष्टूषन्ती स्तोतुमिच्छन्ती सती- स्तौतेस्सन्नन्ताच्छतरि- "उगितश्चे"ति ङीप्- "स्तौतिण्योरेव षण्यभ्यासा"दित्यभ्यासेणः परस्य स्तौतेः सस्य षभूते सनि षत्वं ष्टुत्वं, "आदेश प्रत्यययोरि"ति सनस्सकारस्य षत्वंच- रसना जिह्वा- ममेति शेषः- अधुना सांप्रतं- पुरः श्रीस्तुतेः पुरतः- प्राचेतसाननजन्मने वाचे नमो रचयतु-जनकतनयायाः-दिव्योदन्तः- क्षान्तिकारुण्यसौलभ्यसौशील्यादिदिव्यगुणप्रकाशकचरितमेवामृतद्रवः- तं वर्षतीति तथोक्तां- ताच्छील्ये णिनिः- ऋन्नेभ्य इति ङीप्- अनेन निम्नोन्नतादि विभागानादरेण सर्वतोमुखसीताचरित्रामृतद्रवविकिरणशीलत्वप्रतीतेरस्याः कादम्बिनीतौल्यं द्योत्यते। तेन सकलतापनिर्धूननैपुण्यादि च व्यज्यते। यां वाचं- अवलम्ब्य कवयो वर्णयितारः- श्राव्यं श्रवणसुखमित्यर्थः- काव्यं गद्यपद्यात्मकं- जगति-गृणन्ति कथयन्ति ग्रथ्नन्तीति यावत्। "गॄ शब्द" इत्यस्मात्क्रैयादिकाल्लट्- "श्नाभ्यस्तयोरात" इत्यालोपः। "परं कवीनामाधार"मित्युक्तरीत्या लक्ष्मीतदितरविषयकप्रबन्ध रचयितॄणां रामायणमेवाधारः- अन्यथा तत्काव्यानां श्राव्यतैव दूरोत्सारिता स्यादिति भावः। अत्र "भास्वद्वंशवतंस कीर्तिरमणीरंगप्रसंगस्वनद्वादित्रप्रथमध्वनिर्विजयते वल्मीकजन्मा कविः। पीत्वा यद्वदनेन्दुमण्डलगळत्काव्यामृताब्धेः किमप्याकल्पं कविनूतनाम्बुदमयी कादम्बिनी वर्षती"त्येतदनुसंधेयमिति। वस्तुतस्तु। द्वितीयतुरीययोः पादयोर्नियमेनाष्म दशम वर्णावृत्ति दर्शनात्प्रथम तृतीययोरपि तथात्वस्यैवौचित्यात्कवेरनुप्रासरसिकत्वेन पादचतुष्टयेप्य-वैषम्यैणैवानुप्रासवत्तासंपादनविवक्षायास्संभाव्यत्वादन्यथा "अवैषम्येण भणनं समता सा निगद्यत" इत्युक्तलक्षणसमताख्यगुणहानि प्रसंगाच्चायं पाठो नातीव स्वरसः- किं त्वितोपि पादचतुष्टयेऽप्यनुप्रास तौल्यादर्थस्वारस्य पौष्कल्याच्च प्रथमं उपात्त एव स्वरसः। तस्माद्विना कारणं गुणवत्तरपाठानादरायोगात्तमेव पाठं मन्यंते साधीयांसं विद्वांसः इत्यलं विस्तरेण॥5॥

**मू. पराशरमुनीशितुः प्रणतिकर्म कुर्मस्तरा**
**महीनगुणशोभितैरमृतसाधनोत्कण्ठिभिः।**
**यदीयकृतिसिन्धुना विमथितेन यत्नाद्बुधैः**
**प्रकाशमिह नीयते परमपूरुषप्रेयसी॥** 6

इत्थं प्राचेतस वाणीं प्रणम्य विवक्षितक्रमेण पराशरं प्रणमति। पराशरेति :- परान् बाह्यकुदृष्टीन् प्रमाण तर्कशरैराशृणोतीति पराशरः- शॄहिंसायां- मुनयश्शुभाश्रयमननशीलाः-

‘‘पराशरं मुनिवरं कृतपौर्वाह्णिकक्रियम्। मैत्रेयः परिपप्रच्छ प्रणिपत्याभिवाद्य’’ चेति श्रीविष्णु पुराणोपक्रम श्लोकगतं पराशरं मुनिवरं प्रणिपत्येति पदत्रयं प्रत्यभिज्ञाप्यते- अनेन प्रावण्यादि गुणैः कवेर्मैत्रेयानु विधायित्वं व्यज्यते। तं मुनिं विशिनष्टि। अहीनेति। यदीया यस्य पराशरस्य संबन्धिनी- कृतिर्विष्णुपुराणरूपा-सैव सिन्धुर्दुग्धाब्धिः कृतौ सिन्धुत्वरूपणं गाम्भीर्यापारत्वादि व्यञ्जनार्थम्- अहीनैरगर्ह्यैः- सर्वश्लाघ्यैरित्यर्थः- ‘‘हीनन्यूना वूनगर्ह्या’’ वित्यमरः- गुणैः- ‘‘तल्लब्धिर्विवेक विमोकाभ्यास क्रियाकल्याणानवसादानुद्धर्षेभ्यस्संभवात् निर्वचनाच्चे’’त्याद्युक्तै स्सम्यक्ज्ञाननिष्पत्तिहेतुभूतैः-शोभितैः ‘‘गुणैर्विरुरुचे राम’’ इत्युक्तरीत्या देदीप्यमानैः- पक्षे- अहीनां फणिनां- इनः प्रभुः- वासुकिरित्यर्थः- ‘‘भुजंगोऽहिर्भुजंगमः’’ ‘‘इनस्सूर्येप्रभा’’विति चामरः- स एव गुणः- योक्त्रं मन्थन रज्जुरित्यर्थः। ‘‘गुणस्त्वावृत्ति-शब्दादिज्येन्द्रियामुख्यतन्तुष्वि’’ति नानार्थमाला- ‘‘मन्थानं मन्दरं कृत्वा योक्त्रं कृत्वाच च वासुकि’’मिति पौराणिकोक्तिरिहानुसंधेया- तेन- शोभितैः भगवत्कृतेन पुच्छग्रहोपायेन- अमृत लक्ष्मीलाभनिश्चयेन च प्रसन्नैः- तादात्विक वलाहक वर्षणेनाप्यायितैश्च- न त्वसुरैरिव तन्मुख विषज्वालापरिप्लुष्टैरिति भावः- यदुच्यते वैष्णवे पुराणे॥ ‘‘विबुधास्सहितास्सर्वे यतः पुच्छं ततः कृताः। कृष्णेन वासुकेर्दैत्याः पूर्वकाये निवेशिताः। ते तस्य मुख निश्वास वह्निनोपहतत्विषः। निस्तेजसोऽसुरास्सर्वे बभूवु रमितौजसः॥ तेनैव मुख निश्वासवायुनाऽस्तबलाहकैः। पुच्छप्रदेशे वर्षद्भिस्तथा चाप्यायितास्सुरा’’ इति। अत एव अमृतसाधनोत्कण्ठिभिः। अमृतस्य निश्रेयसस्य सुधायाश्च। अमृतं मोक्ष सुधयोरिति वैजयन्ती- साधने संपादने- उत्कण्ठन्त इति तथोक्तैः- ससंकल्पेच्छा विशेषशालिभिरित्यर्थः- ‘‘सर्वेन्द्रिय सुखाह्लादो यत्रास्तीत्यभिमन्यते। तत्प्राप्तीच्छां ससंकल्पामुत्कण्ठां कवयो विदु’’रिति लक्षणात्। बुधैर्विद्वद्भिर्देवैश्च- ‘‘ज्ञातृचान्द्रिसुरा बुधा’’ इति विश्वः। प्राथमिक पक्षे बुधैरित्यनेनैषां दैव संपदभिजातत्वं द्योत्यते। अत एवैषाममृत साधनोत्कण्ठितत्वमुक्तं युक्तं भवति। यद्गीयते ‘‘दैवी संपद्विमोक्षाये’’ति। अत एव चाहीन गुणशोभितत्वमप्येषां युज्यते- तदपि गीयते। ‘‘अभयं सत्व संशुद्धिर्ज्ञानयोग व्यवस्थितिः। दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्- अहिंसा सत्यमक्रोधस्त्यागश्शान्तिरपैशुनम्। दया भुतेष्वलोलत्वं मार्दवं ह्रीरचापलम्। तेजः क्षमा धृतिश्शौचमद्रोहो नातिमानिता। भवन्ति संपदं दैवीमभिजातस्य पाण्डवे’’ति। गुणानामहीनत्वविशेषणेन ‘‘दम्भो दर्पोऽतिमानश्च क्रोधः

गुणव्यतिकराभावस्सूचितः। यत्नात् - सर्वश्रुतिसामरस्यसंपादनानुरूप-चित्तैकाग्र्यनिष्पादनाद्यनुकूलप्रयत्नात्- अन्यत्र दैत्यसामरस्यसंपादनसकलौषध्यानयन प्रभृति प्रयत्नात्- तदुच्यते वैष्णवे- "इत्युक्ता देवदेवेन सर्व एव ततस्सुराः। संधानमसुरैः कृत्वा यत्नवन्तोऽमृतेऽभवन्। नानौषधीस्समानीय देवदैतेयदानवाः। क्षिप्त्वा क्षीराब्धि-पयसि शरदभ्रामलत्विषि। मन्थानं मन्दरं कृत्वा योक्त्रं कृत्वा च वासुकिं। ततो मथितुमारब्धा मैत्रेय! तरसाऽमृत''मिति। विमथितेन विचारितेन सता- अन्यत्र अविमथितेनेतिच्छेदः - अविर्मन्दरशैलः- "अवयशशैलमेषार्का" इत्यमरः। तेन करणेन मथितेन व्यालोडितेन सता- "कर्तृकरणे कृता बहुळ''मिति समासः। अस्मिन्पक्षेपि विशेषेण मथितेनेति व्याख्यानं मन्दम्। यद्यपि देवैरिवासुरैरप्युदधिर्मथितः तथापि देवानामेव तत्फलभाक्त्वात्तेषामेवेह उपादानमिति ध्येयम्। इह अस्मिन् लोके। परमश्चासौ पूरुषश्च- "पुरः कुषन्नि''त्यौणादिकः कुषन्प्रत्ययः। 'अन्येषामपी'ति दीर्घः- "पुरुषाः पूरुषा नर" इत्यमरः- तस्य प्रेयसी प्रियतमा- "द्विवचन विभज्योपपदे तरबीयसुना''वितीयसुन्प्रत्यये "प्रियस्थिरे''त्यादिना प्रियशब्दस्य प्रादेशः। "उगितश्चे''ति ङीप् - लक्ष्मीरित्यर्थः - ईयसुन्प्रत्ययेन भूनीलादि सर्वदिव्यमहिष्यपेक्षया लक्ष्म्या अतिशयितप्रियत्वमुक्तम्- प्रकाशं जगदीश्वरत्वेन प्रसिद्धिम्। पक्षे। आविर्भावं-नीयते-"नीवह्योर्हरतेश्चे''ति वचनाद्द्विकर्मकत्वम्- पूर्वोक्तसामग्री समवधानाभावे लक्ष्मीप्रकाशनं दुर्घटमिति भावः। अत्र विष्णु पुराणोक्तौ श्रियो वैभवाविर्भावा वुभावप्यनुसंधेयौ। बुधैर्विमथितेनेत्यनेन- आसुरसंपदभिजातानां पुनः पुनर्विचारयतामपि "न स जानाति शास्त्रार्थं दर्वी सूपरसानिव'' - "नैवासुरप्रकृतयः प्रभवन्ति बोद्धु''मित्युक्त रीत्या तदीयतत्त्वस्य दुर्ज्ञेयत्वेन "तथाचाहं करिष्यामि यथा ते त्रिदशद्विषः-न प्राप्स्यन्त्यमृतं देवाः केवलक्लेशभागिन" इत्युक्तरीत्या, उदधिमथनप्रवृत्तानामप्यसुराणामिव केवलक्लेश-भागित्वमेवेति व्यज्यते।

अत्र कृत्यादिषु सिन्धुत्वादि रूपणात् रूपकालंकारः - बुधैरित्यादिपदाश्रयार्थद्वय श्लेषभित्तिकाभेदाध्यवसायमूलकातिशयोक्त्यनुप्राणित इत्यनयोरंगांगिभावसंकरः - यदीयेत्याद्युत्तरवाक्यार्थस्य पराशरप्रणामकरणरूपवाक्यार्थं प्रति हेतुत्वात्काव्यलिंग भेदश्चोक्तरूपकेणोत्तभ्यते। वृत्त्यनुप्रासश्शब्दालंकारः। किंच कविगतलक्ष्मीविषयक भक्तिभावस्य तद्गतविष्णुपुराणविषयकरतिभावांगत्वात्तस्य च पराशरविषयक भक्तिभाव परिपोषकत्वात्प्रेयोऽपरांगद्वयमंगांगीभावसंकीर्णम् - सर्वेषामेषामेकवाचकानुप्रवेश

तस्या हन्त तवापि येन विभुता सुष्ठु प्रतिष्ठापिता ।। 

एवं पराशरं प्रणम्योक्तक्रमेण ततोऽप्यभ्यर्हितं श्रीमन्निगमान्तमहादेशिकं श्रेयांसि प्रार्थयते, दद्यादिति।। कुत्सिता दृष्टिर्ज्ञानं येषां ते कुदृष्टयः-दुर्मतकथकाः- त एव सर्पाः - दृष्टिविषाख्याः पन्नगा इत्यर्थः-यथा ते दर्शनमात्रेणापि जनानां मोहमावहन्ति, तद्वदमी अपीति भावः - अत एव कुदृष्टिशब्दोपादानम् - अनेन च रूपकेण कुदृष्टीनां तामसाधमत्वं द्योत्यते - तथा च स्मर्यते मनुना - "स्थावराः क्रिमिकीटाश्च मत्स्या स्सर्पास्सकच्छपाः- पशवश्च मृगाश्चैव जघन्या तामसी गति"रिति। सर्पशब्दग्रहणं चैतत्प्रमाण प्रत्यभिज्ञापनार्थमेवेति ध्येयम्। तेन च तत्सिद्धान्तानामनर्थावहत्वं द्योत्यते। "या वेदबाह्यास्स्मृतयो याश्च काश्च कुदृष्टयः। सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि तास्स्मृताः। यद्वेदबाह्यं कर्मस्यान्मामुद्दिश्योपसेव्यते। तद्रौद्रमिति विख्यातं कनिष्ठगतिदं नृणाम् - यद्धीनतपसायुक्तं केवलं तामसं तु तत् - तद्दुर्गतिप्रदं नृणामिह लोके परत्र चे"ति स्मरणात् - तेषां गरुडः- अनेन "उद्धरिष्यति वेगेन वैनतेय इवोरगान्" इत्युक्तरीत्याचार्यस्य कुदृष्टिदर्पहन्तृत्वं तेषामेतद्यदृच्छादर्शनेनापि निर्वीर्यत्वं च ध्वन्यते - अनेनैव रूपकेणाचार्यस्य सात्विकत्वमपि व्यज्यते। "शुद्धसत्वमयास्सर्वे ह्यनन्तगरुडादय" इति भगवच्छास्त्रोक्तेः - गरुडशब्दग्रहण-मप्युदाहृत प्रमाणप्रत्यभिज्ञापनार्थम् - तेन तत्सिद्धान्तितार्थानां "सात्विकतया प्रबलैश्च शास्त्रै"रित्युक्तरीत्या प्राबल्यं - मोक्षहेतुत्वादिकं च द्योत्यते - "यत्सत्वं स हरिर्देवो यो हरिस्तत्परं पदम्। सत्वेन मुच्यते जन्तुस्सत्वं नारायणात्मकम्। सात्विकेष्वधिकं तद्वद्विष्णोर्माहात्म्यमुच्यते। तेष्वेव योगसंसिद्धाः, गमिष्यन्ति परां गति"मित्यादि स्मरणात्। "सात्विका मोक्षदाः प्रोक्ता राजसास्स्वर्गहेतवः- तथैव तामसा देवि निरयप्राप्तिहेतवः- ऊर्ध्वं गच्छन्ति सत्वस्था मध्ये तिष्ठन्ति राजसाः- जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसा" इत्यादिक मिह भाव्यम्। त्रयः अवयवाः अस्यास्त्रयी- वेदत्रयमित्यर्थः- संख्याया अवयवे विहितस्य तयपो"द्वित्रिभ्यां तयस्यायज्वे"त्ययजादेशे" "टिड्ढाणञ्"त्यादिना ङीप्। तस्याः अन्ताः उपनिषद इति विद्या- तस्याः गुरुराचार्यः- प्रवर्तक इति यावत्। अनेन "द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ती"त्युपक्रम्य "अथ परा यया तदक्षरमधिगम्यत" इति श्रुतायाः परविद्याया एवाचार्यत्वे "तत्रापरा ऋग्वेदो यजुर्वेदस्सामवेदोऽथर्ववेदश्शिक्षा कल्पो व्याकरण"मिति श्रुताया अपरविद्याया अप्याचार्यत्वं कैमुतिकन्यायसिद्धमिति द्योतितम्- तेन सर्वतन्त्रस्वतन्त्रत्वमप्यस्य सूचितम्। त्रय्यन्तविद्यागुरुरित्यनेन त्रय्यन्त

स्वारस्यात्तस्या दुहितृत्वं च व्यज्यते- ततोऽल्पश्रुतभयचकितायास्तस्या अनेन लालनीयत्व पोषणीयत्व दयनीयत्वादिकं द्योत्यते। यतस्स्मर्यते मनुना॥ ''पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा। पूज्या.लालयितव्याश्च बहुकल्याणमीप्सुभि''रिति- दुहिता कृपणं पर''मिति च। कृपणं कृपापात्रमित्यर्थः - त्रयीभयप्रशमनार्थमेव खल्वास्यावतारः - यदुच्यते- ''त्रय्या वैयाकुलीं हर्तुमव्याजकृपया हरिः - गुर्वात्मनावतीर्णो यस्सर्वाचार्यं तमाश्रय'' इति। ''इतिहास पुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यती''त्यादिकमप्यत्रानुसंधेयम्। अनेन श्रीरंगनाथानुग्रहलब्धं वेदान्ताचार्य इति दिव्यनामोक्तं भवति। अत्र- ''विश्वस्मिन्नामरूपाण्यनु विहितवता तेन देवेन दत्तां वेदान्ताचार्यसंज्ञामवहित बहुवित्सार्थमन्वर्थयामी''त्याचार्य श्रीसूक्तिरनुसंधेया। श्रीः भगवत्कैंकर्य लक्ष्मीरस्यास्तीति श्रीमान्। अतिशायने प्रशंसायां भूम्नि नित्ययोगे वा मतुप्। यदाहुः। ''भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्ति विवक्षायां भवन्ति मतुबादय'' इति। वेंकटनाथ इति देशिकमणिः- ''वेंकटेशावतारोऽय'' मित्युक्तरीत्या तदवतारत्वेन लब्ध तद्दिव्यनामेति भावः - अनेन ''श्रीमान्वेंकटनाथार्य''इत्युक्त-सांस्कारिकं नाम प्रतिपादितम्। देशिकशब्दनिर्देशेनास्य देवतारूपधारित्व शिष्यानुग्रहीतृत्व करुणानिधित्वानि सूचितानि- यन्निरुच्यते देशिकशब्दो हारीतेन। ''देवतारूपधारित्वात् शिष्यानुग्रहकारणात्। करुणामयरूपत्वाद्देशिकः प्रोच्यते बुधै''रिति। मणित्व रूपणेन तेजस्वित्वात्रासत्व मंगळत्वादीनि व्यज्यन्ते- तदुक्तं ''अत्रासं मानदं रत्नं'' इत्यादि; भूयांसि अतिशयेन बहूनि। बहुशब्दादीयसुनि ''बहोर्लोपो भू च बहो''रिति बहोः परस्येयस आद्यवयवेकारलोपो बहुशब्दस्य भू इत्यादेशश्च- श्रेयांसि- अतिशयेन प्रशस्यानि विवक्षितश्रीस्तुतिरूपवाचिककैंकर्योपयिकानि कल्याणानीत्यर्थः - अद्येत्यस्यानुगुण्यात्- प्रशस्य शब्दादीयसुनि ''प्रशस्यस्य श्रः'' इति श्रादेशः। नः अस्मभ्यं- अद्य- दद्यात्। ददातेर्जौहोत्यादिकात्प्रार्थनायां लिङ्। अत्र ''रक्षन्महामणिं यत्नाच्छ्रेयांसि लभते नरः। अलक्ष्मीर्दूरतो याति नास्य दैन्यं क्वचिद्भवे''दिति रत्नशास्त्रप्रसिद्धं महामणेश्श्रेय प्रदत्वादिकम् अनुसंधेयम्।

तस्य प्रस्तुत स्वविवक्षितार्थोपकारकत्वं दर्शयं स्तं विशिनष्टि। दत्स इति। हे देवि सर्वेश्वरदिव्यमहिषि- ''राजाग्रमहिषी मूर्वा देवी''ति रत्नमाला- अनेनाश्रितवैभव वितरणोपपत्ति पौष्कल्यं सूचितम्। हे रमे लक्ष्मि-या त्वं-''देवजुष्टामुदारा''मिति श्रुतिप्रथित महौदार्येत्यर्थः-भजतां सेवमानानां चतुर्मुखादीनां वैभवं विभुत्वं तत्तदनुरूपाधिपत्यं-दृष्टिलवेन

वैभवत्व द्योतितम्- येन सर्वतन्त्रस्वतन्त्रेण वेदान्त विद्यागुरुणेत्यर्थः- अनीदृशैर्नानाशास्त्रार्थ क्रोडीकारेण वक्ष्यमाणं लक्ष्मीविभुत्वप्रतिष्ठापनमशक्यमिति भावः- विभुता आधिपत्यं- पत्युरिव सर्वगतत्वमिति तु तत्वम्। ''विभुः प्रभौ सर्वगते'' इति मेदिनी। सुष्ठु निर्बाधं यथा स्यात्तथा-प्रतिष्ठापिता। चतुश्श्लोक्यधिकारादाविति यावत्। सुष्ठु प्रतिष्ठापितेत्यनेन- इतःपरं तद्विभुत्व समर्थनस्य कुतर्कैरचालनीयत्वं द्योतितम्- हंतेति स्वतस्सिद्धवैभवायाश्श्रियोऽपि विभुताप्रतिष्ठापनानुसंधानजनिताश्चर्ये- यद्ययमाचार्यो नावातरिष्यत्तदा श्रियो वैभवं स्वतस्सिद्धमपि जगति न प्रत्यष्ठास्यदिति भावः। अनेन ''सुमणिः प्रभुतां दत्ते समृद्धिं बुद्धिमुत्तमाम्। धनं धान्यं च पुत्रांश्च तद्रक्षेत्सुमणिं नृप'' इति रत्नशास्त्रोक्तरीत्याचार्यस्य मणित्वरूपणानुरूपकार्यकारित्वमुक्तं भवति। अत्र यच्छब्दस्योत्तरवाक्यस्थत्वात्पूर्ववाक्ये तच्छब्दानुपादानेपि न दोष इति ध्येयम्।

अत्र कुदृष्टिसर्पगरुड इत्यत्र केवलपरंपरित रूपकं- देशिकमणौ गरुडत्वारोपस्य कुदृष्टिषु सर्पत्वारोपहेतुत्वात्- एकवारमेव रूपणाच्च- परंपरितरूपकत्वं च रूपकहेतुरूपकत्वं- देशिकमणिरित्यत्र निरवयवरूपकम्- मणित्वमात्र-रूपणात्तदवयवस्य कस्याप्यनिरूपणाच्च- उत्तरार्धे सारालंकारः-भजमानचतुर्मुखाद्यपेक्षया लक्ष्म्यास्तदपेक्षया देशिकमणेरुत्कर्षवर्णनात्- ''उत्तरोत्तरमुत्कर्षस्सार इत्यभिधीयत'' इति लक्षणात्। भजदपेक्षया लक्ष्म्या उत्कर्षमार्थ-मादाय लक्षणानुगतिरिति ध्येयम्। देशिकमणिश्रेयः प्रार्थनरूपवाक्यार्थस्य तदुत्कर्ष वर्णनपरोत्तरवाक्यार्थहेतुकत्वात्काव्यलिंगभेदश्च- सारालंकारेणांगभूतेन संकीर्यते- वृत्त्यनुप्रासस्य संकीर्णकाव्यलिंगस्य चैक वाचकानुप्रवेश- संकरः। अन्योन्यनैरपेक्ष्येण संसृष्टाभ्यां पूर्वोक्तरूपकाभ्यां काव्यलिंगादीनामपि संसृष्टिः- किंच। निगमान्तमहादेशिकेनालम्बनेन- तदीयसर्वतन्त्रस्वतन्त्रता- कुदृष्टि निरासकता- श्रीविभुत्व प्रतिष्ठापकताद्युद्दीपनेन च विभावितः- तदनुस्मरणजनितनयनविकासादिभिरनुमीयमानैः अनुभावितस्तादृशैरेव हर्षौत्सुक्यादिभिर्व्यभिचारितो विस्मयाख्यस्स्थायी परिपोष्यत इत्यद्भुत रसो व्यज्यते। तस्य च कविगत निगमान्तदेशिकमणिविषयकभक्तिभावांगकत्वाद्रसवद परांगम्। लक्षणं तूक्तम्। एतच्च पूर्वोक्तालंकारैः एकवाचकानुप्रवेशेन संकीर्यत इति संक्षेपः। रसभावप्राधान्याप्राधान्य विवक्षावशा दसलंक्ष्यक्रमव्यंग्यत्व गुणीभूतव्यंग्यत्व व्यपदेशव्यवस्था प्रथमश्लोकेऽस्माभिर्निरूपिता सर्वत्र स्मर्तव्या मनीषिभिः। शार्दूलविक्रीडितं वृत्तं॥ लक्षणं तूक्तम्॥7॥

एवमाचार्यवर्गप्रणामजनितलक्ष्मीस्तवनाधिकार उक्तः। इयन्तमपि समयं ''नगरार्णवशैलर्तु चन्द्रार्कोदयवर्णनैः। उद्यानसलिलक्रीडामधुपानरतोत्सवैः'' इत्याद्युक्तरीत्या वृथैव तुच्छतमविषयवर्णनेन जनितां निर्विण्णतां परिहर्तुमुन्मीलित-लक्ष्मीस्तवनसंरम्भां स्वभारतीमभिनन्दन्विवक्षितं विज्ञापयति। शीतेति। हे जलधितनये-जलधिशब्दोऽत्र दुग्धाब्धिपरः- तत्पुत्रीत्यनेन मधुरत्वोज्जीवकत्व शिशिरत्व सेवनीयत्वोदारत्व शुचित्वादिकं यथार्हं द्योत्यते- एतच्चावश्यवर्णनीयवास्तवगुणसमृद्धि सूचनार्थम्-शीतज्योतिश्चन्द्रः-शिखरी गिरिः-नगरी-राजधानी-सागरस्सगरपुत्रखातो लवणोदधिः-अम्भोधरो मेघः- ते आदिर्यस्य तत्- ''सामान्ये नपुंसकं'' अव्यक्तलिंगस्य भणितौ यत्प्रयुज्यत'' इति नपुंसकलिंगः शेषेऽमरसिंहानुशासनात्- तस्य ''तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्ये''ति पुंवद्भावः। आदिशब्देन- उद्यानसलिल क्रीडामधुपानादीनां ग्रहणम्। अत्र वस्तुन इति विशेष्यानुपादानं त्वीदृशस्यावस्तुताद्योतनार्थम्। शीतज्योतिरित्यनेन तस्य निसर्गतो जडत्वं- तेन-स्तुत्यनुरूपं उपकारकरणाक्षमत्वं च द्योत्यते। न हि स्वयं जडोऽन्येषां जाड्यमीष्टे निराकर्तुम्। शिखरीत्यनेन स्वभावकाठिन्यं तेन किं ते दयेरन्निति च व्यज्यते। नगरीत्यनेन- ''अटवीं राजधानीं च दूरतः परिवर्जये''दित्युक्तरीत्या तासां सद्भिर्दूर परिहरणीयत्वं द्योत्यते। सागर इत्यनेनामधुरस्वभावोयं सगरकुलतिलकस्य दाशरथेरपि प्रार्थनया प्रियं न कृतवान्किमन्येषां कुर्यादिति व्यज्यते।

अम्भोधर इत्यनेन जलाहरणनियुक्तपरिचारकत्वं द्योत्यते - तेन किमीदृशस्य गम्भीर मधुरोदारकविसार्वभौम वचनरसाभिज्ञता- तदनुगुण फलप्रदानप्रवृत्तिश्च घटेतेति ध्वन्यते। तस्मादेतद्गुणसमृद्धिवर्णने न किंचित्प्रयोजनमिति भावः। यत्किंचित्फलोद्देशेनैव खलु कस्यचित्कंचित्प्रति स्तुतौ प्रवृत्तिः। अथ मास्तु तत्कृतः प्रत्युपकारः- वास्तव तत्समृद्धिवर्णने किं नश्छिन्नमित्यत आह। मिथ्यासमृद्धिमिति- अयथार्थभूता मारोपितां संपत्तिमित्यर्थः-समृद्धिरप्येषां न वास्तवीति भावः। अतः- ''तस्मान्नानृतं वदेत्'' इति निषिद्धवृथानृत जल्पने- ''नानृतात्पातकं पर''मित्युक्तरीत्या महान् प्रत्यवाय एव फलिष्यति, न तु कश्चिदपि पुरुषार्थ इति व्यज्यते। ननु प्रमादात् सकृत्कृतमिद मनृतजल्पनं न प्रत्यवायायेत्यत आह जल्पं जल्पमिति। जल्पित्वा जल्पित्वा। ''अभीक्ष्णये णमुल्बे''ति णमुल्। पुनः पुनः

प्रमुच्यत'' इति श्रीस्तुति फलतया सनत्कुमार संहितोक्तमप्यत्रैव अनुकूलम्। ननु विनाऽनुतापं कथं घटतां प्रायश्चित्तं ''कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते। प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं पर''मित्युक्तरीत्याऽनुताप संभव एव विवक्षित प्रायश्चित्तस्य कार्यकारित्वादित्यत आह। निर्विण्णेति। निर्वेदं प्राप्ता- निर्वेदो नाम दुःखादिजन्यनैष्फल्यमतिः। यल्लक्ष्यते ''तत्वज्ञानाच्च दौर्गत्यादापदो विप्रयोगतः। दुःखादेरपि नैष्फल्यमतिर्निर्वेद उच्यत'' इति। निष्पूर्वकाद्विदेः कर्तरि क्तः- ''रदाभ्यां निष्ठातो नः पूर्वस्य च दः'' इति नत्वं ''निर्विण्णस्योपसंख्यान''मिति णत्वं च। नन्वभिनयमात्रमेवैतत्स्यान्नतु वस्तुतो निर्विण्णे''त्यत आह। नन्विति। निर्विण्णा ननु निर्विण्णैव- नात्र संदेग्धव्यमिति भावः। ''प्रश्नावधारणानुज्ञानुनयामन्त्रणे नन्वि''त्यमरः। यद्वा। नन्वित्यनुनये। निर्विण्णा खलु- किमहं त्वत्सन्निधावप्यनृतं वदेयमिति भावः। अस्तु नाम निर्विण्णा- उचितज्ञानवैराग्यधर्मेच्छा यत्नाद्यभावे कथमीदृशे शुभे कर्मणि प्रवर्ततां- तत्राह- भगवतीति। ज्ञानवैराग्यधर्मेच्छा यत्नादिसम्पन्नेत्यर्थः। ''भगश्श्रीयोनिवीर्येच्छा ज्ञानवैराग्यकीर्तिषु। माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षे च ना रवौ'' इति मेदिनी- भूम्न्यतिशायने नित्ययोगे प्रशंसायां वा मतुप्। अतः ''एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवांकः'' इत्याद्युक्तरीत्या बहुशः कृतोप्ययमेको दोषो न गणनीय इति भावः। भगवतीत्यनेन पूज्यत्वाभिधायिनाऽस्याः ''वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च। वेषवाग्वृत्तिसारूप्यमाचरन्विचरेदिहे''त्युक्तरीत्या श्रीस्तुतिप्रवृत्तिरेव स्वरूपानुरूपा- न तु नगरार्णवादिवर्णनव्यसनितेति च व्यज्यते। अत एव निर्वेदोप्यस्या युज्यत इति भावः। मे मम। नत्वन्यस्य। अतस्साधु वेद्म्यस्यास्तात्पर्यमिति भावः। इयं एतावन्तं कालं दैवोपहतत्वाद्दुर्वर्णनप्रवृत्ता- संप्रति स्वानुरूपकैंकर्येच्छावती चेति साभिनयनिर्देशोयम्। भारती वाग्देवता। ''ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती''त्यमरः।

त्वदीयं- समस्तकल्याणगुणसमृद्धिमत्यास्तव संबन्धीत्यर्थः- ''तस्येद''मित्यणि ''त्यदादीनि चे''ति वृद्धिसंज्ञायां ''वृद्धाच्छ'' इति छः - स्तोत्रं परमार्थ गुणवर्णनं- न तु शीतज्योतिरादीनामिव मिथ्यासमृद्धिवर्णनमिति भावः- तथा च द्रमिडभाष्यं ''नासता स्तुतिरुपपद्यत'' इति। आहुश्च वरदाचार्याः ''कथमसता गुणेन कथितेन नुतिर्भवती''ति। गुण्यवच्छिन्नगुणाभिधानं हि स्तोत्रमाहुर्नीतिविदः- ''सर्वेश्वरेश्वरः कृष्णस्स्तूयते यदि पण्डितैः। तथापि स्वल्पमेवोक्तं भूतार्थे कतमा स्तुति''रिति ''गुणारोपेण वचनं स्तुतिरिति

इत्यमरः। यद्वा स्वैरं मन्दमित्यर्थः। अनेन बहुकालानुवृत्त दुर्वर्णन व्यसन वासनाया इदानीमेव शान्तत्वात्तद्विलक्षणेऽस्मिन्पथि प्रत्यग्रप्रवृत्तेश्च साशंकत्वं द्योत्यते। आरब्धुं कामो यस्यास्सा- आरब्धुकामा। "तुं काममनसोरपी"ति तुमुनोऽन्त्यमकारस्य लोपः। स्फुरति कुतूहलादुद्वल्गतीति यावत्। "स्फुर संचलने"तौदादिकः। अतोऽस्यास्तुति प्रवृत्तिविसंस्थुलतां वीक्ष्याविलम्बेन तदनुज्ञादाने कृपां कुर्विति भावः। भारतीत्यनेन स्नुषात्वं- तेनातिशयेनादरणीयत्वमपि द्योत्यते। भगवतीत्यनेन गुणपौष्कल्यसूचकेन स्नुषात्वमात्र प्रयुक्तासूयाया अप्यविषयत्वं व्यज्यते। नन्वेवमपि श्वश्रूस्नुषयोरावयोः सर्वलोकप्रसिद्धामसूयां कथमन्यतर गुणवत्त्वमुभय गुणवत्त्वं वा प्रतिबध्नीयादित्यत आह। जननीति। जननीत्व समानाधिकरणमिदं श्वश्रूत्वं त्वयि लोकविलक्षणं दृश्यते- अतः- "श्वश्रूस्नुषाशब्द-मात्रात् द्वेषः स्त्रीणां भवत्यहो। यतो लक्ष्मीसरस्वत्यौ नान्योन्यमनुरज्यत" इत्ययमविचारितोत्प्रेक्षितो दोषो न वास्तव इति भावः। अप्रतियोगिक जननीशब्देन- मातरं पद्ममालिनीमिति श्रुत्युक्तरीत्या- अखिलजगन्मातरमस्मन्मातर मित्याचार्य श्रीसूक्तिरीत्या च सर्वलोक जननीत्वमुक्तं भवति। तेन जननीत्वमेव तव स्वाभाविकं श्वश्रूत्वं त्वौपाधिकमेवेति व्यज्यते।

यद्वा। चित्रमित्येतत् स्फुरतीत्यस्यानन्तरं योज्यम्। दुर्वर्णनेन निर्वेदश्श्रीस्तुति प्रवृत्तिश्चाश्चर्यमिति भावः। अनेनाहो मम भागधेयं कियदिति कवेर्धन्यतातिशयाभिनन्दनं व्यज्यत इति वस्तुध्वनिः। अत्र शीतज्योतिरादिमिथ्यासमृद्धिजल्पनपौनःपुन्यस्य होतोर्निर्वेदेन हेतुमता सहवर्णनाद्धेत्वलंकारः- "हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यत" इति लक्षणात्। निर्विण्णेत्यस्य विशेषणगत्या स्तोत्रारम्भकामनाहेतुत्वात्पदार्थहेतुकं काव्यलिंगमुक्तहेत्वलंकारेणोत्तभ्यत इत्यनयोरंगांगिभावसंकरः। तकाराद्यनेक व्यञ्जन पुनरावृत्तिरूप वृत्त्यनुप्रासेन सहास्यैकवाचकानुप्रवेश लक्षणस्संकरः- किं च। स्वैरमारब्धु कामेत्यनेन हर्षाख्यव्यभिचारिभावो व्यज्यते। "मनःप्रसादो हर्षस्स्यादिष्टावाप्त्यादि संभवः। अत्र नेत्रास्यफुल्लत्वं पुलकानां प्ररोहणम्। प्रियभाषणमालाप इत्याद्यं चेष्टितं भवे"दिति लक्षणात्। स्फुरतीत्यनेन-औत्सुक्यं नाम व्यभिचारिभावो व्यज्यते "कालाक्षमत्वमौत्सुक्य-मभिलाषादिहेतुभि"रिति लक्षणात्। अनयोश्च भावयोस्संभूय वृत्तेर्भावसंधिः। अस्य च कविगतलक्ष्मीविषयकभक्तिभावांगत्वेन भावसंध्याख्यमपरांगव्यंग्यम्। "भावांगं चेद्भावसंध्यपरांग"मिति लक्षणात्- भावसंधेरेव प्राधान्येन चमत्कारितासंरम्भे असंलक्ष्य क्रमव्यंग्यध्वनिरेवेति ध्येयम्। तदुक्तं काव्यदर्पणे "रसभावतदभास भावशान्त्यादयो यदा।

शंकौत्सुक्ययोस्संभूय वृत्तेर्भावसंधिरिति भेदः। हर्षशंकयोरेकतरस्मिन्कविसंरम्भविश्रान्तेः दुर्निरूपत्वात्सन्देहसंकरः। हेत्वलंकारमात्रलेखनं त्वत्र केषांचिदनिरूपणविजृंभितम्। मन्दाक्रान्तावृत्तम्। ''मन्दाक्रान्ता जलधि षडगैम्भौं नतौ ताद्गुरू चे''दिति लक्षणम्॥8॥

मू. मदान्धक्षोणीपत्यपशदमनःप्रीणनकृते
नमस्कारं ब्रूमो भगवति! चमत्कारवचसे।
विधात्रीमानन्दं विपुलमिह चामुत्र च तव
स्तुतिं प्रस्तौत्वंहोभरनिरसनायाद्य रसना॥ 9

ननु शीतज्योतिरादि मिथ्यासमृद्धिवर्णनं मास्तु फलाय- ''यस्य प्रसादे पद्मीश्रीर्विजयश्च पराक्रमे। मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः'' ''राजा सत्यं च धर्मश्च राजा कुलवतां कुलम्। राजा माता पिता चैव राजा हितकरो नृणाम् - देवतेव हि सर्वार्थान्कुर्यात् राजा प्रसादित'' इत्यादि प्रमाणसहस्र प्रतिपन्नप्रभावराजगुण परमार्थसमृद्धि-वर्णनपरचमत्कृति भूयिष्ठकाव्यरचनेनाभीष्टसिद्धिः- नाप्यनृतवर्णनप्रयुक्तप्रत्यवाय इत्यत्र- ''न यद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं प्रगृणीत कर्हिचित्। तद्वायसं तीर्थमुशन्ति मानसा न यत्र हंसा वि रमन्त्युशिक् क्षया''इत्याद्युक्तरीत्या भगवद्वल्लभाव्यतिरिक्तविषयकप्रबन्धानां चमत्कृति भूयिष्ठानामपि सर्वथा नैष्फल्यं- ''स वाग्विसर्गो जनताघ-विप्लवो यस्मिन् प्रतिश्लोकमबद्ध-वत्यपि। नामान्यन्तस्य यशोऽकितानि यच्छृण्वन्ति गायन्ति गृणन्ति साधव'' इत्याद्युक्तरीत्या दोषवत्त्वेऽपि लक्ष्मीस्तवात्मकस्य काव्यस्य सर्वानिष्टविघटन-सर्वाभीष्टघटनधुरीणतया साफल्यं- गुणवत्त्वे तु किं पुनरिति चाभिसंधाय स्तुत्युपक्रमाभ्यनुज्ञां श्रियमभ्यर्थयते। मदेति। हे भगवति- अखिलहेयप्रत्यनीकानन्तकल्याणैकताने! अनेन ''ज्ञानशक्तिबलैश्वर्य वीर्यतेजांस्यशेषतः। भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभि''रित्युक्तरीत्या भगवत इव तद्दिव्यमहिष्यास्तवाप्येतदुभयलिंगत्वमसंकुचितमेवेति व्यज्यते। अत एव ''भगवतीं श्रियं देवी''मिति गद्येप्यनुगृहीतम्। अनेन भगवत्याः वक्ष्यमाणमदान्धक्षोणीपत्यपशदानां च कनकाचलकृष्णायसपरमाण्वोरिव महद्वैलक्षण्यं द्योतितम्- मदो नाम- ''संमोहानन्द संभेदो मदिरादिकृतो मद'' इत्युक्तलक्षणः कश्चिद्गुणविशेषः। यः प्रोच्यते कलाविलासे ''एकस्सकलजनानां हृदयेषु कृतास्पदो मदशत्रुः। येनाविष्टशरीरो न शृणोति न पश्यति स्तब्धः। मौनं वदननिकूणन मूर्ध्वेक्षणमन्यलक्ष्यता चाक्ष्णोः। गात्रविलेपन वेष्टनमग्रं रूपं

अन्तस्सुखरसमूर्छामीलितनयन स्समाहितध्यानः। धनमद एष नराणामात्मारामोपमः कोऽपि। उन्मादयत्यविषये विविधविकार स्समस्तगुणहीनः। मूढमदस्त्वन्यो यो जयति विचित्रो निरालम्बः। स्तम्भान्न पश्यति भुवं खेचरदर्शी सदा तपस्विमदः। भक्तिमदोऽद्भुतकारी विस्मृतदेहश्चलः प्रकृत्यैव। आकोपरक्तनयनः परवाङ्मात्रासहः प्रलापी च। विषमश्श्रुतमदनामा धातुक्षोभान्नृणां मूर्तः। सततभृकुटिकराळः पुरुषाक्रोशी हठाभिघात परः। अधिकारमदः पुंसां सर्वाशीराक्षसः क्रूरः। पूर्वपुरुष प्रताप प्रथित कथाविस्मृतान्यनिज कृत्यः। कुलमद एकः पुंसां सुदीर्घदर्शी महाऽज्ञानः। वर्जित सकलस्पर्शस्सर्वाशुचिभावना निरालम्बः। आकाशेऽपि सलेपश्शौचमदो नित्यसंकोचः। सावधयस्सर्वमदा निज निजमूलक्षये विनश्यन्ति- वरमद एकः कुटिलो विजृम्भते निरवधिर्भोगी। पानमदस्तु जघन्यस्सर्वजुगुप्सास्पदं महामोहः। क्षणिकोऽपि हरति सहसा वर्षसहस्रार्जितं शीलम्। विद्यावति विप्रजने हस्तिनि कुकुरे श्वपाके च। मद्यमदस्समदर्शी स्वपरविभागं न जानाति।'' इत्यादिना- अत्र संकोचकाभावेन मदशब्देन यथा संभव मुक्तविधस्य सर्वमदस्यापि संग्रहः। मदेन- अन्धाः ''मनुष्यो हि मदोन्मत्तः पश्यन्नपि न पश्यती''त्युक्तरीत्या श्रुतशील परिचयादिकं पृष्ठतः कृत्वा नित्यसंस्तुतानप्यज्ञातमुखानिवानाद्रियमाणाः कृत्याकृत्यविवेचन विधुरा इति यावत्। अपशदशब्दो निहीन वाची। ''निहीनोऽपशदो जाल्म'' इत्यमरः - ''अपशीयत इत्यपशदः - शद्लृशातने'' इति टीकासर्वस्वकृत् - ''अपकृष्टमपकृष्टे वा सीदतीत्यपसदः- षद्लृ विशरणादौ- अच्'' इति सुधाकृत्- अमुं तालव्यतृतीयमेव दाक्षिणात्याः पठन्ति- औत्तराहास्तु दन्त्य तृतीयम् - उभयत्राप्युपपत्तिर्दर्शिता।

क्षोणीपतयोऽपशदाः क्षोणीपत्यपशदाः निहीना राजान इत्यर्थः ''कुत्सितानिकुत्सनै'' रिति समासे विशेष्यस्य पूर्वनिपातः- न च क्षोणीपतिशब्दस्य स्वभावतः कुत्सन वाचित्वाभावात्कथं कुत्सितानीत्यनेन समास इति वाच्यम्- मदान्धत्वेन क्षोणीपतीनां कुत्सितत्वं- न तु वस्तुतस्ते कुत्स्यन्ते- ''बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः। महती देवता ह्येषा नररूपेण तिष्ठती''ति स्मरणात्- यथा वैयाकरणखसूचिरित्यत्र न वस्तुतो व्याकरणं तदध्ययनं वा कुत्सितं- वेदांगत्वेन तस्य प्रशस्तत्वात्- किं तु प्रतिभानाभावे निष्फलत्वात् कुत्स्यते- तथेहापि- अत उक्तस्समासो नानुपपन्न इति ध्येयम्। क्षोणीपत्यपशदेत्यस्य यदि स्यादुदाहृतप्रमाणानुसारेण राज्ञामधुनातनानां गुणभूयिष्ठता- तदा ''यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेव वा। तत्तदेवावगच्छ त्वं मम तेजोंऽश संभव''मिति न्यायेन तेषां भगवद्विभूति

सर्वाणि गुणलेशविधुरा दोषभूयिष्ठाश्चेति भावः। तथा मनसः प्रीणनं प्रीतिसंपादनं करोतीति तथोक्ताय- तन्मनः प्रीणनमात्रमेव फलं- न तु तेन कश्चित्पुरुषार्थ इति भावः- चमत्कारः। शब्दालंकारादिचातुर्यं- तद्युक्ताय वचसे- कवनरूपायेत्यर्थः- मध्यमपदलोपी समासः- वस्तुतस्तेषु गुणाभावाद्वितथायेति हार्दोऽभिप्रायः। नमस्कारं नमस्कारशब्दं- ब्रूमः व्यक्तं कथयामः- ब्रूञ् व्यक्तायां वाचि। नमस्कारशब्दोच्चारणे न कश्चित्संदेह इति भावः। पुनः पुनरस्मान्मा कदर्थीकार्षीदिति सकृदेव प्रणामवचनं ब्रूम इति लोकोक्तिरियम्-अत्र नमश्शब्दस्य ''मह्यं नमोऽस्तु कवये'' ''दुरीश्वरद्वार बहिर्वितर्दिकादुरासिकायै रचितोयमञ्जलि''रित्यत्रेव निन्दाभिप्रायगर्भता। अत एव च्छेकोक्तिरलंकारः ''छेकोक्तिर्यत्र लोकोक्तेस्स्यादर्थांतर गर्भते''ति लक्षणात्। मदान्धवसुन्धराधिपापशदहृदयोल्लासन व्यसनिनीं कवितामितःपरं न कदाचिदपि स्मराम इति भावः। नमस्कारानिति पाठापेक्षया नमस्कारमिति पाठ एव रमणीयः- चमत्कारवचस इत्येतदानुगुण्येन उक्तरीत्या लोकोक्त्यनुरोधेन च चमत्कारकारित्वात्- ननु नरपति हृदयरञ्जनौत्सुक्य वैमुख्ये सरसकवनरचना रसना किंकुरुतां तत्राह। विधात्रीमिति। इह च अस्मिन् प्रत्यक्षदृश्यमाने लोके च। अमुत्र च विप्रकृष्टे परस्मिन् लोकेऽपि- ''इदमः प्रत्यक्षगतं समीपतरवृत्ति चैतदोरूपम्। अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्'' इत्युक्तेः- ''इहामुत्र च वर्धत'' इत्यादौ तथैव प्रसिद्धेश्च - अन्योन्य समुच्चायक चकारद्वयेन वक्ष्यमाणानन्दप्रदाने कक्ष्याविभागो नापेक्ष्यते स्तुत्येति व्यज्यते। विपुलं विस्तीर्णं-आनन्दं- इह विपुलमित्यनेन- ''युवा स्यात्साधुयुवाध्यायकः- आशिष्ठो द्रढिष्ठो बलिष्ठः-तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्- स एको मानुष आनन्द'' इत्युक्त मानुषानन्दो विवक्षितः- अमुत्र विपुलमित्यनेन तु ''सैषानन्दस्य मीमांसा भवतीत्यारभ्य ''स एको ब्रह्मण आनन्दः- श्रोत्रियस्य चाकामहतस्य यतो वाचो निवर्तन्ते'' इत्यन्तेन वाक्येन शतगुणितोत्तरक्रमेण निरतिशयदशाशिरस्कोऽभ्यस्यमान आनन्दो विवक्षितः।

विधात्रीं विदधानां- न तु मदान्धभूपापशदस्तुतिवदैहिकामुष्मिक फलानुपयोगिनी-मिति भावः। विपूर्वकात् धा-धातोस्तृनि- ''ऋन्नेभ्य'' इति ङीपि- ''कर्तृकर्मणो''रिति प्राप्तषष्ठ्या ''न लोकाव्ययनिष्ठाखलर्थतृना''मिति निषेधाद्द्वितीया। अत्र ''ऐहिकामुष्मिकीं सिद्धिं लभते श्रीप्रसादतः। दारिद्र्यं नश्यते तस्य सर्वपापैः प्रमुच्यत'' इति श्रीलक्ष्मीसंकीर्तन स्तवनादिफलप्रतिपादकं सनत्कुमारसंहितावचनमनुसंधेयम्। तव ''परमानन्दरूपिणी-महाभासा महानन्दा'' इति परमानन्दरूपत्वेन नामसहस्रप्रथिताया इत्यर्थः- तवैवानन्द रूपत्वाभावे लक्ष्म्यैवानन्ददानं न संभवेदिति भावः। स्तुतिं परमार्थगुणवर्णनमित्यर्थः।

चित्तस्थैर्यंदौर्लभ्यात् ''प्राप्स्यामि यानद्य गुणान्को मे श्वस्तान्प्रदास्य'' तीति श्रीसूक्त्यनुसारेण पुनरीदृशगुणो लभ्यते वा न वा- अतः ''श्रेयांसि बहुविघ्नानी''त्युक्तरीत्या क्वचिद्विवक्षितार्थ भ्रंशस्संभवेदिति भावः - महाभारतेऽप्युक्तं ''श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम्। न हि प्रतीक्षते मृत्युः कृतं वास्य न वाऽकृत''मिति। रसना जिह्वा- अस्माकमिति शेषः - रसनेत्यनेन रसैकतत्परैषा प्रस्तौतु उपक्रमताम्। प्रपूर्वकस्य स्तौतेरुपक्रमर्थकत्वात्। तदुक्तम्। ''उपसर्गेण धात्वर्थो बलादन्यः प्रतीयत'' इति। प्रस्तौतीति पाठे- यस्मात्तव स्तुतिं प्रस्तौति- तस्माच्चमत्कारवचसे नमस्कारं ब्रूम इति योजना- इह यत्तदोरुभयोरनुपादानेऽपि सामर्थ्यादुभयमपि लभ्यते- एतच्चाग्रे प्राप्तावसरे स्फुटतरमुपपादयिष्यते।

अत्र मदान्धेत्यनेन विशेषणगत्या तन्मनोरञ्जन काव्यरचनात्यन्तवैमुख्याभिव्यञ्जक नमस्कारोक्तेस्समर्थनात् काव्यलिंगभेदःउक्तच्छेकोक्तिशिरस्कः। विधात्रीमित्यादिना स्तुत्युपक्रम समर्थनादन्यच्च काव्यलिंगं- पूर्वोक्तकाव्यलिंगेनोत्तभ्यते- स्तुत्युपक्रमस्य हेतोः अंहोभरनिरासेन हेतुमता सहवर्णनाद्धेत्वलंकारः-''हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते। असावुदेति शीतांशुर्मानभेदाय सुभ्रुवा''मिति लक्षणसंग्रहकृत्- अद्य प्रस्तौत्वित्यनेन शंकौत्सुक्याख्यौ व्यभिचारिणौ संभूय व्यज्येते- तयोश्च कविगतश्रीविषयकभक्ति- भावांगत्वात्पूर्वश्लोकवदेव भावसंध्यपरांगं व्यंग्यम्। अत्रापि हेत्वलंकारमात्रलेखनं तु केषांचिद्भ्रमादिति ध्येयम्। यत्तु- क्षोणीपत्यपशद इत्यत्र क्षोणीपतीनां मध्ये येऽपसदा नीचा इति विजगृहे पाश्चात्यः- तत्तस्य प्रथयति शब्दनयपारीणतां- ''न निर्धारणे'' इति समास निषेधात्- ननु- यस्मान्निर्धार्यते- यश्चैकदेशो निर्धार्यते- यश्च निर्धारणहेतुरेतत्त्रितयसंनिधान एव निर्धारण विभक्तेः''द्विवचनविभज्योपपद'' इति सूत्रे कैयटेन व्यवस्थापितत्वा-दत्र च त्रितय संनिधानाभावान्निर्धारण विभक्त्यसंभवेन न तत्समासनिषेधप्रसक्तिः- किं तु शेषषष्ठ्या एवायं समासः- अत एव ''न निर्धारण इति सूत्रशेखरे- पुरुषोत्तम इत्यत्र त्रितयसंनिधानाभावान्न निर्धारण विभक्तिः- किं तु संबन्ध सामान्ये षष्ठी। तया समास'' इत्युक्तं च संगच्छत इति चेन्न- विग्रहवाक्ये क्षोणीपतीनां मध्य इति निर्धारणावबोधकमध्यपदप्रयोगवैयर्थ्यप्रसंगात् - कुत्सितानि कुत्सनैरित्यस्य परत्वात् प्रतिपदोक्तत्वाच्च षष्ठीत्येतत्सूत्रबाधकत्वात्- संभवति कण्ठतश्शास्त्रविहितत्वेन बलिष्ठे समानाधिकरणसमासे अगतिकगतिव्यधिकरणशेषषष्ठी समासाश्रयणस्या न्याय्यत्वाच्च।

तथाहि तदधिकरणशरीरे- “एतया निषादस्थपतिं याजये” दित्यत्र कर्मधारय परिग्रहे निषाद जातीयस्य स्थपतेरग्निविद्ययोरसंभवेन स्वतो निरधिकारत्वात्- षष्ठीसमास परिग्रहे च त्रैवर्णिकान्तर्भूतस्थपतिकटाक्षेणापि निषादस्थपतिशब्दनिर्वाहसंभवात्- षष्ठीसमास परिग्रहेणापशूद्राधिकरण न्यायानुरोधो युक्त इति प्राप्तेऽभिहितं- “स्थपतिर्निषादस्स्याच्छब्द सामर्थ्या” दिति- अयमर्थः- षष्ठीसमासपक्षे निषादसंबन्ध विशिष्टोऽभिधेयः। कर्मधारयपक्षे निषादत्वविशिष्टः- तत्र षष्ठ्या अश्रवणान्निषादप्रातिपदिकेन विभक्त्यर्थो लक्षणीयः। न चेदं युक्तम्। श्रौतार्थपरिग्रहे विरोधाभावात्। न चाग्निविद्याराहित्यं दोषः- द्रव्यवदेतदुपयोग्यग्निविद्ययोरपि यथाकथंचिदार्जनस्य विध्यनुमतिसंभवात्- तस्मात्कर्मधारय एव न्याय्य” इति। अत एव “काव्यं लोकोत्तर वर्णन निपुण कविकर्म” त्यत्र काव्यप्रकाश व्याख्यायां “लोकोत्तरवर्णननिपुणस्य कवेः कर्मोत्यर्थे स्थपत्यधिकरण न्यायविरोधेन तत्पुरुषस्य दुर्बलत्वात्कवेर्भोजनादिकर्मण्यतिव्याप्तेश्च लोकोत्तरवर्णनरूपं यन्निपुणकर्मेति कर्मधारय एव न्याय्य” इति कमलारोक्तमपि संगच्छते- तस्मादुक्त शास्त्रीयकर्मधारयापेक्षया उक्त तत्पुरुषस्य दुर्बलत्वात्तद्व्याख्यानमयुक्तमेवेत्यलम्- शिखरिणीवृत्तम्। “रसैरुद्रैश्छिन्ना य मनसभला गश्शिखरिणी” ति लक्षणात्॥9॥

मू. तत्तादृग्रचनाविदग्धरसनाकण्डूतिनिर्धूतये
केचिन्नीचविचारगोचरगिरो ग्रथ्नन्तु मिथ्याकृतीः।
स्वं वाग्ब्रह्म पुराणजिह्मगशिरःकंपावहं पावनी
कर्तुं देवि वयं पुनस्तव! कथारम्भाय जृम्भामहे॥ 10

एवं शीतज्योतिरिति श्लोकेन लक्ष्मीस्तवे स्वभारत्यास्त्वरातिशयमभिव्यज्य मदान्धेत्यनेन श्लोकेन स्तोत्रारम्भाभ्यनुज्ञामभ्यर्थ्य- तेन प्रसन्नया श्रिया दत्ताभ्यनुज्ञो विषयान्तर नैस्स्पृह्यपूर्वकं चिकीर्षितं प्रतिजानीते। **तत्तादृगिति**॥ नीचः निहीनः विचारः मदान्धनृपादि वर्णनरूपः स एव गोचरो विषयो यासां अब्भक्ष इत्यादाविवावधारण गर्भबहुव्रीहिः। अनेन तत्र वैरस्यानुदयात्कदाचिदप्युत्तमदेवताविषयप्रवृत्तिः न घटत इति द्योत्यते। ताः गिरः येषां ते इति बहुव्रीहिगर्भित बहुव्रीहिः। केचित् कवय इत्यर्थः-अनेन “श्रेयस्कामो न गृह्णीयान्नामापि कृपणस्य चे” त्युक्तरीत्या तन्नामग्रहणमपि प्रत्यवायावहमिति व्यज्यते। सा चासौ तादृक्च तत्तादृक्- अति प्रसिद्धत्वेनान्यादृशीति केचित्। “सर्वे विभवतत्पराः” - “सहस्रनामतत्तुल्य”

तत्तादृक् लोकत्तरेत्यर्थः-रचना काव्यकल्पना-यद्वा रचना विशिष्टपदरचना वैदर्भ्यादिरीतिः इत्यर्थः- तथा च वामनः- "विशिष्टा पदरचना रीतिः- सा त्रिधा वैदर्भी गौडीया पाञ्चाली चेति" "ण्यास श्रन्थोयुजि"ति युच्- तस्यां विदग्धा प्रौढा "स्याद्विदग्धस्तु नागर" इति त्रिकाण्डशेषः-या-रसना-तस्याः कुण्डूतिः आत्यन्तिकौत्सुक्यमिति यावत्- तस्याः निर्धूतये-निर्धूननं कर्तुम्-निर्पूर्वकाद्धूञः स्त्रियां क्तिन्निति भावे क्तिन् प्रत्ययः-"क्रियार्थे"त्यादिना चतुर्थी- नीचविचार गोचरवचसां रसनाकण्डूतिनिर्धूति मात्रमेव फलं- नत्वैहिक मामुष्मिकं वा किंचित्प्रयोजन-मिति भावः- मिथ्याकृतीः- अविद्यमानगुणारोपेण वर्णनान्मृषाभूतानि काव्यानीत्यर्थः- कृतिमितिपाठे जात्यभिप्रायकमेकवचनं- कृतीरिति बहुवचनपाठ एव सार्वलौकिकः- अनेन शतशस्सहस्रशो वा मिथ्याकृतीर्ग्रथ्नन्तु- न हि कदाचिदपि रसना तेषामंशांशतोपि पावनी भवेदिति व्यज्यते-ग्रथ्नन्तु निबध्नन्तु-"ग्रन्थसंदर्भे" इत्यस्मात् क्रैयादिकादामन्त्रणार्थे लोट्- आमन्त्रणं कामचारानुज्ञा- अनेन च लोटा कवेस्तेष्वौदासीन्यं द्योत्यते। वयं तु तथा न प्रवर्तामह इत्याह- स्वमिति। हे देवि! भगवद्दिव्यमहिषि- देवीत्यनेन मोदद्युतिकान्त्यादि गुणवत्त्वमुक्तं भवति। "दिवुक्रीडा विजिगीषाव्यवहारद्युतिस्तुति मोदमद-स्वप्नकांतिगतिष्वि" त्यनुशासनात्। एतच्च सर्वकल्याणगुणवत्त्वोपलक्षकम्। वयं पुनः वयं तु- अनेन लक्ष्मीविषयककृतिप्रवृत्तानामस्माकं पूर्वोक्तनीचविचारगोचरगिरां च महद्वैलक्षण्यमिति द्योतितम्। सर्वलोकेश्वरीविषयककृतिप्रक्रमप्रयुक्तधन्यतातिशय विजृम्भितात्मसंभावनया वयमित्युक्तिः। स्वं स्वकीयं- नह्यन्यदीयवस्तुनो यथेष्ट विनियोगार्हत्वमस्तीति भावः- स्वं धनरूपमिति च व्यज्यते। भाग्यवन्तः प्रायस्स्वकीयं धनं पवित्रीकर्तुं परदेवताकैंकर्ये उपयोजयन्तीति भावः- पुराणः पुरातनः "पुराणप्रतनप्रत्न पुरातन चिरंतना" इत्यमरः- जिह्मगो व्याळः- शेष इत्यर्थः- तस्य प्रकृष्टविज्ञाननिधेश्शब्दानुशासन-प्रथमाचार्यस्यापीति भावः - शिरसः कम्पस्य श्लाघार्थस्य- आवहतीत्यावहं पचाद्यच्-षष्ठीसमासः- न तु कर्मण्यण्- आदि वृद्धि प्रसंगात्- जिह्मग इत्यनेन कौटिल्यं- पुराणेत्यनेन तस्य रूढमूलत्वं- तेन- "प्रकृतिकुटिलो हि विद्वानपि गृह्णीते गुणं न किंचिदपी"त्युक्तरीत्या गुणग्रहणाक्षमत्वं- तस्यापि शिरःकम्पावहमित्यनेन "मौनं बिभ्रतु मत्सरेण नमितास्तूर्णं त एव ध्रुवं कालोन्निद्रकदम्बगोळवपुषः कम्पस्फुरन्मौळयः। किंचिद्व्रीडितकुञ्चिता-क्षमवशादुत्तानदत्ताननाः प्रस्तोष्यन्त्यवधिं प्रयोगपदवीसारस्य सारस्य न" इत्युक्तरीत्या-स्ववाग्ब्रह्मणश्च्युतसंस्कारग्राम्यादिदोषवैधुर्यं माधुर्यप्रसादश्लेषसमतादिगुणप्राचुर्यं

प्रवृत्तिरेव युज्यत इति च व्यज्यते। पावयति जगत्पवित्रयतीति पावनं- अपावनं पावनं संपद्यमानं कर्तुं पावनीकर्तुं- अभूततद्भावे च्विः- अनेन इतः पूर्वं मदान्धनृपतिस्तुतिप्रवृत्ततया स्वस्यैवापवित्रत्वेन वाग्ब्रह्मणोऽन्यपावयितृत्वं दुर्घटम्। इदानीं तु श्रीस्तुतिप्रवृत्ततया जगतोऽपि पावयितृत्वे स्वस्य पवित्रत्वं किंपुनर्न्याय सिद्धमिति च व्यज्यते। तव ''वागीश्वरी पावनी कलिकल्मषनाशिनी''ति प्रसिद्धनाम्न्या इति भावः - तथाचोच्यते तन्नामसहस्रे ''गौरी वागीश्वरी गोष्ठी- आप्यायिनी पावनी च-कलिकल्मषनाशिनी''ति- त्वदन्येषाम- वागीश्वराणामपवित्राणां च कथं वाग्ब्रह्मपवित्रीकरणक्षमत्वं घटत इति भावः। कथायाः परमार्थचरित्रवर्णनस्य आरम्भाय उपक्रमं कर्तुमित्यर्थः- ''क्रियार्थे''त्यादिना चतुर्थी- जृम्भामहे निश्शंकं प्रवर्तामह इति यावत्। त्वत्कथाप्रवृत्त्यभावे वाग्ब्रह्मणः पूर्वोक्त- गुणसमृद्धिर्निष्फलैव संपद्येतेति भावः- एतेनास्य कवेररोचकत्वमेतदन्येषां पूर्वार्धोक्तानां सतृणाभ्यवहारित्वं च व्यञ्जितम्- तदेतत्सूत्रितं वामनेन ''अरोचकिनस्सतृणाभ्यवहारिणश्च कवय'' इति- इयं चास्य सूत्रस्य वृत्तिः। ''इह खलु द्वये संभवन्ति कवयः- अरोचकिन- स्सतृणाभ्यवहारिणश्च- अरोचकिसतृभ्यवहारिशब्दौ गौणार्थौ- कोसावर्थः- विवेकित्वमविवेकित्वं'' चेति। अत्र कृतिग्रथनरूपहेतोः जिह्वाकण्डूति निर्धूतिरूपहेतुमता सह पूर्वार्धे स्तुतिजृम्भणरूपहेतोः जिह्वापावनीकरणरूपहेतुमता सहोत्तरार्धेच वर्णनाद्धेत्वलंकारद्वयमन्योन्यसंसृष्टम्- लक्षणं तु पूर्वश्लोक एवोक्तम्- संसृष्टहेत्वलंकारद्वयस्य वृत्त्यनुप्रासस्य चैकवाचकानुप्रवेशलक्षणस्संकरः- किं च - उत्कृष्ट वर्णनीयवस्तुलाभेन तदन्यवर्णननैस्पृह्यप्रतीतेर्धृतिर्नाम व्यभिचारी व्यज्यते- ''धृतिश्चित्त-नैस्पृह्यं ज्ञानाभीष्टागमादिभिः- तत्रानुभावा विज्ञेयाः प्राप्तार्थानुभवस्तथा। अप्राप्तातीत नष्टार्थानभिसंक्षोभणादय'' इति लक्षणात्- यद्वा- नीच विचार गोचरकृति प्रणेतृ कविधिक्कार पूर्वकोत्तम वर्णन प्रवृत्तात्मोत्कर्षाभिव्यक्तेर्गर्वो नाम व्यभिचारी- ''आत्मोत्कर्षोऽन्य धिक्कार पूर्वो गर्वो बलादिज'' इति लक्षणात्- अनयोरेकत्रैव कविसंरम्भ निर्धारणे विनिगमकादर्शनात् संदेह संकरः- शार्दूलविक्रीडितं वृत्तं- लक्षणं तु प्रागेवोक्तम् ॥10॥

मू. शय्या शब्दगुणानुशासनचणा च्छन्दोमयं वाहनं
सोदर्यस्तु कलानिधिस्तव रमे! सूनुस्तु वाणीपतिः।
तस्यास्ते पुरतस्स्तवं मितमतिः प्रज्ञोचितं श्रावयन्

इत्थं विवक्षितं रभसात्प्रतिज्ञाय स्वस्यात्युत्तमकाव्यरचनानभिज्ञतां श्रियः काव्यांगभूत शब्दानुशासनादिविद्याभिज्ञविद्वदग्रेसरपरिबर्हतां सर्वज्ञतां चालोच्य तदग्रे स्वकृति श्रावणेनापहसनीयता स्यादित्याशंक्य स्वाभिमानं तावत् परिहरति। शय्येति। हे रमे- शय्या- शयनीयं- शेष इति भावः- ''निवासशय्यास''नेत्याद्युक्तरीत्या तस्यैव शय्यात्वात्- शय्येत्यचेतनवाचिशब्देन निर्देशस्तु परिबर्हस्यैव वैदुष्यपौष्कल्ये परिजनानां तत्सद्भावं कैमुत्यनयेन द्रढयितुम्। शब्दगुणानां वैदिकानां लौकिकानां चेत्यर्थः -अनुशासनं प्रकृतिप्रत्यय विभागादिभिस्साधुतान्वाख्यानं- तेन वित्ता अनुशासनचणा- ''तेन वित्तश्चञ्चुप्चणपा''विति ''तेन वित्त विज्ञात विश्रुता'' इति नामलिंगानुशासनात्- ''अथशब्दानुशासन''मित्यादिना महाभाष्येण शब्दानुशासनकृतः पतञ्जलेश्शेषावतारत्वेन शय्याशब्दगुणानुशासन चणेत्युक्तम्। शय्येत्युपलक्षणम्। निवासासनपादुकांशुकोपधानवर्षातपवारणादीन्यपि शब्दानुशासनचणान्येव- सर्वेषामपि शेषशरीरभेदत्वात्- सर्वासां विद्यानां काव्यांगत्वा विशेषेऽपि शब्दानुशासनस्यैव प्रथमोपादानं काव्यरचनायां प्रथममपेक्षणीयत्वात्। तथा च वामनः। ''लोको विद्याः प्रकीर्णकं च काव्यांगानी''त्युपक्रम्य ''लोकवृत्तं लोक'' इति लोकस्वरूपमुक्त्वा ''शब्दस्मृत्यभिधान कोशच्छन्दो विचितिकलाकामशास्त्र पूर्वा विद्या'' इति सूत्रेण विद्यास्वरूपमभिधाय- ''शब्दस्मृत्यादीनां पूर्वपूर्वत्वं काव्यबन्धेष्वपेक्षणीयत्वात्'' इति तद्वृत्तिमप्युक्त्वा ''तासां काव्यांगत्वं योजयितुमाहेत्युपक्रम्य ''शब्दस्मृतेश्शब्दबुद्धिः- शब्दस्मृतिर्व्याकरणं- अभिधानकोशात्पदार्थनिर्णयः। छन्दोविचितेर्वृत्तसंशयच्छेदः- कलाशास्त्रतः कलातत्त्वस्य संवित्। कामशास्त्रतः कामोपचारस्य। दण्डनीतेर्नयापनययोः'' इत्यादि सूत्रैस्तासां काव्यांगत्वं योजयित्वा- एवमन्यासामपि विद्यानां यथास्वमुपयोगो वर्णनीय इति तद्वृत्तौ व्यस्तृणोत्- अतः काव्यकर्त्रा मितमतिना काव्यप्रथमांगभूत शब्दानुशासनाचार्या- देव प्रथमं भेतव्यम्- छन्दः कलादि विद्यापारीणेभ्यस्त्वनन्तरमित्यभिप्रायेण सूत्रोक्तक्रमशालि शब्दस्मृत्यादिविद्याभिज्ञक्रमोऽत्र श्लोके निबद्ध इति ध्येयम्। अभिधानकोशस्यापि व्याकरणमूलकत्वात्तदभिज्ञत्वमपि शय्याया उक्तप्रायमेवेति न पृथक्तदुक्तिः- वाहनं यानं- गरुत्मानिति भावः- छन्दोमयं छन्दःप्रचुरं छन्दोरूपमिति तु तत्वम्। ''सुपर्णोऽसि गरुत्मान् त्रिवृत्ते शिरो गायत्रं- तस्य गायत्री च जगती च पक्षावभवता''मित्यादि श्रुतिभ्यः। अत्र ''जायापत्योर्न विभाग'' इति न्यायात्पतिपरिजनपरिच्छदादीनां पत्नीपरिजन परिच्छदादित्वमवर्जनीयमिति भगवच्छय्यादीनां लक्ष्मीशय्यादित्वेनोक्तिः- अत एव ह्याद्ये

कस्यचित्परिजनानां वैदुष्यसद्भावेऽपि साक्षाद्देहानुबन्धिनामपि वैदुष्यं प्रायो दुर्घटम्। तव तु न तथेति व्यज्यते। सोदर्यश्चन्द्रस्तु- कलाःनृत्तगीत चित्रादिकाः- कलाशब्देनात्र तदभिधायकानि विशाखिलादिप्रणीतानि शास्त्राणि लक्ष्यन्ते- इदं कामशास्त्रादेरप्युपलक्षकम्- तासां निधिः आश्रय इत्यर्थः- कलानां षोडशांशानां निधिरिति तु तत्वम्। ''कला स्यान्मूलरैवृद्धौ शिल्पादावंशमात्रके षोडशांशेऽपि चन्द्रस्ये''ति मेदिनी- सूनुस्तु पुत्रो ब्रह्मा तु- तु शब्दः पूर्वोक्तशय्यादित्रिकापेक्षया वैलक्षण्यद्योतकः- वाणीपतिः- उक्तानुक्तकाव्यांग- सकल विद्यानिधिस्स्वाधीनसरस्वतीको महाकविरिति भावः- यद्वा- ''आसंसारं विततमखिलं वाङ्मयं यद्विभूति''रित्युक्तरीत्या जगति सर्वमपि वाङ्मयं यदीय विभूतिस्तस्यास्सरस्वत्या एव वल्लभत्वे तस्य सर्वविद्यापारीणत्वादिकं कैमुतिकन्यायसिद्धमिति व्यज्यते। तस्याः- उक्तविध विद्वदग्रेसरपरिबर्हशालिन्या इत्यर्थः- ते- ''विद्या विबुधवन्दिता- सर्वज्ञा कमलप्रभे''त्यखिलविद्याधिष्ठातृत्वेन विबुधसेवितत्वेन सर्वज्ञत्वेन च प्रसिद्धनाम्न्या इति भावः- पुरतः अग्रे- न तु परोक्षं- त्वत्परोक्षे तु- ''असर्वज्ञसभामध्ये-मितधीरपि पण्डितः। निरस्तपादपग्रामे एरण्डोऽपि महाद्रुम'' इत्युक्तरीत्या अहमेव प्रगल्भेय न कदाप्यपहास्येयेति भावः - मिता- त्वद्गुणानुगुणोत्तम काव्यरचनानुकूल शब्दानुशासनादि व्युत्पत्तिवैधुर्येणाल्पा मतिः आगामिगोचरज्ञानविशेषो यस्य स तथोक्तः-मतिरेव मम मिता- क्वनु नामोत्तमकाव्यरचनाबीजभूत प्रतिभाप्रभाव विजृम्भितम्- विना च येन नैवोन्मिषेत्कवितेति भावः- अनेन चेदृशप्रतिभाप्रभावाभावे विद्वदग्रेसर परिजन परिच्छदायास्सर्वज्ञायास्तव स्तवे प्रवृत्तावप्यधिकारो मम न संभावनीयः, किमुत तद्रचने तच्छ्रावणे चेति व्यज्यते।

तदेतत्सर्वमुक्तं वैखानसीये। ''शक्तिः कवित्वबीजं हि प्राक्तनी कापि संस्क्रिया। यया विना न प्रसरेत्काव्यं शिक्षावतामपि। व्युत्पत्ति गौरवबलाद्यदि किंचित्कथंचन। प्रसारितं परं तच्च हास्यमेव न संशयः। नाकवित्वमधर्माय मृतये दण्डनाय वा। कुकवित्वं पुनस्साक्षान्मृति माहुर्मनीषिणः। प्रतिभां नाम तामेतां कवयस्समुपासते। परां यां जीवितसखीं देव्या वाचस्त्रिधा तनोः। स्मृतिर्व्यतीतविषया मतिरागामिगोचरा- बुद्धिस्तात्कालिकी ज्ञेया प्रज्ञा त्रैकालिकी मता। प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः। तदनुप्राणनाज्जीवेद्रचना- निपुणः कविः। सति वक्तरि सत्यर्थे सति शब्दानुशासने। अस्ति तत्, न विना येन परिस्रवति वाङ्मधु। व्युत्पत्तिरपि शक्त्यैव संगता ह्यनुवर्तते। सा हि तस्याः प्रियसखी नित्यमव्यभि- चारिणी। परिबर्हवती कर्तुं प्रतिभां प्रतिभानवान्। साधीयसीं तु व्युत्पत्तिं सविधे संनिधापयेत्।

विशेषज्ञः काव्यनिर्माण कौतुकी। काव्यानि काळिदासादेस्सततं परिशीलयेत्। लोकशास्त्र पुराणादिज्ञानवानपि सीदति। अज्ञातकाव्यसरणिः काव्यनिर्माणकर्मणि। अन्या हि गतिरश्वस्य गतिरन्या खरोष्ट्रयोः। मदक्लिन्नकपोलस्य गतिरन्या हि दन्तिनः। वेदशास्त्र पुराणानां रीतयो हि पृथक्पृथक्। रीतिरन्यैव काव्यानां लोकोत्तरपदस्पृशाम्। रसभाव गुणौचित्यघटनालंक्रियादयः। काव्यादन्यत्र दृश्यन्ते कुत्र वा वेदशास्त्रयोः। एवं लोकस्य शास्त्राणां काव्यानामपिवेदिता। प्रतिभावान्प्रवर्तेत काव्यज्ञैः काव्यकर्मणि। किमेवं बहुनोक्तेन लोके यद्यद्विभाव्यते। तत्तत्सर्वं वेदितव्यं कांक्षता काव्यनिर्मितिम्। न स शब्दो न तद्वाच्यं न सा विद्या न सा कला। जायते यन्न काव्यांगमतो भारो महान्कवे''रित्यादि। विस्तरस्त्व-स्मदीयायां काव्योत्कर्षरक्षायां द्रष्टव्यः।

यदि मितमतिस्तर्हि त्यज्यतामयं स्तुतिश्रावणसंरम्भः, किं वृथायासेन प्राज्ञापहास-पदेनेत्यत्राह। प्रज्ञोचितमिति। प्रज्ञा च त्रैकालिक ज्ञानविशेषः। ''प्रज्ञा त्रैकालिकी मतेत्यनु-पदमेवोदाहृतम्- मतेरेव मितत्वे ततोऽपि श्रेयसी प्रज्ञा कथं लभ्येत- सा तु ममात्यल्पीयसी- तदुचितमेव- न तु प्रतिभोचितं- तदुन्मेष कथाया एव मय्यभावादिति भावः- प्रज्ञोचितमित्यनेन कविताया बलादाकृष्टत्वं व्यञ्जितम्- सा हि प्रतिभावैभवबललभ्या- न तु प्रज्ञामात्रलभ्या- तदेतदुक्तं- ''द्वे वर्त्मनी गिरां देव्याः शास्त्रं च कविवर्त्म च। प्रज्ञोपज्ञं तयोराद्यं प्रतिभोद्भव-मन्तिम''मिति। यद्वा। प्रज्ञाशब्दोऽत्र मितमतिरित्युपक्रमानुरोधेन मतिपर एव- अन्यत्सर्वं पूर्ववत्- ''नभः पतन्त्यात्मसमं पतत्रिण'' इति श्रीभागवतोक्तरीत्या- यावती मम प्रज्ञा तदुचितमेव- अपहसन्तु वा प्रशंसन्तु वा मां प्राज्ञाः- किं नु तेऽपहसन्तीति काचिदनैसर्गिकी प्रतिभा नामोदियादिदानीम्- न हि पततामधिराजश्चरति वियति सुदूरतरमिति कलविङ्केन शलभेन मशकेन वा नैवोड्डीयते- अतः प्रज्ञामान्द्यमस्तीत्येतावताऽवश्य प्राप्तव्ये श्रेयसि कथं विरज्येयमिति भावः। प्रज्ञोचितमित्येतत् ''इषुक्षयान्निवर्तन्ते नान्तरिक्षक्षितिक्षयात्। मतिक्षयान्निवर्तन्ते न गोविन्द गुणक्षया''दित्युक्तरीत्या मतिक्षय सूचनार्थम्। सर्वज्ञा मुनयोऽपि ''यथा ज्ञानं तु वक्ष्यामी''त्येव वदन्ति- किं पुनरहमतिपरिमितमतिरिति भावः। स्तवं स्तोत्रं

क्रयार्थं प्रसारितत्वेनागूढत्वं तेन तत्र वक्ष्यमाणगुञ्जाप्रसारणस्यात्यन्तलज्जावहत्वं च द्योतितम्। गुञ्जाविक्रयिणः-गुञ्जायाः एकस्याः कृष्णलायाः। "काकचञ्ची गुञ्जा तु कृष्णले" त्यमरः-काकणिकामात्रार्घानर्हाया निस्साराया मलीमसैक्वेषाया इति भावः। यद्वा-त्रिचतु-राणां पञ्चषाणां वा गुञ्जानां विक्रयिणः- न तु तद्राशीनामिति भावः- तथा सति वा अर्घतेजो- गुणादितारतम्यभूयस्त्वस्याकृतिपरिमाणमात्रेण वा तारतम्याभावमादाय तद्विक्रयिणः कथं- चिद्रत्नपुञ्जापण प्रवेशयोग्यता संपादनीया स्यात्तदपि नेति व्यज्यते। किंच गुञ्जाविक्रयिण इति ताच्छीलिकणिनिना दुर्गत सार्वभौमत्व व्यञ्जकेन तस्य माणिक्यपुञ्जापण प्रवेशात्यन्तानर्हत्वं द्योत्यते।

अनेन च- क्व माणिक्यपुञ्जापणम्- क्व च तत्र त्रिचतुरगुञ्जाविक्रयिणः प्रवेश इत्यननुरूपघटन वर्णनात्मक विषमालंकारो व्यज्यते। "विषमं वर्ण्यते यत्र घटनाऽननुरूपयोः। क्वेयं शिरीषमृद्वङ्गी क्व तादृङ्मदनज्वर" इति लक्ष्यलक्षणसंग्रहकृदुक्तेः- एवं क्व सर्वज्ञ सार्वभौम्याः श्रियो- गोष्ठी क्वाहं मितमतिरिति पूर्ववाक्यार्थेपि विषमालंकारध्वनिर्विभावनीयः- पदवीं मार्गं- श्रयामि- अनेन यथामाणिक्यपुञ्जापणे गुञ्जाविक्रेता परिहसनीयस्स्यात्तथा विद्वत्सार्वभौम्याः तवाग्रे कवितां श्रावयन्नहमपि परिहसनीय एव स्यामित्यर्थस्य प्रतीतेः रुपमालंकारध्वनिः- अत्र शय्याशब्दगणानुशासनचणेत्यादीनि वाक्यार्थरूपाणि विशेषणानि लक्ष्म्यां सर्वज्ञसार्वभौमीत्वाभिप्रायगर्भाणीति परिकरालंकारः- "अलंकारः परिकरस्साभि-प्राये विशेषण" इति लक्षणात्- गुञ्जाविक्रयिमार्गाश्रयणलक्षण पदार्थरूपोपमान धर्मस्योपमेयभूतस्तुति कर्तरि आरोपसद्भावात्पदार्थवृत्तिनिदर्शनालंकारः- "पदार्थवृत्तिमप्येके वदन्त्यन्यां निदर्शनाम्। त्वन्नेत्रयुगळम् धत्ते लीलां नीलाम्बुजन्मनो"रिति लक्ष्यलक्षण संग्रहकृदुक्तेः- इयं निदर्शना पूर्वोक्तपरिकरालंकारेणांगेन संकीर्यते- उभावपीमौ वृत्त्यनुप्रासेन एकवाचकानुप्रवेशेन संकीर्येते। किंचात्र- कविना आलम्बनेन स्वकाव्यश्रवणेनोद्दीपनेन च विभावितः श्रोतृजन परिहासादिकेन गम्यमानेनानुभावितः चापलादिभिर्गम्यमानैर्व्यभिचारितो हासाख्यस्स्थायी सहृदयैश्चर्व्यमाण तामश्नुत इति हास्यरसो व्यज्यते। "हासो विकृतवेषादि दर्शनान्मानसी क्रिया"। हासस्स्थायी भवेद्यस्य स हास्यरस इष्यत" इति लक्षणात्- अत एवेदमसंलक्ष्यक्रम व्यंग्यमिति ध्येयम्।

यत्त्वत्र प्रज्ञोचितमित्यत्र प्रोज्जृम्भितमिति पाठमाश्रित्य प्रोज्जृम्भितमाडम्बरितं स्तवं

नन्वस्मिन् श्लोके पुरत इति प्रयोगोऽसाधुः- पूर्वशब्दादस्तात्यर्थे - ''पूर्वापराधरोत्तराणामसिपुरधवश्चैषा''मित्यसिप्रत्ययस्य- तत्संनियोगेन पूर्वशब्दस्य पुरादेशस्य च विधानेन पुर इत्येव रूपनिष्पत्तेः- अत एव ''अमुं पुरः पश्यसि देवदारु''मित्येव काळिदासप्रयोगः- ''पश्यामि तामित इतः पुरत'' इत्यादयः प्रयोगास्तु समानकालीन मित्यादय इव प्रामादिका एवेति चेदत्र केचित्- पुरत इति स्वतन्त्रनिपाताभ्युपगमाददोषः- अत एव ''स्यात्पुरः पुरतोऽग्रत'' इति कोशः- ''इयं च तेऽन्या पुरतो विडम्बने''ति काळिदासप्रयोगश्च संगच्छत इत्याहुः। अन्ये तु ''दक्षिणोत्तराभ्यां तसु''च्विधिनैवेष्टसिद्धौ अतसुजित्यकारोच्चारणमन्यतोऽपि विधानार्थम्- तेन- पुर अग्रगमने- इत्यस्माच्चौरादिकात् पचाद्यजंतात्क्विबंताद्वा शब्दात्तस्मिन्निष्टसिद्धिः- न तु पुरत्यत्र''र्वोरिति दीर्घः- भत्वादित्याहुः- वस्तुतस्तु- पुर अग्रगमने इति चौरादिकाण्णिजभावे इगुपधलक्षणे कप्रत्यये सार्वविभक्तिकस्तसिरिति भाव्यम्।

**मू. कवीनां प्रत्नानां कबळित सुधास्वादिममदै**
**रनूचानैस्स्तोत्रैश्श्रुति-जडिमभाजो जननि! ते।**
**अजामित्वायैव स्तवमिममकूपारतनये!**
**वियाता ग्रथ्नीमो विहसनपदैः कैरपि पदैः॥** **12**

अथ- स्वभावतः परिहासनीयोऽपि मद्विवक्षितस्स्तवः पुरातन महाकविकृतस्तोत्रा तिमात्रश्रवणसातत्यजनितचित्तवैरस्यायाश्श्रियः ''तत्थरि* णएण ठविआ सोह उ दासाण णाह तज्झ समाए। वन्दित्तण महिआणं मज्झम्मि सुईण बालिसा मज्झ थुई''॥ छाया॥ त्रस्तरिनयेन स्थापिता शोभतां दासानां नाथ तव समाजे। वन्दित्वमहितानां मध्ये श्रुतीनां बालिशा मम स्तुतिः''। इत्याचार्यश्रीसूक्त्यनुरोधेन वैरस्यपरिहरणार्थतया श्राव्य एव भवतीत्यभिसंधाय पूर्वश्लोकव्यञ्जितप्राज्ञपरिहाससंभावनाकलित स्तुतिकरणशैथिल्या न्निवृत्तो विवक्षितमंशं यथातथा निर्वोढुमभिलष्यन्नाह। कवीनामिति। हे जननि। अनेन वात्सल्यातिशयो व्यञ्जितः। तेनापहसनीयमपि मम वचो भोग्यतयैव गृह्णासीति व्यज्यते। दोषतिरस्कारिणी प्रीतिर्हि वात्सल्यम्। क्वचिज्जनन्या अप्यगम्भीरहृदयत्वेऽपहसनोन्मुखतापि

* श्लोकोयं प्राकृताच्युतशतकस्थः श्रीदेशिककृतः। अत्र च ''त्रस्तरिनयेन'' इति समासपदे त्रस्तरीशब्दार्थो विचार्यः। आन्ध्रदेश्यं पदमिति आन्ध्रकोशकर्तारः। परिहासार्थतां च ते वदन्ति। किंतु श्रीदेशिकप्रयोगात्

प्रत्न पुरातन चिरंतना'' इत्यमरः। कवीनां- प्राचेतस पराशर व्यास शुक शौनक वकुळाभरण कूरेशभट्टारक निगमान्तदेशिक मुखानां काव्यकर्तॄणां- प्रत्नानामित्यनेन तेषां निरवशेष विदितवेदितव्यत्वं- तेन तेषां मितप्रज्ञस्य स्वस्य च प्रद्योतन खद्योतवन्महदन्तरमिति-च व्यज्यते। कबळितः कबळः कृतः धीनिगीर्ण इत्यर्थः- सुधायाः यः स्वादिमा स्वादुत्वं- ''पृथ्वादिभ्य इमनिज्वे''ति भावार्थे इमनिच्- तस्य मदः लोकोत्तरत्वावलेपः- यैस्तथाभूतैः- अमृतादपि मधुरैरिति भावः- कबळितेत्यनेन तच्छ्रवणानन्तरं सुधायाः स्वादिममदकथाप्यपुनरुन्मेषं गच्छतीति व्यज्यते। अनूचानैः सांगवेदार्थगर्भितैरिति यावत्। अनूचान शब्दस्य ''अनूचानः प्रवचने सांगेऽधीती गुरोस्तु य'' इति कोशात्सांगाध्यायिपुरुषवाचित्वेऽपि लक्षणया उक्तार्थपरत्वमिति ज्ञेयम्। अनेन च्युत संस्कारादि दोषदवीयस्त्व माधुर्यादिगुणभूयस्त्वे व्यञ्जिते। तेन तदीयस्तुति स्वस्तुत्योःसुधायवाग्वोरिव महत्तारतम्यमिति च व्यज्यते। यद्वा। ''अनूचानस्त्वविच्छिन्ने सांगाध्येतृ विनीतयो''रिति व्याडिकोशानुसारेणाविच्छिन्नैरित्यर्थः- अत एव वक्ष्यमाणः श्रुतिजडिमा च युज्यते।

केचित्तु- अनूचीनैः अनीचीनैरिति च पाठं परिकल्पयन्ति- स तु यथाश्रुतपाठे उक्तरीत्या उपपत्तिसद्भावादुपेक्ष्यः- स्तोत्रैः परमार्थगुणवर्णनपरप्रबन्धैरिति यावत्। बहुवचनेन स्तोत्राणां बहुभिर्यौगपद्येन प्रवर्तितत्वं व्यज्यते। श्रुत्योः श्रवणयोः, यो जडिमा जाड्यं- वैरस्यमिति यावत्। पूर्ववदिमनिच्। तं भजतीति तथोक्तायाः। स्वादीयसोऽपि हि वस्तुनोऽनारतमतिवेलमास्वादनात्तत्तदिन्द्रियजडिमा सर्वानुभव साक्षिक इति भावः। ते तव- अत्यंततृप्ततया स्तुत्यन्तरनिरपेक्षाया इति भावः- जामीत्येतदव्ययं- अविद्यमानं जामि यस्यास्सा अजामिः- ''अव्ययादाप्सुप'' इत्यत्र सुपो विहित विशेषणेन व्याख्यानात् अत्युच्चैसावित्यादाविव न सुपो लोपः- तस्याभावः अजामित्वं- तस्मा एव-आलस्यनिरासं कर्तुमेवेत्यर्थः- ''क्रियार्थे''त्यादिना चतुर्थी- ''जामिवा एतद्यज्ञस्य यन्मिथः क्रियते- ''पत्नी संयाजानामृचा यजत्यजामित्वाये''त्यादिश्रुतिषु जामिपदस्यालस्यार्थकत्वं प्रसिद्धम्। एवकारेण तदेव प्रयोजनं न त्वास्वादनीयतालेशोपीति व्यज्यते। वियाताः- ''नैवाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते। स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्'' इत्युक्तरीत्या तव स्तवे प्रवृत्तानामस्माकं का नाम भयसंभावनापि? प्रत्युत शमयति तत्प्रवृत्तिरेव सर्वभयमिति प्राप्तधैर्या इति भावः- ''धृष्टे धृष्णुर्वियातस्स्या''दित्यमरः- वयमिति शेषः- न हि दयागभीरहृदयजननीसांनिध्ये यत्किंचिदपशब्दितं जल्पन्तोपि शिशवो बिभ्यतीति भावः।

बहुवचननिषेधशंकनीयः- अस्मच्छब्दस्यात्र स्वघटित उद्भूतावयवभेदे समुदाय लक्षणाश्रयणात्। वार्तिकं तु मुख्यार्थे सविशेषणस्य बहुवचनं निषेधदश्नुते कृतार्थताम्- अत एव "इदं मुख्यार्थे बहुवचननिषेधाय- यदा त्वस्मच्छब्दस्य स्वघटिते उद्भूतावयवभेदे समुदाये लक्षणा,तदा बहुवचनं भवत्येव-तेन "त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नता" इत्यादि सिद्धमिति सविशेषणस्येति वार्तिकशब्देन्दुशेखरश्च संगच्छते- न च विशेष्यसमर्प- कस्य वयमित्यास्याश्रवणात्सविशेषणस्येति निषेधो न प्रवर्तत एष कुतोऽवा प्रयास इति भ्रमितव्यम्- ग्रथ्नीम इत्युत्तम पुरुष बहुवचनानुरोधेन तदुपस्थित्यवश्यंभावात्। नापि वियाता इत्यस्यैव विशेष्यत्वविवक्षयोक्तनिषेधाप्रवृत्तेर्नोपपत्तिकल्पनाक्लेश इति वाच्यम्- उत्तम पुरुषानुरोधेनोपस्थितस्य वयमित्यस्यैव विशेष्यतायास्स्वारसिकत्वात्- अत एव "गार्ग्योऽहं ब्रवीमीत्यादावप्ययं निषेधः। उत्तम पुरुषानुरोधेनात्राहमित्यस्यैव विशेष्यत्वा"दिति तत्रत्य शेखरग्रन्थश्च संगच्छते- तस्मादुक्तैवोपपत्तिर्युक्तेति ध्येयम्। वियाता इत्यनेनाज्ञत्वप्रयुक्ता काव्यात्मासंभावना च द्योत्यते। विहसनस्य परिहासस्य पदैः स्थानैः मुख्यविषयैरिति यावत्। पदैरित्यनेनेतोप्यन्यन्न किमपि परिहासविषय इति व्यज्यते। निरुपपदविहसनशब्देन पामर परीक्षक साधारण्येन सर्वेषामप्यपहासस्य विषयैरित्ययमर्थो द्योत्यते। कैरपि- श्लेषप्रसादादि गुणलेशास्पृष्टैः- अप्रयुक्तत्व ग्राम्यत्वा पुष्टार्थत्व क्लिष्टत्वादिदोषदुष्टैर्हठादाकृष्टैरतिमात्र प्रतिकृष्टैरित्यभिप्रायः- पदैः- सुप्तिङन्तात्मकैश्शब्दैः- इमं- परिहासनीयो भवत्येवेति निश्चित्यैव विवक्षितमिति भावः- स्तवं स्तुतिरूप प्रबन्धम्। ग्रथ्नीमः निबध्नीमः- "ग्रन्थसंदर्भे" इत्यस्मात्क्रैयादिकाल्लट्- "सार्वधातुकमपि"दिति श्नोङिद्वद्भावातिदेशेन "अनिदितां हल उपधायाः क्ङिती"त्युपधानलोपे "ईहल्यघो" रितीत्वं- कैरपि पदैर्ग्रथ्नीम इत्यस्य यथा कथंचित्पदत्व व्यपदेशवत्पश्नषशब्दसंदर्भमात्रं कुर्मो नतु तत्र शय्यापाकरीति गुणरसालंकारचातुर्यादिकं पर्यालोचयाम इत्यभिप्रायः।

अत्र मधुरतर महाकविकृत स्तुति श्रवणगुणेन श्रियश्श्रुतिजडिम रूपदोषो वर्णित इत्येक उल्लासालंकारः- विहसनपद पदकरणक स्तवग्रथन लक्षण स्वदोषेण लक्ष्म्या अजामित्वरूप- गुणो वर्णित इत्यपर उल्लासालंकारः- "एकस्य गुणदोषाभ्यामुल्लासोऽन्यस्य तौ यदी"ति लक्षणात्। यत्र कस्यचिद्गुणेनान्यस्य गुणो दोषेण दोषो, गुणेन दोषो, दोषेण गुणो वा, वर्ण्यते स उल्लास इति कुवलयानन्दोक्तेर्लक्षण संगतिरिति ध्येयम्। स्तौत्रैरिति हेतोश्श्रुति- जडिम्ना हेतुमता सहवर्णनादेको हेत्वलंकारः- स्तवग्रथनस्य हेतोः आजामित्वायेति हेतुमता सह वर्णनादन्योपि हेत्वलंकारः। [illegible]

प्रणीताविगीतस्तुति सततनिशमनजनितश्रुतिजडिमानमतिवेलमपहसनीयमस्मदीय स्तोत्रमपनयतीत्यनेन स्वकीयस्तवे शर्कराज्यादि संस्कृतमधुरतर रसायनादि निरतिशयास्वादन जनित रसनाजडिमा-पनयनार्थाम्लक्षारलवणोत्तंस निष्ठानतौल्यस्य[1]- शृंगारादिरसभरतरंगित-संगीतसंपत्संपन्ननाटकातिमात्रनिर्वर्णनोदीर्णवैरस्यनिरासार्थ हास्यतमविदूषक वचनसाम्यस्य च प्रतीतेःउपमालंकारो व्यज्यत इति वस्तुनाऽलंकारध्वनिः-अपिचात्रापि पूर्वश्लोकवत्कविना आलम्बनेन- अपहासगोचरपदगुम्भनेनोद्दीपनेन च विभावितश्श्रोतृजनपरिहासादिना अनुभावितः कविगत चापलादिभिर्व्यभिचारितो हासाख्यस्स्थायी परिपोष्यत इति हास्यरसो व्यज्यते- तदिदमसंलक्ष्यक्रमव्यङ्ग्यमिति ध्येयम्।

नन्वत्र श्लोके जामीति वैदिकं पदं कथं प्रयुक्तमिति चेच्छ्रूयताम्- न हि वेदप्रयुक्त शब्दसामान्यं लोके नैव प्रयोज्यमित्याग्रहो युज्यते- तथा सत्यग्नियज्ञदेवादिशब्दा अपि न लोके प्रयोगं प्रतिपद्येरन्- अपि तु ये ''अयस्मयादी''निच्छन्दसीत्यादिना च्छन्दोमात्र गोचरतया विहिताश्शिष्टैः अप्रयुक्ताश्च लोके, त एव न प्रयोज्याः- जामिशब्दस्य तु तथा विधनियामकादर्शनाल्लोकेपि प्रयोगं के नु नाम निरुन्धेरन्- नन्वेवमपि लौकिकपदेभ्यो वैदिकपदानां ''द्वा सुपर्णा सयुजा सखाया'' इत्यादौ बहुधा भेददर्शनात् न वैदिकं पदं लोके प्रयोज्यमिति चेन्न- पदभेदस्यैव लोकवेदाधिकरणे सिद्धान्तितत्वात्- तथाहि तदधिकरण शरीरम्- ''वैदिकौ पदपदार्थौ लौकिकाभ्यां भिन्नौ- कुतः- रूपभेदात्- ब्राह्मणा इति लौकिकपदस्य रूपम्- वेदे तु ब्राह्मणास इत्याम्नातं- अर्थभेदोऽप्यस्ति- अर्वाञ्चि लौकिका गावो वहन्ततीति। वेदे तु- उत्ताना वै देवगवा वहन्तीति श्रुतम्- इति प्राप्तेऽभिधीयते- प्रत्यक्ष प्रत्यभिज्ञानाद्वर्णैकत्वं प्रतिष्ठितम्। वर्णात्मकं पदं तच्च पदभेदान्न भिद्यते। यथा प्रयोक्तृणां पुरुषाणां भेदेऽप्येकैकपुरुषस्य बहुकृत्व उच्चारणभेदेऽपि त एवामी वर्णा इत्यबाधित प्रत्यभिज्ञानाद्वर्णैकत्वं तन्नित्यत्ववादिभिरप्युपगतं तथा गवाश्वादि पदानां लोकवेदयोरबाधित प्रत्यभिज्ञानात्पदैकत्वम्- एवं-देवासः-त्मने, इत्यादिषु लौकिकेभ्यो न्यूनातिरेककृत स्वरूपभेदे सत्यपि तद्रूपस्यार्थान्तरानवगमात्किंचिद्रूपभेदेऽपि लौकिकपदप्रत्यभिज्ञानात्सत्यपि केषांचिद्भेदे सर्वेषां भेदस्याप्रामाणिकत्वात्पदैक्येपि च तदर्थावगमा- दुत्तानादि वचनस्यान्यपरत्वेनार्थभेदस्य क्वाचित्कत्वाद्वस्तुत उत्तानशब्दवहनशब्दयोस्तदर्थयोश्च भेदाभावाच्च सिद्धमेकत्वं लोकवेदयोः- तथाचोक्तं- ''लोकावगतसामर्थ्यश्शब्दो वेदेऽपि बोधक इती''ति- विस्तरस्तु शास्त्रदीपिकादौ द्रष्टव्यः- नन्वेवं लौकिक वैदिक पद पदार्थाभेदे

पदानां लोके न साधीयान्- अन्यथा च्छन्दसीति प्रातिस्विक विधान वैयर्थ्यमेव स्यात्- यानि पुनर्लोकतोऽनतिरिक्त रूपाणि दृश्यन्ते वेदे पदानि- तेषां प्रयोगो निरर्गळ एव बाधकादर्शनात्- तस्माद्द्वाश्वादिपदानामिव जामिपदस्यापि लोकवेदयोरैकरूप्येण दर्शनादिह श्लोके- तत्प्रयोगो नैवानुपपन्नः- अस्ति च लोकेऽपि प्रयोगः-"स्याज्ज्याम्यव्ययमालस्य" इति शेषानुशासनात्- अयं च कोशः "जामिस्स्वनृकुलस्त्रियो"रिति नामलिंगानुशासन-व्याख्यावसरे टीकासर्वस्वकृदुदाहृत इत्यलं प्रसक्तानुप्रसक्तिकया। वृत्तं शिखरिणी ॥12॥

**मू. विद्वद्भ्यस्स्वदमानया यदनया विश्वाम्ब! नाधीयते**
**स्तुत्या ते सुखमज्ञचेतसि दृषत्प्राये न दूये ततः।**
**गान्धर्वी हि पुरंदरादिशिरसामान्दोळयित्री चिरं**
**गीतिस्सा बधिरान्न नन्दयति चेत्किं छिन्न मेतावता॥ 13**

ननु संनिधौ महतामनुद्धतेन भाव्यमिति तिरोधाय प्राज्ञतां पूर्वश्लोके स्वनैच्यप्रदर्शनाय प्रकाशितमात्रां निस्सारतामेव वस्तुसतीमवगम्य नाभिनन्देयुस्सर्वेपि त्वत्कृतिं जना इति शंकायां- प्राक्तनानामपि महाकवीनां प्रबन्धारम्भेषु स्वस्वकृतीनामवश्यं प्रेक्षावदुपादानार्थमेव नैच्यप्रदर्शनस्य सर्वत्र दृष्टतया तदवश्यंभावमर्यादां जानन्तोऽभिनन्देयुरेव प्रेक्षावन्तोस्मत्कृतिम्-पृथग्जनानभिनन्दनेन का नो हानिरित्याह। विद्वद्भ्य इति। हे विश्वाम्ब जगन्मातः- "अम्बार्थ नद्यो"रिति संबुद्धिपरकत्वे ह्रस्वे- "एङ्ह्रस्वा"दिति सुलोपः- विद्वद्भ्यः शास्त्रवेदितृभ्यः- स्वदमानया रोचमानया "रुच्यर्थानां प्रीयमाण" इत्यनेन संप्रदानसंज्ञायां "संप्रदाने चतुर्थी"त्यनेन च विद्वच्छब्दाच्चतुर्थी- स्वदधातुश्चायं रुच्यर्थः- विद्वभ्य इति निष्प्रतियोगिक विद्वच्छब्देन असंकुचितज्ञानानां मुक्तानां परविद्यापारीणानामपरविद्यानिष्णातानां कलाविदां च संग्रहः- तेन "निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनोऽभिरामा" दित्युक्तरीत्या मुक्तमुमुक्षुबद्धरूपत्रिविधचेतनास्वाद्यत्वं द्योत्यते। सर्वविधरसानामप्यत्र प्रतिपादितत्वात्-स्वदमानयेति कर्तरि प्रत्ययेन एतद्रसास्वादः स्वादयितॄणां प्रयत्नलेश-मप्यनपेक्ष्यैव सिद्ध्यतीति व्यज्यते। तेन रसस्यातिमात्रोन्मस्तकत्वं द्योत्यते। अनया- मया वक्ष्यमाणयेत्यर्थः- विद्वद्भ्योऽवश्यं स्वदत इति सिद्धवत्कृत्यैव भाविन्यास्स्वकृते स्स्वदमानयेति विशेषणम्- अन्यथा आस्वादनास्वादयोः प्रबन्धश्रवणानन्तरभावित्वात् असंगतिस्स्यात्- वर्तमानकालिकेन च शानचा स्तुतिरसस्य पौनःपुन्येन चर्व्यमाणत्वेप्ययात

भामहोऽप्याह। उपश्लोकयस्य माहात्म्यादुज्ज्वलाः काव्यसंपद इति। दृषदा अश्मना तुल्यं दृषत्प्रायं- "शिला दृष" दित्यमरः। "प्रायोवयोमृत्युतुल्य बाहुल्यानशनेषु चे" ति नानार्थरत्नमाला- "प्रायो वयसि बाहुल्ये तुल्यानशन मृत्युष्वि" ति वैजयन्ती च। अस्योत्तर पदत्व एव तुल्यार्थकत्वं नान्यत्रेति "प्रायोभून्म्यन्तिगमन" इत्यत्र टीकासर्वस्वकृदादयः- तेनास्वपदविग्रहोपि- अत्र "स्युरुत्तरपदेत्वमी। निभसंकाशनीकाशप्रतीकाशोपमादय" इत्यत्रादि पदेन प्रायशब्दस्यापि संग्रह इति ध्येयम्। दृश्यन्ते च प्रयोगाः- "स्त्रीप्रायमितरत्सर्वं- तृणप्राया हि शत्रव इत्यादयः- अनेन "कथार्थकथनेनार्थः कस्स्थाणुनिकटे वने" इति वासिष्ठोक्तरीत्या- रसग्रहणस्वरूपयोग्यतासंभावनाप्यस्य नास्तीति व्यज्यते- अज्ञानां यथाजातानां- चेतसि चित्ते- केवलाज्ञपदेन न लौकिकोक्तिचातुर्यमप्यमी विदन्ति- किमुत रसभावगभीरमहोदारकविसार्वभौमकृतिचातुर्यमिति व्यज्यते। सुखं आनन्दः- नाधीयते न क्रियत इति यत्- आङ्पूर्वकाद्धधातेः कर्मणि यक्। ततः अज्ञचेतस्सुखानाधानादित्यर्थः- न दूये-न दुःख्यामि-अन्धानिरीक्षितकामिनीवदनसौन्दर्यवत् स्तुतेरनपराधादिति भावः- "दुञ् परितापे" दैवादिकः।

तथा हि- पुरंदरादीनां इन्द्रप्रभृतीनां रसिकसार्वभौमाणां- इतरेषां किमु वक्तव्यमिति भावः- शिरसां मूर्ध्नां कर्मणि षष्ठी- चिरं बहुकालं- आन्दोळयित्री- पौनःपुन्येन कम्पयित्री- आन्दोळयतिरयं चौरादिकः "बहुळमेतन्निदर्शन" मिति- बहुळग्रहणेन तत्र तद्ग्रहणात्- तस्मात्तृचि "उगितश्चेति ङीप्" - आन्दोळयत्रीत्यनेनान्दोळने श्रोतृप्रयत्नानपेक्षत्वं द्योत्यते- चिरमित्यनेन श्रवणोत्तरकालमप्यान्दोळनानुवृत्तिसातत्यं सूचितम्- तेन माधुर्यस्यातिभूमिता द्योत्यते। सा सर्वलोकप्रसिद्धा- अत एवास्य यच्छब्दोपादानानपेक्षता- तथाचोक्तं काव्यप्रकाशे। "प्रक्रान्तप्रसिद्धार्थविषयः तच्छब्दो-यच्छब्दोपादानं नापेक्षत" इति। गान्धर्वी-विश्वावसुचित्ररथप्रभृति गन्धर्वसंबन्धिनी- न तु यस्य कस्य चित्संबन्धिनीति भावः- गीतिर्गानं- बधिरान् जात्यैव श्रोत्रेन्द्रियविकलानिति भावः- "स्यादेडे बधिर" इत्यमरः- न नन्दयति-न हर्षयति चेत्- एतावता- आजन्मबधिरानानदनमात्रेणेत्यर्थः- एतच्छब्दात्- "यत्तदेतेभ्यः परिमाणे" इत्यनेन वतुप्प्रत्यये- "दृग्दृशवतुष्वि" त्यनेन- एतच्छब्दान्त्यावयव- दकारस्य आत्वम्- किंछिन्नं-का क्षतिरित्यर्थः- न हि बधिरानानन्दनमात्रेण गन्धर्वगानेनाप्य श्लाघनीयेन भूयत इति भावः- अत्र पूर्वार्धे विद्वदास्वाद्यत्वलक्षणस्तुतिगुणेनाज्ञचेत- स्सुखाधानरूपगुणानुदयादेकोऽवज्ञालंकारः- उत्तरार्धे च- इन्द्रादि शिरःकम्पयितृत्वरूपगुणेन

स्वरादिषु पाठात्- ननु "सायं चिरं प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् चे"ति सूत्रे किमर्थं चिरग्रहणं- अव्ययत्वादेव ट्युट्युलोस्सिद्धत्वादिति चेत्तत्रानव्ययभूताकारान्तशब्दस्य प्रत्यय-संनियोगेन मान्तत्व निपातनार्थं तदित्यवधेयम्। एतच्च तत्रैव भाष्ये स्पष्टम्। तथा च तत्र भाष्यम्। "अथ सायचिरयोः किं निपात्यते- प्रत्ययसंनियुक्तं सायचिरयोर्मकारान्तत्वं प्रत्ययसंनियोगेन निपात्यते- सायंतनं चिरन्तन"मिति। नन्वेवमपि मान्ताव्ययाट्ट्युट्युलोः चिरन्तनमित्यस्य सिद्धत्वेन चिरशब्दा "त्कालाट्ठञि"ति ठञश्च "चिरपरुत्परारिभ्यस्त्नो वक्तव्य" इति त्नप्रत्ययेनैव बाधसिद्धेस्सूत्रे चिरंग्रहणं व्यर्थमेवेति चेन्न- अव्ययत्वप्रयुक्त ट्युलोरनित्यत्वज्ञापनेन चारितार्थ्यात्- तेन सायंप्रातिक इत्यादि सिद्धमित्याहुः- तत्त्वबोधिन्यां तु- स्वरादौ पाठादव्ययत्वादेव सिद्धे सूत्रे चिरमित्येतद्व्यर्थमित्युक्तम्- लघु शब्देन्दुशेखरे तु-चिरमित्यव्ययस्य स्वरादौ पाठस्त्वप्रामाणिक इत्यभिहितम्-तथा च 'सायं चिरं' सूत्रशेखरग्रन्थः-"ननु चिरमित्यस्याप्यव्ययेषु पाठात्तद्ग्रहणमपि व्यर्थम्चिरशब्दाट्ठञ-स्त्नप्रत्ययेनैव बाधसिद्धेः- न चाव्ययत्व प्रयुक्त- ट्युट्युलोरनित्यत्वज्ञापनार्थं तत्- तेन सायं प्रातिकमित्यादि सिद्धिरिति वाच्यम्- सायं ग्रहणस्यापि तत्संभवादिति चेत्सत्यं- अव्ययेषु तस्याप्रामाणिकत्वा"दिति- अत एव- "नैतदस्ति मकारान्तस्सायंशब्द" इति सायंशब्दप्रत्याख्यानपर तत्सूत्रभाष्यम्- "अनेन सायंशब्दः प्रत्याख्यायते- अव्ययत्वादेव ट्युट्युलोस्सिद्धत्वाच्चिरशब्दस्यैव तु मान्तत्वं निपात्यत" इति कैयट ग्रन्थश्च संगच्छते- चिरमित्यव्ययसत्त्वे तु सायं शब्दवदयमपि प्रत्याख्यायेतैव- नन्वेतद्विप्रतिषिद्धं- "यत्सायं चिरमिति मान्ताव्यये- सायंचिरमिति सूत्रस्थ भाष्यादित्यव्ययबृहल्लघुशेखरयोरुक्तमिति चेन्न- तस्य प्राचीनानुरोधित्वात्- अत एव तत्रैव लघुशेखरे- "चिरमित्यव्ययम प्रामाणिकमिति परे" इत्युक्तम्- न चैतस्मिन् पक्षे चिरमित्येतदसाध्वेवेति भ्रमितव्यं- अनव्ययचिरशब्दात्क्रिया विशेषण नपुंसक लिङ्ग द्वितीयैकवचनान्तत्वेन तदुपपत्तेः- न चानव्यय चिरशब्द एव नास्तीति भ्रान्तिर्युक्ता- "तन्त्रादिचिरापहते- अथ सायचिरयोः किं निपात्यते- चिरपरुत्परारिभ्य" इति सूत्रभाष्यवार्तिक प्रयेगसद्भावात्- तन्त्रादचिरापहृत इति सूत्रे तत्त्वबोधिन्यां- अचिरः कालोऽपहृतस्येति- शिशुपालवधे षष्ठसर्गे चिरसौरभ संपद इत्यत्र सर्वचिराचिरावस्थायिनी सौरभसंपदिति च विग्रह प्रदर्शनमत्रैवानुकूलम्। अत एव नातिचिराधिकरणे "तत्र तत्र नातिचिरं तिष्ठतीति श्रीमद्भाष्ये- "व्योमादिस्थित्यवस्था चिरमचिरमिति व्यक्तनिर्देशहाने"

पदाश्रवणम्। तत्र तदन्वययोग्यक्रियावाचकपदाध्याहारेण निर्वाहः- अथ चिर शब्दस्यानव्ययत्वे सर्वासां श्रवणं स्याद्विभक्तीनामिति चेन्नैतदेवं- शब्दशक्ति स्वाभाव्यादयमेक वचनान्त एव- यथा पचतिकल्पं पचतिरूपमिति- भैरवमिश्रेणापि शब्दस्वभावादयमेक-वचनान्त इत्युक्तम्।

अथ मन्यसे चिरेणेत्याद्यव्ययानां निरर्थकतैव- उक्तरीत्या एकवचनान्त चिरशब्देनैव निर्वाहादिति-तदपि न चतुरश्रं- अहं शुभमाद्यव्ययेष्वप्यस्य चोद्यस्य तुल्यत्वात्- तेषां सर्वासु विभक्तिषु वृत्तिविषये चाविकृततयाऽवस्थानमस्ति प्रयोजनमिति चेदत्रापि तत्तुल्यमिति संतोष्टव्यं- तस्मादत्र चिरंशब्दस्यान्दोळनक्रियाविशेषणत्वेन द्वितीयैकवचनान्ततया वा- अत्यन्तसंयोगद्वितीयान्ततया वा चिरंशब्दप्रयोगो युक्त एव- वस्तुतस्तु भाष्ये सायं शब्दप्रत्याख्यानमितरप्रत्याख्यानोपलक्षकमित्यास्थेयम्- अन्यथाप्रगे इत्यस्या प्रत्याख्यानात्तस्य एदंताव्ययत्वं व्याहन्येत। न चेष्टापत्तिरिति वाच्यम्- "सायंसायेप्रगेप्रातः प्रभाते" इत्यमराव्ययेषु प्रगे शब्दपाठस्य निरालम्बनतापत्तेः- प्रगेतनमिति रूपं त्वव्ययत्वादेव सिध्यति- तर्हि अनव्ययप्रग शब्दाट्ञ् कुतो न भवतीति चेदनभिधानादेवेत्यवधेहि- न च प्रगे इत्यस्य स्वरादौ पाठादर्शनादव्ययत्वं सांशयिकमिति वाच्यं- स्वरादेराकृतिगणत्वादेव तत्सिद्धेः- प्रेत्यामुत्रामुष्मिन्नित्यादीनि कति कति न दृश्यन्तेऽव्ययानि स्वरादेराकृतिगणत्वादेव सिध्यन्ति महाकविप्रयुक्तानि- अन्यथा "कृतप्रगेकृत्यममुं महर्षि"मित्याद्यनन्यथासिद्ध बहुप्रयोगवैयग्री दुष्परिहरा स्यात्-अथ तादृशबहुप्रयोगान्यथानुपपत्त्या प्रगे इत्यव्ययमभ्युप-गम्यत इति चेत्किमपराद्धं चिरमित्यनेनैव- अस्यापि बहुप्रयोगसद्भावात्- उदाहृता एव प्रयोगाश्च- नन्वन्यथा सिद्धा उदाहृताः प्रयोगा इति चेच्छृण्वनन्यथा सिद्धमेव- "महीपतिः प्राप्तचिरंरणश्रम" इति बालभारते। हेमचन्द्रोप्याह। "चिराय चिररात्राय चिरस्य च चिराच्चिरम्। चिरेण दीर्घकालार्थे" इति। तस्मात्सायं चिरं सूत्रे सायं शब्दप्रत्याख्यानस्य चिरं प्रगे शब्दप्रत्याख्यानोपलक्षकत्वाभ्युपगमे न कश्चिदपि क्लेशः कौस्तुभादिग्रन्थानां अमरादिकोशानां- "प्रगेप्रगीतो जनयेत्- प्रगे नृपाणामथ तोरणाद्बहिः- शिखरिणि क्वनु नाम कियच्चिरं- राजपुत्र चिरंजीवे"त्यादि प्रयोगाणां तत्तद्व्याख्यानां चानुग्रहः कृतस्स्याद्भूयानिति दिक्। वृत्तं शार्दूलविक्रीडितम्। यत्त्वत्र स्वदमानयाऽत्मकृतयेति पठित्वा अज्ञानां चेतसि सुखं नाधीयते चेदिति चेत्पदमध्याहृत्य- तत इत्यस्य तर्हीति व्याचख्यौ प्रतीच्यः- तत्तु स्वदमानया यदनयेत्यध्याहार निरपेक्षानुप्राससुन्दरसांसिद्धिकपाठपरित्यागेन तद्विपरीत पाठकल्पनया [illegible] ॥13॥

नन्वेवं स्वदतां नाम विद्वद्भ्यस्त्वया करिष्यमाणा स्तुतिः- यदि शक्नोषि स्तोतुं-स्तुतेर्गुण्यवच्छिन्नगुणाभिधानरूपत्वेन लक्ष्मीनिष्ठगुणाभिधाने हि स्यात् स्तुतित्वं-गुणास्तावत्तस्या एकैकश एवापरिच्छेद्याः-किं तान्प्रभवस्यंशतोऽपि वर्णयितुमित्यत्र चतुर्विध-श्रुतिमुखा एव नेशते त्वद्गुणान्वर्णयितुं किमहं प्रभवेयमथापि चापलं मम बलीय इत्याह। वक्तुमिति। हे नारायणप्रेयसि॥ नरो भगवान् "जह्नुर्नारायणो नरः" इति नामसहस्रपाठात्-तस्य भगवत इमे नराः- स्वामित्व सौशील्यवात्सल्य सौलभ्य ज्ञानशक्त्यादय आश्रितरक्षण उपयुक्ता गुणा; तेषामयनं आधारः नारायणः- पुंस्त्वं लोकात्। तस्य- प्रेयसि प्रियतमे-नारायणप्रेयसीत्यनेन "न ते विष्णो जातो जायमानो देवो महिम्नः परमन्तमाप" "वर्षायुतैर्यस्य गुणा न शक्त्या वक्तुं समेतैरपि सर्वदेवैः" - "यथा रत्नानि जलधेरसंख्येयानि पुत्रक। तथा गुणा ह्यनन्तस्य ह्यसंख्येया हि चक्रिण" इत्युक्तरीत्या अनन्तकल्याणगुणरत्नरत्नाकरस्य पत्युरिवास्या अपि कल्याणगुणानामानन्त्यं सूचितम्- स्वानुरूपं हि वस्तु प्रियतमं भवति। तदेतद् गद्यत्रयेऽप्यनुगृहीतं भगवद्भाष्यकारैः "भगवन्नारायणाभिमतानुरूपस्वरूपरूप गुणविभवैश्वर्यशीलाद्यनवधिकातिशयासंख्येय कल्याणगुणगणा" मिति- वेदार्थसंग्रहेपि-"स्वाभिमतस्वानुरूप स्वरूपरूप गुणविभवैश्वर्यशीलाद्यनवधिक महिममहिषी" ति। उक्तं च श्रीवत्सांकमिश्रैः। "देवि त्वन्महिमावधिर्न हरिणा नापि त्वया ज्ञायत" इति- तदात्मजैश्च-"प्रशकनबलेत्यारभ्य- "तव भगवत श्चैते साधारणा गुणराशय" इति- न चैतावता भगवतो निस्समाभ्यधिकत्व विरोधः- प्रत्युत तत्प्रतिष्ठापनमेव। "ह्रीश्च ते लक्ष्मीश्च पत्न्या" विति श्रुतेः- न ह्येवंविधपत्नीविशिष्टत्वं कस्यचित्तदन्यस्यास्ति- येन तत्साम्यादिशंका स्यात्-उपबृंहितं च "अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजे" ति। तदेतदन्वग्राहि गद्यभाष्ये श्रीमदाचार्यैः- "यथा प्रभागुणोत्कर्षे भास्करो निस्समाधिकः- श्रीमानपि तथैव स्यात्पतिः पत्नीगुणोन्नतौ। ज्ञानभोगसमानत्वे नित्यमुक्तेश्वरेषु च। यथा वैषम्यनियतिः तथैवात्रेत्यनाकूल" मिति। शास्त्रेण बहुधा भगवद्गुणत्वादिरूपेण निर्दिष्टाया एतस्याः कैश्चिन्निर्गुणत्वादिकं शङ्क्यते तन्निरासार्थमह। तव गुणानिति। गुणत्वादि निर्देशस्त्वस्याः-यथा ज्ञानस्य द्रव्यत्वेपि गुणत्वव्यवहारस्तादधीन्यात्तथा द्रव्यत्वाद्यविरोधेन नेयः- "तदुक्तं हरिगुणमणिदर्पणे- "ज्ञानं धर्म्यतिवर्तित्वान्न स्याद्रूपादिवद्गुणः- किं तु प्रभादिवद्द्रव्यं तादधीन्याद्गुणाभिधे" ति। "त्वयावलोकितास्सद्यश्शीलाद्यैस्सकलैर्गुणैः। धनैश्वर्येण

कल्याणगुण शालित्वमस्याः कमुत्यासिद्धम्- अत्र सर्वैश्वर्य गुणापेता नित्य तद्धर्मधर्मिणी त्यादि प्रमाणानि अनुसंधेयानि। तव गुणान्- क्षान्त्यौदार्यकारुण्यैश्वर्यादीन् कल्याणगुणान्- एकैकशोऽपीति भावः- तव गुणानित्यनेन ''गुणास्सत्यज्ञानप्रभृतय उत त्वद्गततया शुभीभूयं याता इति हि निरणैष्म श्रुतिवशा''दित्युक्तरीत्या हेमारविन्द परिमळन्यायेन गुणानां गुण्यधीनः कोप्युत्कर्षो व्यञ्जितः- असौ- अपौरुषत्वेन भ्रमविप्रलम्भादि वक्तृदोषासंस्पृष्टतया अस्मदाद्यतीन्द्रियपुरुषार्थाद्यावेदकत्वेन च प्रसिद्धा- चतस्रः विधाः प्रकाराः यस्यास्सा चतुर्विधा- ऋग्यजुस्साम-अथर्वभेदभिन्नेत्यर्थः- सा चासौ श्रुतिः- नैवेष्टे नैव समर्था भवति। ''ईश ऐश्वर्ये'' इत्यस्मादादादिकात्कर्तरि लट्प्रथमैकवचनम्- षत्वष्टुत्वे- एवकारेण क्वचिदपि तत्प्रत्याशापि दवीयसीति व्यज्यते। त्वत्स्वरूपरूपगुणविभवादिनिर्धारणार्थमेव प्रवृत्ता चतुर्विधश्रुतिरपि ''यतो वाचो निवर्तन्त'' इत्युक्तरीत्या वक्तुं नेष्टे- किमुतास्मदादिरिति भावः।

यद्वा- चतुर्विधाः श्रुतयः श्रोत्राणि यस्य सः- चतुर्विधश्रुतिः- विंशतिविध वीक्षणानामिति वत्-अग्निरित्यर्थः- ''द्वे शीर्षे सप्तहस्तासो अस्ये''ति श्रुत्युक्तरीत्या तस्य द्विशीर्षतया श्रोत्रचतुष्टयवत्त्व संभवात्। ''वेदे श्रवसि च श्रुति''रित्युभयत्राप्यमरः- अनेन द्विमुखत्वमुक्तं भवति। अस्मदाद्येक मुखापेक्षया द्विमुखस्य वक्तृतायां सामर्थ्यविशेषसद्भावं द्योतयितुमिदम्- चतुर्विध श्रुतिरित्यनेनाधीतसांगवेदचतुष्टय इत्यप्यर्थो लभ्यते- असौ- इत्यनेन- ''अग्निरग्रे प्रथमो देवताना''मिति श्रुत्युक्तरीत्या देवताग्रेसरत्वेन ''अग्निर्वाग्भूत्वा मुखं प्राविश''दिति श्रुत्युक्त प्रकारेणाखिल प्रपञ्च वागिन्द्रियाधिष्टातृत्वेन च प्रसिद्धिस्सूच्यते। ईदृशोपि त्वद्गुणान्वक्तुं न शक्नोति किमुतानेवंविध इति व्यज्यते। एवमग्रेऽपि। एतेन गुणवक्तृताया अग्नावप्रसिद्धत्व शंका प्रत्युक्ता- वागिन्द्रियप्रचारसामान्यस्य तदधीनत्वात्- अत एव लक्ष्मीतन्त्रे नवमाध्याये। ''स्तुतयो मे तदा दृष्टा देवैर्वह्नि पुरोगमै''रिति श्रियैवोक्तं संगच्छते। चतुर्विधा श्रुतिरिति व्यस्ततया पाठस्तु केषांचिदस्वच्छः- उक्तरीत्यार्थ स्वारस्यायोगात् उत्तरत्राष्ट श्रुतिरित्यादौ समस्ततयैव दर्शनात्तदनुरोधस्यैव न्याय्यत्वाच्च। उत्तरोत्तरश्रुतिद्वैगुण्यस्य कविसंरम्भ गोचरत्वेनाभ्युपक्रमत्वमित्यपि ध्येयम्। ननु- मास्तु वक्तुं सामर्थ्यं चतुर्विधश्रुतेः तद्द्विगुणश्रुतिरपि किं नेष्टे- तत्राह। न चाष्टश्रुतिरिति। च शब्दोऽप्यर्थकः- अष्टविधा श्रुतिरष्टश्रुतिरपि- त्रिविधा विद्या त्रिविद्येतिवन्मध्यमपदलोपी समासः- एवकार ईष्टे इत्येतच्चात्रोत्तरत्र च संबध्येते- अर्थस्तूक्त एव। श्रुतेरष्टविधत्वं च- ''आयुर्वेदो धनुर्वेदो वेदो गान्धर्व इत्यपि। अर्थशास्त्रमिति प्रोक्तमुपवेदचतुष्टय''मिति

तपोधनाः। त्वां स्तोतुमपि नेशानास्त्वत्प्रसादलवं विने''त्यादिकमनुसंधेयम्। अथ मा भूदष्टश्रुतेरपि शक्तिस्ततोऽपि द्विगुणश्रुतिश्चेदपि किं नेष्टे- तत्राह- नो चक्षुश्श्रुतिरपीति। नो इत्योदन्तमव्ययं ''अभावे नह्य नो नापी''त्यमरः-चक्षुश्शब्दोऽत्र ''रूपाण्यश्वाक्षिभूतानी''त्यत्राक्षिशब्दवद्द्वित्वसंख्याबोधकः- यदाहुः- ''अब्धिभूतरसादीनां ज्ञेयास्संख्यास्तु लोकत'' इति। चक्षुर्गुणिता श्रुतिः पूर्वोक्ताष्टविधश्रुतिः- मध्यमपदलोपी समासः- षोडशविधश्रुतिरित्यर्थः- द्विगुणिताह्यष्टौ षोडश संपद्यन्ते- षोडशविधवेदा अपीत्यर्थः- बहुव्रीहिसमासे तु- अष्टमुखोऽपि वेत्यर्थः षोडशविधवेद परिज्ञातापि वेत्यर्थोपि लभ्यते। अत्रापिशब्दस्संभावनायां ''गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपी''त्यमरः। यदि क्वचित्षोडश विधापि स्याच्छ्रुतिस्तदा सापि- अष्टमुखोपि- षोडशविध श्रुतिपरिज्ञातापि वा तव गुणान्वक्तुं नो ईष्ट इत्यत्यन्तासंभावनद्योतनार्थमिदम्। एवमेवोत्तरोत्तरं श्रुतिद्वैगुण्ये संभावितेऽपि दुर्वचास्त्वद्गुणा इत्यप्युन्नेयम्। चक्षूंष्येव श्रुतयश्श्रोत्राणि यस्य स चक्षुश्श्रुतिः- शेष इत्यर्थस्तु वास्तवः- ''चक्षुश्श्रवाः काकोदरः फणी''त्यमरः- अत्र पक्षे सहस्रवदनाभिप्रायगर्भमिदम्। अत्र चक्षुष्षु श्रुतयो यस्येति बहुव्रीह्याश्रयणे सर्वा अपि श्रुतयोऽस्य चक्षुष्ष्वेव सन्तीत्यर्थलाभादधीतानां तासामयातयामत्वद्योतनात्प्राज्ञतमत्वं प्रतीयते- ईदृशोऽपि नैवेष्टे- अहो इति सर्वज्ञतमैरपि दुर्वचकल्याणगुणगणमहिमातिशय परिचिन्तनजनिताश्चर्ये। तां वेदादिभिरपि स्तोतुमशक्यां- त्वामपि- अपि शब्दस्संभावने वेदाद्यगोचरवैभवगुणां त्वामपि स्तोतुं प्रवृत्त इति साहसोत्कर्षमाविष्कर्तुमत्युक्तिरियम्। अत्युक्तिरसंभाव्यार्थसंभावनं- संभावनपदस्येदृशार्थकत्वं तु- ''अपि स्तुयाद्विष्णु''मित्यत्रेवेति ध्येयम्। स्तोतुं परमार्थगुणवर्णनेन सेवितुमित्यर्थः- व्यवसितः व्यवसाययुक्तः- व्यवपूर्वकात्स्यतेः कर्तरि क्तः- कृतनिश्चय इत्यर्थः- अहं- अज्ञात श्रुतिवर्णमुखः- परिमिततम ज्ञानशक्तिरिति भावः- यद्गुणानेवैकैकशोंऽशतोऽपि वक्तुमशक्ताश्चतुर्विधश्रुत्यादयोऽपि- तां तादृशानन्तकल्याणगुणगण महोदधिं त्वामपि सर्वप्रकारेण वर्णयितुं कृतव्यवसायोऽहमित्यनेन वक्ष्यमाणं स्वचापलमत्यारूढमिति व्यज्यते।

हनुरस्यास्तीति हनूमान्- प्रशंसायां मतुप्- हनोः प्राशस्त्यंच- इन्द्रवज्र- क्षतिजनितवीरकिणाङ्कितत्वात्- अन्वर्थसंज्ञा चेयं- यथोक्तमिन्द्रेणोत्तरकाण्डे- ''मत्करोत्सृष्टवज्रेण हनुस्तस्य तदा क्षतः- नाम्नैष हरिशार्दूलो भविता हनुमानिती''ति- ''गण्ड कपोलौ तत्परा हनु''रित्यमरः- ''अन्येषामपि दृश्यत'' इत्यत्र

तथा साध्विति तदर्था''दिति शब्देन्दुशेखरग्रन्थश्च संगच्छते- अत एव ''पम्पातीरे हनुमता, हनुमन्कीदृशं सख्य''मित्याद्यपि साध्वेवेति बोध्यम्- न च ''अप्राणिजातेश्चे''ति वार्तिकेन ऊङन्तोऽयं हनू शब्द इति भ्रमितव्यं- ''अरज्ज्वादीना''मिति पर्युदासाद्रज्ज्वादिषु हनुशब्दपाठात्- नन्वेवं कथमुक्तरीत्या हनुमानित्यपि प्रयोगः संगच्छेत- ''शरादीनां चे''ति दीर्घस्य नित्यत्वाच्छरादिषु हनुशब्दपाठादितिचेन्न- शरादिषु हनुशब्दपाठस्यैवा प्रामाणिकत्वात्- अन्यथा दृशिग्रहणात्पाक्षिकं दीर्घं वदतो मनोरमादि ग्रन्थस्य विरोधस्स्यात्- पाठस्य प्रामाणिकत्वेऽपि ''पृषोदरादीनी''त्यतो ''यथोपदिष्ट''मित्यस्य ''वले'' इतिं सूत्रे शेखरकृताऽनुवर्तितत्वाच्छरादीनां चेति तदुत्तरसूत्रेऽप्यनुवर्तने बाधकाभावान्मतुपि परे हनुशब्दस्य दीर्घो वैकल्पिकः- उभयथाऽपि शिष्टैरुपदिष्टत्वात्- न च ''शरादीनांचे''त्यत्र यथोपदिष्टमित्यस्याननुवर्तनेऽपि ''संज्ञाया''मित्यनुवृत्तेस्संज्ञाविषये नित्यं दीर्घप्रवृत्तौ हनूमानिति- योगमात्र विवक्षायां तु दीर्घाप्रवृत्तोर्हनुमानित्यपि सिध्यति। यथा ''नख मुखात्संज्ञाया''मिति संज्ञाविषये ङीब्निषेधे शूर्पणखेतिवद्योगवृत्त्या शूर्पणखी शब्दोऽपि राक्षस्यां भवतीत्यभ्युपगतं व्याख्यातृभिस्तथेहाप्यभ्युपगमे को विरोध इति वाच्यम्। ''नाम्नैष हरिशार्दूलो भविता हनुमानिती''ति रामायणस्थ संज्ञानिर्वचने दीर्घाघटिततयैव तद्दर्शनेन विरोधस्य स्फुटत्वात्- न च तत्रापि दीर्घघटिततयैव पाठस्स्यादित्यापतितव्यं- छन्दोभङ्गापत्तेः न चार्षत्वेन च्छन्दोभङ्गस्यादोषत्वं कल्प्यत इति वाच्यम्- क्लृप्ते कल्पनस्यानुचिततत्वात्- तस्मादुक्तरीत्यैवोपपद्यते प्रयोगद्वैधीत्यास्थेयम्।

वस्तुतस्तु-औणादिके हनोरूप्रत्यये हनूरित्यपि सिध्यति- तस्मान्मतुपि हनूमानिति- न च ''शॄस्पृस्निहितृप्यसिहनिक्लदिबन्धिमनिभ्यश्चे''ति हनेरु प्रत्ययस्यैव विधानात्कथमूप्रत्यय इति वाच्यम्। यथा ''केशॄ एरच्चास्ये''ति सूत्रे कशेरूशब्दस्य- ऊप्रत्ययान्तत्वेपि बाहुलकादुप्रत्यये कशेरुरित्यपि सिध्यति-तथैव हनुशब्दस्य उप्रत्ययान्तत्वेपि बाहुलकादूप्रत्यये हनूरित्यस्यापि सिद्धेर्निष्प्रत्यूहत्वात्। अत एव ''हनूश्चापि हनूश्च स्या''दिति श्रीहर्षद्विरूपकोशः- ''तनुस्तनूर्हनुश्चैव''मित्यन्योपि द्विरूपकोशस्संगच्छते। एवं च दृशिग्रहणात्पाक्षिको दीर्घ इति कल्पनम्। शरादिषु हनु शब्दपाठः- यथोपदिष्टमित्यस्यानुवृत्तिकल्पनं च नावश्यकम्- उक्तरीत्यैवेष्ट सिद्धेः। न च ऊप्रत्ययकल्पनक्लेश एव मा भूत्। प्रागुक्तरीत्यैवेष्टसिद्धेरिति वाच्यम्- वृत्तविषये प्रामाणिक- प्रयुक्तस्य हनूरित्यस्य सिद्ध्यर्थं तदावश्यकत्वात्- नन्वेवमरज्ज्वादीनामित्यूङ्विधौ हनुशब्द

हनूमान् मुखं प्रधानं येषां तैरपीत्यर्थः-"मुखं प्रधाने प्रारम्भे वक्त्रे निस्सरणेऽपि चे"ति रत्नमाला- हनूमन्मुखैरित्यनेन गजगवाक्षगवयशरभ गन्धमादनमैन्दद्विविदादीनां ग्रहणम्- हनूमच्छब्देन शैशव एव चण्डांशुमण्डलपर्यन्तप्लवनस्य प्रत्यभिज्ञानात्तस्यान्य-लंघनमकिंचित्करमिति व्यज्यते। तन्मुखैरित्यनेनेतरेषामपि तत्तौल्यं द्योत्यते- दूरं अत्यन्तमिति यावत् - दूरमिति जलधिविशेषणं वा-तदा दूरं- अत एव हनूमन्मुखैरपि दुर्लङ्घमिति योजना- दुर्लङ्घं लङ्घितुम् अशक्यमित्यर्थः- हनुमदादिभिरप्येकदेश एव लङ्घितो न तु कृत्स्न इति भावः। "ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्"-दुर्लङ्घ्यमिति पाठः दुर्लङ्घनीयमिति तद्व्याख्यानं च कस्यचिदसाधु- उक्तरीत्या खल्प्रत्ययेन "अचोय"दिति प्राप्तयत्प्रत्ययस्य "तव्यत्तव्यानीयर" इति प्राप्तानीयरश्च बाधात्- न च लघिधातोरजन्तत्वाभावात्" नाचोय"दिति सूत्रविषयत्वं- येन खल्प्रत्ययेन यतो बाधस्संभाव्येतेति शङ्क्यम्। "अंग्रहणं शक्यमकर्तुं- योगविभागोऽप्येवं- तव्यदादिषु यतोऽपि सुपठत्वा"दिति मूल एवोक्तत्वाद्धातुसामान्यादपि यत्प्रत्ययस्य निष्प्रत्यूहत्वात्- न च वासरूप शास्त्रेणोक्त प्रत्यय निर्वाहः- तस्य स्त्र्यधिकारादूर्ध्वमप्रवृत्तेः- "प्रैषातिसर्ग प्राप्तकालेषु कृत्याश्चे"ति सूत्रे पुनः कृत्यविधिना ज्ञापितत्वात्- खलश्च स्त्र्यधिकारादूर्ध्ववर्तित्वात्[1] - तस्माद्दुर्लङ्घमित्येव पाठः- जलानि धीयन्तेऽस्मिन्निति जलधिः सिन्धुम्- कृत्स्नमपीति भावः- तरीतुं प्लवितुं मनो यस्य सः- तस्य- "वृतेवे"तीटो वैकल्पिको दीर्घः- "तुं काममनसोरपी"ति तुमुनो मकारस्य लोपः। तरीतु मनस इत्यनेन तरणं मनोरथमात्र विषय एव- न तु क्रियया निष्पादयितुं शक्यमिति व्यज्यते। क्रियानिष्पत्तिरस्तु वा मा वा "मनोरथानामतटाः प्रवाहा" इत्युक्तरीत्या मनोरथस्य को निरोध इति भावः- पङ्गोः निसर्गत एव गमनशक्ति विकलस्येति भावः- चपलस्य भावः कर्म वा चापलं- अविमर्शजनित चित्तलाघवं- "रागद्वेषादिभिश्चित्तलाघवं चापलं मत"मिति लक्षणात्। युवादिषु चपल शब्दपाठात् "हायनान्तयुवादिभ्योऽणि"ति भावार्थे कर्मार्थे वा अण्- दधे बिभर्मि- दधातेर्लटयुत्तमपुरुषैकवचनम्- अत्यर्थ जङ्घालतमैरप्यशक्यलङ्घनमम्बुनिधिं तरितुं पङ्गोरभिलाषश्चापलमेवेति भावः- अत्र पूर्वार्धे नारायणप्रेयसीत्यस्य विशेष्यस्य गुणानन्त्याभिप्रायगर्भत्वादेकः परिकराङ्कुरालंकारः- "साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुर इति लक्षणात्- अत्र "विशेषणमात्रप्रयोगो विशेष्य

---

1. वस्तुतस्तु-दुर्ज्ञेयशब्दः शंकर-रामानुजादिभिः स्वस्वभाष्येषु प्रयुक्त इति, तद्वत्-दुर्लंघ्येति पाठोपि समर्थनमर्हति। दुर्घटवृत्तिकारेण महावैयाकरणेन प्रथमं ज्ञेयपदं प्रसाध्य, पश्चात् दुर् इत्यस्योपेन

"क्रुद्धस्य तस्याथ पुरामरातेः- गिरेस्तटित्वानिवेत्यादयो व्याख्याता" इति तत्सूत्रवृत्तिः- "आरट्टजश्चटुल निष्ठुरपात"मित्यत्रारट्टज शब्दस्यैवमेव विशेष्यपरत्वं वर्णितं मल्लिनाथेनापि। अत एव "कमला श्रीर्हरिप्रिये"ति कोशः- "अस्येशाना जगतो विष्णुपत्नी"त्यादयः प्रयोगाश्च विशेष्यपरत्व एव संगच्छन्ते-एतादृशस्थले विशेष्यसमर्पकपदान्तरप्रयोगे पुनरुक्तिं मन्यन्ते काव्याध्वनीनाः- अत एव फणीन्द्रादि शब्दानामपि विशेष्यसमर्पकत्वं निर्धार्यैव "फणीन्द्रस्ते गुणान्वक्तुं लिखितुं हेहयाधिपः, इत्यस्य परिकराङ्कुरोदाहरणत्वमुक्तं दीक्षितैः- अन्यथा तस्यानुदाहरणत्वमेवस्यात्- तस्मान्नारायण प्रेयसीत्यस्य विशेष्यत्वेन तस्यैव च साभिप्रायत्वात् परिकराङ्कुर इति सुस्थं- अत्र केषांचित्परिकरालंकारलेखनं तु विशेष्यसमर्पक पदान्तराध्याहाराभिप्रायेण स्यात्। वस्तुतस्त्वनध्याहारेणैव स्वारसिकालंकार-संभवे अध्याहारेणालंकार कल्पनं नातीव हृद्यम्- यद्वा रसिकरञ्जिनीकृन्मत मनुसृत्य स्यात्परिकरोक्तिः। तेन हि परिकराङ्कुरोपि परिकर एवान्तरभावि-तथा च तद्ग्रन्थः "परिकराङ्कुरो नाम नालंकारः- साभिप्रायपदविन्यासे परिकर इति तं लक्षयित्वा, विशेषणविशेष्य-पदत्वाभ्यां तद्द्वैविध्यसंभवेनास्य तदवान्तरभेदत्वसंभवात्- विच्छित्तिवैलक्षण्याधीनं ह्यलंकारवैलक्षण्यं- न चैकवाक्यानुप्रविष्ट पदसाभिप्रायत्वः- निबन्धने तदस्तीत्यल"मनेनेति। अथ श्रुतिशब्दविवक्षित वेदश्रोत्ररूपार्थद्वयश्लेषभित्तिकाभेदाध्यवसायमूलकातिशयो-क्त्युत्तम्भितानां- चतुर्विधश्रुतिः- अष्टश्रुतिः- चक्षुश्श्रुतिरिति विशेष्याणामुक्तरीत्या सर्वज्ञत्वाद्यभिप्राय गर्भतयाऽन्येपि त्रयः परिकराङ्कुरालंकाराः- अपिच प्रस्तुतलक्ष्मीगुण वक्तृतया निर्दिष्टानां चतुर्विधश्रुत्यादीना मनीशनक्रियारूपधर्मैक्यवर्णनात्तुल्ययोगितालंकारः "वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगितेति" लक्षणात्- एतेषामेकवाचकानुप्रवेश-लक्षणस्संकरः।

उत्तरार्धे पङ्गुचापलस्य प्रकृते कवावसंभवाच्चापलसदृशचापलमिति बिम्ब-प्रतिबिम्बकरणाक्षेपादसंभवद्वस्तुसंबन्धनिदर्शना "असंभवद्धर्मयोगादुपमानोपमेययोः। प्रतिबिम्ब क्रियागम्या यत्र सा स्यान्निदर्शने"ति लक्षणात्। यत्रोपमानधर्मस्योपमेयगतत्वेन निबद्धस्यान्वयासंभवात्तत्संबन्धार्थं बिम्बप्रतिबिम्बकरणमाक्षिप्यते सैका निदर्शना- तद्विपर्यये द्वितीया निदर्शनेति तदर्थः- दीक्षितास्त्विमां पदार्थवृत्तिनिदर्शनेति व्यवाहार्षुः- "पदार्थ वृत्तिमप्येके वदन्त्यन्यान्निदर्शनाम्। त्वन्नेत्रयुगळं धत्ते लीलां नीलाम्बुजन्मनो"रिति तदीय लक्ष्यलक्षण संग्रहः- जयदेवस्त्विमां ललितोपमेत्यवादीत्- अन्यच्च- गुणानन्त्यमभिप्रयता

मुक्तपरिकराङ्कुरालंकारोत्थापितमित्यनयोरंगांगिभावसंकरः। अशक्यतमलक्ष्मीस्तुति व्यवसितत्वरूपवाक्यार्थेन दुर्लङ्घजलनिधिं तितीर्षुपङ्गुचापलधारणरूपवाक्यार्थस्य समर्थनादन्यत्काव्यलिंगं निरुक्तपरिकरात् एकवाचकानुप्रवेशसंकीर्णेनोक्तकाव्यलिंगेन निर्व्यूढमित्यनयोः अंगांगिभावसंकरः। उक्तनिदर्शनाकाव्यलिङ्गयोः एकवाचकानुप्रवेश संकरः। परिकरचतुष्टयतुल्ययोगिताकाव्यलिंगनिदर्शनानां यथायोगं वृत्त्यनुप्रासेन सहैकवाचकानुप्रवेशसंकर इत्यादि सावधानैर्विभावनीयम्- किं च श्रुत्यादयोऽपि त्वद्गुणान्वर्णयितुमसमर्था इत्यनेन किमुतास्मदादिरिति प्रतीतेः काव्यार्थापत्त्यलंकारो व्यज्यते "कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यत" इति लक्षणात्- श्रुत्यादिदुर्वचगुणगण लक्ष्मीवर्णनव्यवसितोऽहं पङ्गुचापलं दध इत्यनेन क्व श्रुत्यादयः क्व चाहमिति प्रतीतेः विषमालंकारो व्यज्यते "विषमं वर्ण्यते यत्र घटनाऽननुरूपयो"रिति लक्षणात्- चक्षुश्श्रुतिरपीत्यनेन यदि कदाचिच्छ्रुतयष्षोडशविधा अपि स्युः- षोडशश्रुतिरपि वा कश्चित् स्यादिति संभावनाप्रतीतेस्संभावनालंकारो व्यज्यते "संभावना यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धय" इति लक्षणादिति पूर्वनिरूपितैरलंकारैरलंकारध्वनय इत्यलं बहुना। शार्दूल विक्रीडितम्॥14॥

मू. गर्वद्दुर्वसुधापतिस्तुतिपरव्याहारकूहान्धता-
निर्विण्णाशय एष वेङ्कटकविः पङ्केरुहावासिनि!
अद्य त्वद्गुणवर्णनामृतरसैरानन्दितुं जृम्भते
चिञ्चापर्णरसावसन्नरसनः पुण्ड्रेक्षुसारैरिव॥ 15

नन्वेवं चापलेन किं त्वत्कृतेस्सेत्स्यति विद्वदभिनन्दनीयस्तुतित्वं- येन मुधैव तदेतदनुबध्नासीत्यत्र,मा नाम सैत्सीत्तादृशस्तुतित्वं -येन विद्वदभिनन्दनं लभ्येत-अपि तु "पुरुषे पुरुषे वुद्धिर्या या भवति शोभना-तुष्यन्ति च पृथक्सर्वे प्रज्ञया ते स्वया स्वये"ति भारतोक्तरीत्या स्वकृतैस्त्वद्गुणवर्णनैस्स्वयमानन्दितुं मम को निरोध इत्यभिप्रयन्नाह। गर्वदिति। हे पङ्केरुहावासिनि- पङ्के रोहतीति पङ्केरुहं- "हलदन्तात्सप्तम्यास्संज्ञाया"मित्यलुक्- तेष्वावसतीति पङ्केरुहावासिनि- "सुप्यजातौ णिनिस्ताच्छील्य" इति ताच्छील्ये णिनिः- "विकासिकमले स्थिता- साहं वै पङ्कजे जाता सूर्यरश्मि प्रबोधित" इत्यादिक मिह भाव्यम्। वर्णयिष्यमाणेषु तद्गुणेष्वप्यरविन्दमकरन्दमाधुर्यानुवृत्ति व्यञ्जनार्थमिदं- अत एव तद्गुण वर्णनेऽप्यमृतरसत्वरूपणं वक्ष्यमाणं योयुज्यते- यथा "माता पित्रे"ति श्लोके

पङ्केरुहावासिनीत्यनेन व्यञ्जितसौलभ्याया श्रिय एतेषां चान्तरं महदिति व्यज्यते। तेन च वक्ष्यमाणं निर्विण्णाशयत्वमप्युचितमेवेति सूच्यते- दुष्टाश्च ते वसुधाधिपाश्च दुर्वसुधाधिपाः- दुरित्यनेन- "स्वामिना प्रतिकूलेन प्रजास्तीक्ष्णेन रावण। रक्ष्यमाणा न वर्धन्ते मेषा गोमायुना यथे"त्युक्तरीत्या संश्रितजनश्रेयोऽनुचिन्तन विमुखाः प्रत्युत तदुपमर्दनैकप्रवणा इति व्यज्यते- वसुधाया आधिं पान्तीति व्युत्पत्त्या "भूमेर्भारायमाणाना"मित्युक्तरीत्या एभिर्भूमेः भारवत्त्वमेव- न तु नाथवत्त्वमिति सूच्यते- यदुच्यते "नृपेण क्षुद्रशीलेन न सनाथा वसुंधरा- प्रमदा वृत्तसंपन्ना धूर्तेन पतिना यथे"ति। उक्तव्युत्पत्त्यविवक्षायामपि वसुधापतीति पाठेऽपि दुरित्यनेनैवायमर्थो व्यज्यते- अस्मिंश्च पाठे वृत्त्यनुप्रासो विशिष्य सुन्दरः- तेषां स्तुतिः स्तोत्रं- "भूतार्थे कतमा स्तुति"रित्यादाविवाविद्यमानगुणारोपेण वर्णनं स्तुतिरिति लोकदृष्टप्रकारेण स्तुतित्वं- न तु वस्तुतो विद्यमानगुणवर्णनरूपत्वात्- तेषु वर्णनीयश्लाघ्यतमगुणानां कथमप्यलाभात्- तस्यां पराः प्रवणा इत्यर्थः- ये व्याहाराः उक्तयः- "व्याहार उक्तिर्लपित"मित्यमरः- तेषु विषये- या कूहान्धता- कुत्सितः- ऊह उत्प्रेक्षापरपर्यायस्तर्कः- यस्यां सेति बहुव्रीहिः- न तु कुत्सितश्चासा वूहश्चेति कर्मधारयः- "कोः कत्तत्पुरुषेऽची"ति तत्पुरुषे कदन्नमित्यादाविव कोः कदादेशापत्तेः- सा चासावन्धता- तदेकप्रावण्येन वस्त्वन्तरानालोचनमिति यावत्- तया निर्विण्णः निर्वेदं प्राप्तः आशयो मनो यस्य स तथोक्तः- निष्पूर्वकाद्विदेः कर्तरि निष्ठायां "रदाभ्या"मिति नत्वे "निर्विण्णस्योप संख्यान"मिति णत्वम्-

अत्र- "दृप्यन्नरपति मनोरञ्जनस्तुतिः- परव्याहारः परदूषणं- कूहः कुतर्कवादः- त एवान्धता मौढ्यं कार्यकारणयोरभेदेन निर्देश" इति केषांचिद्व्याख्यानं तु रभसात्- केवल व्याहारपदस्यापवादादिशब्दवद्दूषणार्थकत्वस्य क्वापि प्रसिद्ध्यभावात्- कूहः कुतर्क इति कर्मधारये उक्तरीत्या कदादेशापत्तेः- त एवान्धतेति कार्यकारणाभेदकल्पन- क्लेशस्योक्तरीत्या स्वारसिकार्थसंभवे ऽनुचितत्वाच्च- व्याहारकूपान्धतेति पाश्चात्यकल्पित पाठोऽप्युपेक्षणीयः- अनुप्रासभंगादर्थस्वारस्यभंगाद्यथोक्तपाठस्यैव सार्वलौकिकत्वाच्च- एषः-गुणवर्णनाभिमुख्यात्स्वस्यात्यन्तलक्ष्मीसामीप्यमभिप्रेत्यैष इत्युक्तिः- "समीपतर वृत्तिचैतदो रूप"मित्युक्तेः। वेंकट इति कविर्वेङ्कटकविः। न हीदृशोऽन्यः कश्चिदस्तीति साभिनयं निर्देशः। वेङ्कटकविरिति नाम निर्दिशतोऽयं भावः- एतावन्तं कालमयं शब्दो मयि रूढ एवासीदव्यस्त इवाश्वकर्णशब्दः- इदानीं तु सकलदुरितनिरसनलब्धवर्णभवद्गुण

सुधासोदर्यात्वेन सद्योविकसितमकरन्दनिर्भरारविन्दवासिनीत्वेन च प्रथिताया इति भावः- गुणानां कतिपयानामेव न तु कृत्स्नानां-वर्णनानि यथा कथंचित्प्रशंसनान्येव-न तु सर्वप्रकारेण-तेषां चतुर्मुखादेरपि दुष्करत्वादित्यभिप्रायोऽत्र ध्येयः।अन्यथा पूर्वश्लोकोपपादितं चापलं विरुध्येत- तैरेवामृतरसैः- चिञ्चायास्तिं त्रिण्याः- "प्लक्षस्तु तिंत्रिणी चिञ्चे"त्यमरः- पर्णानि पत्राणि- न तु फलानि शलाटुकाः कुसुमानि किसलयानि वा- तेषु चेल्लभ्येतास्वादः कश्चिदिति भावः- तेषां रसैः केवलैराम्लैः कषायैः- न तु लवणक्षारादि मिश्रणेन क्वाथितैरपि वा-तथा सति वा यः कश्चिदुदियाद्रस इति भावः-अवसन्ना अवसादं प्राप्ता-रसना-यस्य स तथोक्तः-अव पूर्वकात्सीदतेः कर्तरि निष्ठानत्वं च-कदर्थित जिह्व इत्यर्थः-कर्तरि निष्ठयाऽवसादस्य प्रयत्नान्तरानपेक्षत्वं व्यज्यते। अवसन्नरसन इत्युक्त्या विजातीयरसास्वादा-व्यवधानेन केवल चिञ्चापर्णरसस्यैवानारतास्वादितत्वं द्योत्यते। पुण्ड्रा इतीक्षवः- मधुरतम रस विशेषाः केचन रसालाः-"रसाल इक्षुस्तद्भेदाः पुण्ड्रकान्तारकादय" इत्यमरः-तेषां सारैः स्थिरांशैः रसैरिति यावत्- आनन्दितुं संतोष्टुं- जृम्भते। यथेष्टं प्रवर्तत इति यावत्- वेंकटकविरिति स्वस्यैव पारोक्ष्यनिर्देशेन जृभिधातुना प्रथमपुरुषेण च कवेर्निरवधिकं व्यज्यते पारवश्यं- अत्र कवेस्स्वनामख्यापनं च "जयत्यतिबलो राम" इत्युपक्रम्य-"हनूमाञ्शत्रुसैन्यानां निहंते"ति हनूमत इव कैंकर्यप्रवृत्तिजनितानन्देनेति ध्येयम्। न चा"त्मनाम गुरोर्नाम नामाति- कृपणस्य च। श्रेयस्कामो न गृह्णीयात् ज्येष्ठापत्यकळत्रयो"रिति निषेधादात्मनामग्रहणम् अयुक्तमिति वाच्यम्। "असौ नामाऽहमस्मीति स्वं नाम परिकीर्तये"दित्यभिवादन विषय इव "स्वनामकीर्तयेत्काव्ये कविः काव्यविचक्षण" इति काव्यविषयेपि नामग्रहण विधानेन तदवश्यंभावात्- अत एव "वाल्मीकिर्भगवानृषिः- चकार चरितं कृत्स्नं" "निस्संदेह निजापकर्ष विषयोत्कर्षोऽपि हर्षोदय प्रत्यूढ क्रमभक्तिवैभवभवद्वैयात्यवाचालितः- रंगाधीश पदत्रवर्णनकृतारम्भैर्निगुम्भैर्गिरां नर्मास्वादिषु वेंकटेश्वरकविर्नासीरमासीदती"त्यादौ स्वनामग्रहणं योयुज्यते।

यत्तु - आत्मानमित्यध्याहृत्य - आनन्दितुं आनन्दयितुं संतोषयितुं इत्यन्तर्भावितण्यर्थतया व्याचख्यौ प्रतीच्यः। तत्तु विनाऽनुपपत्तिमीदृशक्लेशाश्रयणस्य अनावश्यकत्वात् अनध्याहारेणैव स्वरसतोऽर्थलाभाच्चोपेक्ष्यम्- अत्र वर्ण्यादीनां

समासभेदाश्रयणेनेत्यनेकधा प्रपञ्चितं चित्रमीमांसायाम्। वस्तुतो भिन्नयोरप्युपमानोपमेय धर्मयोः परस्परसादृश्यादभिन्नतयाऽध्यवसितयोः पृथगुपादानं बिम्बप्रतिबिम्बभाव इत्यालंकारिकाणां समयः - दण्डी त्वेतादृशीमुपमामेकेवशब्दा वाक्यार्थोपमेति व्यवाहार्षीत्- तथा च काव्यादर्शे "वाक्यार्थेनैव वाक्यार्थः कोपि यत्रोपमीयते। एकानेकेवशब्दत्वात् सा वाक्योर्थोपमा स्मृता॥ "त्वदाननमधीराक्षमाविर्दशनदीधिति। भ्रमद्भृंगमिवालक्ष्यकेसरं भाति पङ्कज"मिति। शार्दूल विक्रीडितम्॥15॥

मू. नाहं जाने नवरसगतिं नार्थमक्षुण्णमन्यै
र्नालंकारानपि न च वचो गुम्भगम्भीरिमाणम्।
स्तोतुं मातस्तदपि भवतीं त्यक्तलज्जो यतेऽहं
मन्तुं किंतु प्रथितकरुणा क्षन्तुमर्हस्यमुं त्वम्॥ **16**

नन्वेवं यदि भजेस्स्वकृत्या स्वयमेवानन्दमुन्मत्तवत्, भजस्व तावत्। यदि स्तौषि गुणान्यस्य कस्यचिन्न मे स्यात् क्षतिः काचित्।अपितु प्रवृत्तोपि गुणानेव मम स्तोतुं-गुणानामपि मम स्यात्कदाचिद्दोषत्वमनुषंगेण त्वत्कवनदोषाणामिति बिभेमि- अत आरभस्व निर्दोष काव्यकल्पनसामग्रीसंपादनेन स्तोतुम्- हृष्येयं ततोऽहमपीत्यत्राभावेपि तादृशसामग्री-सामान्यस्य चौर्येणान्य कविक्षुण्णरसगत्यादेः प्रवृत्तोऽस्मि स्तोतुं- अथापि ममापराधः क्षन्तव्य इति प्रार्थयते। नेति। अहं- स्वस्यासमीक्ष्यकारितां व्यञ्जयितुमहमित्युक्तिः- नवानां इतरकविभिरक्षुण्णानां रसानां "शृंगार वीर करुणाद्भुत हास्य भयानकाः बीभत्सरौद्रे च रसा" इत्युक्तानां रसानां- रसशब्दोऽत्र भावादीनामुपलक्षकः- यद्वा- नवविधाश्च ते रसाश्चेति मध्यमपदलोपी समासः- तेषां शान्तरससाहित्येन रसानां नवत्वम्। गतिं- प्राधान्येन वा गुणीभूतत्वेन वा अभिव्यञ्जन प्रकारं-उत्तरवाक्यस्थमन्यैरक्षुण्णमिति पदद्वयं तत उत्तरवाक्ययोः अत्रापि च - यथासंभवं लिंगवचनपरिणामेन योज्यम्- न जाने-न वेद्मि- एतेन "वाच्यातिशायि व्यंग्यं यदुत्तमं तद्ध्वनिश्च स" इत्युक्तरसादि व्यंग्यप्रधानोत्तमकाव्यस्य वा "काव्यं तु मध्यमं व्यङ्ग्ये वाच्यादनतिशायिनि- एतदेव गुणीभूतव्यङ्ग्यमित्युच्यते बुधै"रित्युक्तलक्षण गुणीभूतव्यङ्ग्यरूपमध्यमकाव्यस्य वा कल्पना दूरतो निरस्तेति सूचितम्- रसाद्यभिव्यञ्जन स्वरूपस्यैवापरिज्ञानात्- तत्र हेतुमाह। नार्थमिति। अन्यैः महाकविभिः- अक्षुण्णं अचर्चितं- अर्थं वाच्य लक्ष्य व्यङ्ग्य भेदभिदुरमर्थजातं- जाने इत्येतत्सर्वत्रान्वेति।

सामग्र्यपि वा किमस्तीत्यत्राह। नालंकारानिति। अन्यैरक्षुण्णान्- अलंकारान् अनुप्रासोपमादीन शब्दालंकारानपि- न जाने- एतेनाधमकाव्यकल्पनयोग्यतापि नास्तीति सूचितम्। एवमुक्तविधकाव्यकल्पन सामग्र्यभावेपि शय्या पाकादि सुन्दरकतिपय पदगुम्भनं वा किं जानीषे - इत्यत्राह। न चेति। वचसां पदात्मकानामिति यावत्। गुम्भस्य ग्रथनस्य गम्भीरिमाणं गाम्भीर्यं च - इतराक्षुण्णं न जाने। पृथ्वादित्वादिमनिच्। यद्वा। नालंकारानित्यनेनार्थालंकारापरिज्ञानं- "न च वचो गुम्भगम्भीरिमाण"मित्यनेन शब्दालंकारा परिज्ञानं च विवक्षितम्- वाक्यद्वयेनाप्यधमकाव्यकल्पनायोग्यताभाव एव सूचित इति ध्येयम्। न च माता मे वन्ध्येतिवद्वदतो व्याघातः - अस्मिन्नेव वाक्यजातेऽलंकारादि सद्भावस्य स्फुटत्वादिति वाच्यम्- विनयप्रकाशनपरत्वेनादोषात्- एवं स्वस्यापूर्वकाव्यकल्पनानुकूल सामग्र्यभावोक्त्या चौर्यमन्तरा स्तुतिकर्तृता न संभवतीति द्योतितम्। अत्र नञामावृत्तिः प्रत्येकं सर्वथा स्वस्याज्ञतमत्वसूचनार्था।

यद्येवं सर्वथा मूढोऽपि स्तौषि तदा "वर्णनामुद्भवः पश्चाद्व्यक्तिस्संख्या ततः पर"मित्यारभ्य- "एतत्सर्वमविज्ञाय यदि पद्यं वदेत्कविः- केतकारूढ कपिवद्भवेत्कण्टक- पीडित" इत्युक्तरीत्या दोषज्ञ विचारसंघर्षाक्षमतया व्यग्रीभावेः- ततोऽपि वरं "विभूषणं मौनमपण्डिताना"मित्युक्तरीत्या जोषं भाव एवेत्यत्राह॥ स्तोतुमित्यादिना॥ तदपि तथापि- एवमज्ञतमत्वेऽपि- हे मातः- न हि माता तनयेष्वज्ञेष्वपि दोषान्पश्यतीति भावः- यदुच्यते "न सहेत तथा भ्राता तनयो वा पिताऽपि वा। यथा सहेत जननी सर्वं जन्तोर्विचेष्टित"मिति। भवतीं- न त्वन्यान् येनोक्तदोषज्ञविचारसंघर्षपदं स्यामिति भावः- यथोच्यते। "मातुरग्रे शिशुस्स्वैरमपि जल्पन्ननक्षरम्। नापराध्यति यत्तस्यास्तदुक्तिः अमृतायत" इति- स्तोतुं- इतर कविक्षुण्णसंदर्भ चौर्येणैव- न तु प्रतिभादि वैभवेनेति भावः- यते- यत्नं करोमि- एवं चौर्येण स्तुतौ प्रवृत्तं मां किं जानीयास्त्वमित्यनालोच्य साहसं करोमीति भावः- एवं स्तेयेन स्तोतुं किं नोदियाल्लज्जेत्यत्राह। त्यक्तलज्ज इति। त्यक्तेत्यनेन त्यागस्य बुद्धिपूर्वकत्वं व्यज्यते - तेन पुनरपि लज्जोदयानवकाश इति भावः- तेन च "लज्जामेकां यो जहाति किमकार्यं जहाति सः"- "किं किं न करोति निर्लज्ज" इति चोक्तरीत्या- ईदृशः किं किं न कुर्यामहमिति व्यज्यते। अहं- पूर्वार्थस्थेनाहमित्यनेनैव सिद्धौ पुनरप्यहमित्युक्तिः मदन्यः क एवं त्यक्तलज्जस्स्वशक्तिमपर्यालोच्य यतेतेति स्वस्यात्यन्तासमीक्ष्यकारिता व्यञ्जनार्था- एवं चेत् "लोकयात्रा भयं लज्जा दाक्षिण्यं धर्मशीलता। पञ्च यत्र न विद्यन्ते न कुर्यात्तेन संगत"मित्युक्त [illegible]

साहसमात्रादेव-प्रत्युत दण्डनीय एव साहसिकस्त्वं ममापि- यत्स्मर्यते "नोपेक्षेत क्षणमपि राजा साहसिकं नर"मिति। आख्यायते च "प्राप्तकालं च ते दण्डं धारयेयुस्सुतेष्वपी" त्यत्राह। मन्तुमित्यादिना। किं तु- न ह्येवंविधयतनलक्षणसाहसवेदनमात्रमेव। अपि तु प्रार्थनाप्यस्तीति भावः- प्रथिता "करुणार्द्रा नतमुखी"त्यादिना प्रख्याता- करुणा कृपा यस्यास्सा तथोक्ता- प्रथितेत्यनेन ईदृशे साहसिके मय्यनादरेण त्वयाऽपि प्रसिद्धा त्वत्कृपा नापलपितुं शक्येति व्यज्यते- त्वं "पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम। कार्यं करुणमार्येण न कश्चिन्नापराध्यती" वादिनीति भावः- त्वमित्यनेन न हि त्वदन्या काचिदेवं प्रख्यात करुणाऽस्ति देवता- या हि "किमेवं निर्दोषः क इह जगतीति त्वमुचितैरुपायैर्विस्मार्य स्वजनयसि माता तदसि न" इत्युक्तरीत्या भगवतोऽप्याश्रितदोषान्विस्मारयसि- सा किं स्वयं भक्तदोषान्न क्षमेथा इत्ययमभिप्रायो व्यज्यते-दण्डनस्मृतिस्तु निष्करुण विषयेति भावः-अमुं-मन्तुमपराधं-"आगोऽपराधो मन्तुश्चे"त्यमरः-अमुमित्यनेन त्वत्कृपाया अयमपराध-स्स्वत एव विप्रकृष्टः- क्षमापणं[1] तु पुनरुक्तमेवेति व्यज्यते। तथा चोच्यते "अदसस्तु विप्रकृष्ट"मिति। क्षन्तुं अर्हसि- योग्या भवसि- न हि निष्करुणाः क्षन्तुमर्हन्तीति भावः-क्षन्तुमर्हसीत्यनेन न हि मम निर्बन्धेन क्षमसे- किं तु स्वरूपत एव त्वं योग्यासि क्षन्तुमतो ज्ञापनमात्रमेवेदमिति व्यज्यते। यद्वा-अहं त्यक्तलज्ज एव यते-किं तु त्वं प्रथितकरुणा-अतः अमुं मन्तुं क्षन्तुमर्हसीति योज्यम्। "कृतापराधस्य हि ते नान्यत्पश्याम्यहं क्षमम्। अन्तरेणाञ्जलिं बध्वा लक्ष्मणस्य प्रसादना"दित्युक्तरीत्या कृतागसो मम त्वत्प्रसादनमन्तरेण न किंचिदस्ति शरणमिति भावः- अत्र "यच्चापराधं कृतवानज्ञानात्पुरुषोत्तम। मद्भक्त इति देवेश तत्सर्वं क्षन्तुमर्हसी" त्यादिकमप्यनुसंधेयम्।

अत्र त्यक्तलज्ज इति विशेषणस्य स्तुतियतनाभिप्रायगर्भत्वादेकः परिकरालंकारः-प्रथितकरुणेति विशेषणस्यापराधक्षमार्हताभिप्रायगर्भत्वादन्यः परिकरालंकार पूर्वपरिकर-सापेक्ष इत्यनयोस्संकरः- "अलंकारः परिकरस्साभिप्राये विशेषण" इति तल्लक्षणम्। किं च कवेर्नवरसगत्यादि ज्ञानसंबन्धेऽपि तदसंबन्धोक्तेः असंबन्धातिशयोक्तिः- "योगेऽप्ययोगोऽसंबन्धातिशयोक्तिरितीर्यत" इति लक्षणात्। एवं विनापि कारणसामग्रीं काव्यकल्पन-यत्नरूपकार्योदयाद्विभावनालंकारः- "विभावना विनापि स्यात्कारणं कार्यजन्म चे"दिति लक्षणात्। सा चोक्तातिशयोक्ति प्राथमिक परिकराभ्यामङ्गाभ्यां संकीर्यते। क्षन्तुमर्हसीति प्रार्थनस्य पूर्वविशिष्टवाक्यार्थेन समर्थनात् काव्यलिङ्गं द्वितीयपरिकरोत्तम्भितम्- सर्वेषामेषां

मुनिना शान्तस्थायिन [illegible]
श्लाघ्यत्वात्-अथवाऽन्तर्भावात्-यद्वा पुरुषार्थाभावात्। नाद्यः। स्थायिव्यभिचारिमध्यपाठात् विद्यमानेष्वपि व्यभिचारिषु हर्षौत्सुक्यादिषु मङ्गळतमेषु निर्वेदस्यामङ्गळप्रायत्वेन प्रथममनुपादेयत्वेप्युपादानाच्च तस्योभयरूपताया मुनेरभिसंहितत्वेन ज्ञायमानत्वात्- तदुक्तं धर्मसूरिणा ॥ ''न स्थायिव्यभिचारिते यदि पुनश्चित्ते मुनेस्सम्मते निर्वेदस्य निरूप्य तान्प्रतिमूखानष्टावपि स्थायिनः- तेषूद्देश्यतया स्थितेषु बहुशो भावेषु संचारिणां नित्यामङ्गळमुद्दिशेत्कथमसौ निर्वेदमेवादित'' इति। काव्यप्रकाशेऽप्युक्तम्। निर्वेदस्यामङ्गळप्रायस्य प्रथमम् अनुपादेयत्वेऽप्युपादानं व्यभिचारित्वेऽपि स्थायित्वाभिधानार्थम्- तेन निर्वेदस्थायिभावः शान्तोऽपि नवमोऽस्ति रस'' इति- उक्तं च ध्वन्याचार्यैः। ''तृष्णाक्षयसुखस्य यः परिपोषस्तल्लक्षणो रसः प्रतीयत एवे''ति - एतद्व्याख्यानव्याजेन लोचनेऽप्युक्तम्। ''तृष्णानां विषयाभिलाषाणां सिद्धो यः क्षयस्सर्वतो निवृत्तिरूपो निर्वेदस्स एव सुखं-तस्य स्थायिभूतस्य यः परिपोषस्तस्य चर्व्यमाणताकृतस्स एव लक्षणं यस्य स शान्तो रसः प्रतीयत एवे''ति। न च निर्वेदस्तृष्णाक्षयात्मा शमपर्यायो न सुखरूप इति शङ्कनीयम्- तस्यापि महाभारते सुखरूपतोक्तेः-तथा च मोक्षधर्मेषु। ''यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्। तृष्णाक्षयसुखस्यैते नार्हतष्षोडशीं कला''मिति- केचित्तु सर्वचित्तवृत्ति प्रविलयरूपशम एवात्र स्थायी-अत एव ''जुगुप्सा विस्मय शमास्स्थायिभावाः प्रकीर्तिता''इतत्युद्भटेनाप्युक्तम् इत्याहुः। कहोळस्तू''त्साहो वा निर्वेदो वा शमो वाऽस्य स्थायी''त्याह। केचिज्जुगुप्सां स्थायिनमाहुः। तत्र निर्वेदशमान्यतरस्य स्थायित्वं तावदभ्युपगतमेव। वीर बीभत्सस्थायित्वेन नियतयोरुत्साहजुगुप्सयोस्तु शान्तस्थायित्वमयुक्तम्। रसानां प्रति नियतस्थायिकत्व नियमात्।

ननु निर्वेदस्य सूत्रकारैः कण्ठतोऽनुपात्तस्य साहसं स्थायिताकल्पनमिति चेन्मैवम्- सूत्रकृतां सर्वेषामेवेयं हि शैली- यद्यत्नेन किंचित्सूचयन्तीति- यथा कणादो रूपादीन् कतिचिद्गुणान्कण्ठतो निरूप्य पश्चात् चशब्देन सप्तद्गुरुत्वादीनसूसुचत्। तद्वदिहापीति ध्येयम्। न द्वितीयः वैराग्यादिसामग्र्यास्सुलभत्वात्- तथाचेक्तं लोचने। ''वैराग्य, परमेश्वरानुग्रह, प्राचीनकौशलपरिपाक, सत्पुरुषसेवा,वेदान्तविचारादयो विभावाः-यमनियमादयोऽनुभावाः-राज्यधुरोद्वहनादयोऽपि शान्तस्य जनकादेरनुभावाः- मति स्मृति चिन्ताधृतिवितर्कादयो व्यभिचारिण'' इति। न तृतीयः। रागद्वेष कलुषितान्तःकरणानामचर्वणीयत्वेनाश्लाघ्यत्वेऽपि वीतरागाणां तदभावात्- यदि कतिपयाश्लाघ्यत्वमात्रेण रसात्प्रच्यवेत- तर्ह्यश्लाघ्यो वीतरागाणामिति शृङ्गारोऽपि कुतो नाम न प्रच्यवताम्। न चतर्थः। न तावच्छृङ्गारादावन्तर्भावः

वैजात्यात्- तर्हि दयावीरेऽन्तर्भवतीति चेन्न। तस्याप्येवंविधत्वे शान्तस्यैव नामान्तरकरणम्। अनेवंविधत्वे वीरप्रभेद एवेति। एवमप्यन्तर्भावाङ्गीकारे सर्वत्रैकरस्यप्रसङ्गः। नापि पञ्चमः। मोक्षलक्षणस्य परमपुरुषार्थस्यैतदेकसाध्यत्वात्। तदुक्तं भावप्रकाशे "सर्वप्रकारैस्संपूर्ण कामस्संतुष्टमानसः। प्राप्नोति मुक्तिं चरमे शान्तेनैव रसेन स" इति। लोचनेऽप्युक्तम्। मोक्षफलत्वेन चायं परमपुरुषार्थनिघ्नत्वात्सर्वरसेभ्यः प्रधानतमस्स चायं शान्तरस इति। "तस्मादेवं विच्छान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वाऽत्मन्येवात्मानं पश्येत्- नाविरतो दुश्चरितान्नाशान्तो नासमाहितः। नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुया"दित्यन्वय व्यतिरेकाभ्यां शान्तेर्ब्रह्मप्राप्तिसाधनत्व श्रवणमप्युक्तार्थ एवानुकूलम्। नन्वेवमपि "न यत्र दुःखं न सुखं न द्वेषरागौ न च काचिदिच्छा।रसस्स शान्तःकथितो रसज्ञै"रित्युक्ततया समस्त व्यापार प्रविलयलक्षणस्य तस्याभिनेतुमशक्यत्वादभिनयप्रधानेषु नाट्यप्रबन्धेषु कथमुपयोग इति चेदत्र धर्मसूरिः "न हि वयं नाट्यप्रबन्धेष्वपि शान्तरसप्रचारमाद्रियामहे। किंतु वर्णनात्मक काव्यभेदेष्वेव। "अत एवाष्टौ नाट्ये रसा स्मृता" इति काव्यप्रकाशिकाकारः। भरतमुनिना तदसंकीर्तनं तु नाभावाभिप्रायेण- किंतु न सार्वत्रिकलोकयात्रोपयोगितेत्यभिसंधिने"ति। दर्पणकारस्तु - तत्रापि वनप्रवेशविविक्तदेशसेवितादेस्तदभिव्यञ्जकस्याभिनययोग्यतया नाट्यरसत्वमपि तस्याविरुद्धमित्यन्ये" इत्युक्तवान्। अत एव "ललितमनसां प्रीत्यै बिभ्रत् रसान्तरभूमिकामनवमगुणो यस्मिन्नाट्ये रसो नवमःस्थितिः। जननपदवीजङ्घालार्तिच्छिदानु-गुणीभवन्नटपरिषदा तेनास्वादं सतामुपचिन्वितीति" श्रीमत्संकल्पसूर्योदये आचार्यैरनुगृहीतं च योयुज्यते। तस्मादस्ति नवमश्शान्तो रस इति स्थितम्।

ननु पित्रादेः पुत्रादौ प्रीतिस्थायिको वत्सलो नाम रसस्सर्वसाक्षिकः- मित्रादिष्वार्द्रता-स्थायिकस्स्नेहोपि रसः- सेवकानां सेव्यगुरुदेवतादिगोचरस्तात्पर्यस्थायिको भक्तिनामा रसोऽप्यस्तीति केचित् ब्रुवते - तत्कथं रसानां नवत्वोक्तिरिति चेदुच्यते। रतिर्हि कामिनीविषया विभावादिसमुल्लसिता शृंगाररसतामापद्यते। सैव चेद्देवतागुरुनृपपुत्रमित्र विषया- तदा भवति भावशब्दभागिनीत्येवं व्यवस्थापिते, वत्सलस्नेहभक्तयोऽपि रतिभावान्तर्भूता विषयभेदमात्रेण भेदव्यपदेशात् न रसभूमिकाविन्यासेन रसनवत्वोक्ति-विघटनाय घटेरन्। एवमेवाभिधायाह काव्यप्रकाशकृत्। "रतिर्देवादिविषया व्यभिचारी तथाऽञ्जितः। भावः प्रोक्त" इति। अञ्जितो व्यञ्जित इत्यर्थः। तस्मान्नैव रसा इति सुस्थम्।

सदिक्षदिभ्यस्त्र'' इति वचेः औणादिक स्त्र प्रत्ययः। न स्म इति लटा- इतः परं यदि कदाचिद्यादृच्छिकादि सुकृतपरिपाकवशेन स्यात्तादृशं जन्म तदा कथंचन प्रभवेम स्तोतुम्। न तु कथं चिदपीदानीमिति व्यज्यते। आसन्निति भूत निर्देशेन- इतःपूर्वं नैवासन्निदानीं किं चिन्तया? यदि कदाचिदेतदपि संभवेदुक्तरीत्या- तदा शक्त्यशक्ती पर्यालोचयेमेत्ययमर्थोऽभि व्यज्यते - न सर्वज्ञकुमारः स्कन्दः - सर्वज्ञनामा गिरीशो वा- तत्पिता वाणीपतिर्वा ना समितिभावः- अत्र ''ब्रह्माद्यास्सकला देवा मुनयश्च तपोधनाः। त्वां स्तोतुमपि नेशाना'' इत्युक्तरीत्या देवेषु स्तोतृत्वेऽभ्यर्हिततमत्वेन प्रथमं ब्रह्मणः- ततस्तत्पुत्रस्य ततस्तत्पौत्रस्य- मुनिषु च संभाव्यकवनशक्तिभ्यां पतञ्जलि गौतमाभ्यामपि प्रख्यात कवनशक्तेः प्राचेतसस्यैव प्रथमं- ततश्च ''शब्दार्थौ मूर्तिराख्याता''वित्युक्तरीत्या काव्यशरीरभूतयोश्शब्दार्थयोर्मध्ये- अर्थ शब्दस्याजाद्यदन्तत्वेन पूर्वप्रयोज्यत्वावश्यं भावेऽपि तदकरणेन शब्दशब्दस्यैव पूर्वनिपातनाच्छब्दस्यैव काव्यव्यवहारेऽभ्यर्हितत्वस्य ज्ञापितत्वेन तादृशशब्दानुशासन प्रथमाचार्यस्य पतञ्जलेः- ततश्चार्थशास्त्रप्रवर्तकस्य गौतमस्य च यथाक्रममुपादातुम् उचितत्वेऽपि तद्वैपरीत्येनोपादानं तु वक्ष्यमाणालंकारलोभात्। स्तुतिरचनाभ्यर्हितत्वे पूर्वं पूर्वं मुखाधिक्यस्यैव विवक्षितत्वाच्च।

यद्वा- भूमविद्यान्यायेनोत्तरोत्तरस्यैवोत्कर्षातिशय विवक्षयेति ध्येयम्। एवमधिकार- वैधुर्येऽपि- तव- चतुर्मुखादेरपि स्तोतुमशक्यैकैकगुणाया इति भावः- गुणानां सौशील्यवात्सल्यादीनां- ओघं बृन्दं- ''स्तोमौघनिकरव्रातवार संघात संचया'' इत्यमरः। नत्वेकं द्वित्रान्वेति भावः- स्तोष्यतः वर्णयिष्यतः- ''लृटस्सद्वे''ति शता- स्तोतुमिच्छत इति पाश्चात्यव्याख्यानं तु प्रामादिकम्। अस्य सन्नन्तप्रकृतिकत्वाभावात्- तथा सति तुष्टूषत इति स्यात्- अस्मान्- असमीक्ष्यकारिण इति भावः। जनः-परीक्षकस्तावदास्तां पामरोऽपीति भावः- ''जनो लोके महर्लोकात्परलोकेऽपि पामरे''इति मेदिनी। कस्माद्धेतोः न हसतु न परिहसतु-प्राप्तकाले लोट्- स्फुटतमे हेतु पौष्कल्ये कस्मात् वृथैव जोषं भावं वहेदिति भावः- अत्र हसतेः परिहासार्थकत्वेन सकर्मकत्वम्-यथा-''फलद्भिरुष्णांशुकरावमर्शात्काशार्नवं धामपतङ्गकान्तै''रित्यत्र फलधातोरुद्गिरणार्थकत्वेन सकर्मकत्वम्-अत एव ''दशाननादीन- भिराद्धदेवतावितीर्णवीर्यातिशयान् हसत्यसौ''। इति माघप्रयोगः-''जहासेव वासुदे''वमिति भट्टबाणप्रयोगश्च संगच्छते। स्तोष्यत इति लृटा स्तोत्रोद्यमसमय एव परिहासारम्भे- असंबद्धस्तवोपक्रमानंतरं परिहासस्तु सर्वपथीन एवेति किमु वक्तव्यमिति व्यज्यते।

श्रोत्रैरित्यत्र तु प्रयोज्यत्वे सा'' इति व्याख्यानं च न हृदयंगमम्। क्लिष्टत्वात्- चरणकमले इति सप्तम्यंत प्रक्रान्तशैलीत्यागेन- ''प्रक्रान्तशैलीत्यागे तु भग्नप्रक्रम इष्यते'' इत्युक्त भग्नप्रक्रमादिदोषाणां स्पष्टत्वाच्च।

अत्र प्रतिपाद्यमाना अर्थाः- चरणकमले चक्षुष्मन्तो न स्म इत्यादीनि विशेषणानि वाक्यार्थरूपाणि स्वस्मिन् गौतमाद्यसाधारणधर्मवत्त्वाप्रतिषेधमुखेन न वयं गौतमा इत्याद्यभिप्रायगर्भाणीति परिकरालंकाररूपाः- न गौतमादयो वयमिति यदेव गम्यं तस्यैव ''चरणकमले चक्षुष्मन्तो न स्म'' इति भङ्ग्यन्तरेण वर्णनात् पर्यायोक्त्यलंकाररूपाश्च- ''पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रय''मिति लक्षणात्। तयोश्चैकवाचकानुप्रवेश-संकरः। अभिन्नपदबोध्यनानालंकारघटितत्वात्। न च सर्वत्र परिकरस्थले गम्यस्यार्थस्य भङ्ग्यन्तरेण वर्णनरूपत्वमवर्जनीयमित्यनयोर्विविक्तविषयलाभो दुर्घट इति शङ्कनीयम्- ''सुधांशुकलितोत्तंस स्तापं हरतु नश्शिवः-सर्वाशुचिनिधानस्ये''त्यादौ पर्यायोक्तौ संस्पृष्ट-परिकरस्य ''नमस्तस्मै कृतौ येन मुधा राहुवधूकुचौ''-''पादौ कियद्दूरमिमौ प्रयासे निधित्सते तुच्छदयं मनस्ते'' इत्यादौ परिकरासंसृष्टपर्यायोक्तस्य च विविक्ततया विषयलाभात्। तयोश्चेहार्थवश समापन्न समावेशयोर्नाङ्गाङ्गिभावसंकरः। एक मुखप्रेक्षित्वाभावादपरस्य-स्वातन्त्र्यपारतन्त्र्यविशेषादर्शनाच्च- नापि समप्राधान्यं- यैरेव शब्दैरिह परिकरः प्रतिपाद्यते तैरेव पर्यायोक्तेरपि प्रतिपाद्यमानत्वेन भिन्नप्रतिपादक शब्दव्यवस्थितार्थभेदाभावात्- भिन्नशब्द प्रतिपाद्यार्थभेदे ह्याग्नेयादीनामिव प्राधान्य संभवः- न ह्यत्र भिन्नशब्दाभ्यामलंकार-द्वयप्रतीतिरस्ति-येन समप्राधान्यं संभवेत्-इदं च दीक्षितमतानुरोधेन-प्राचां मते तु समप्राधान्यसंकरस्यैवानभ्युपगमान्नोपपादितशङ्का समाधानयोरवकाशः-अत एव रसिक-रञ्जनीकारोऽप्येकवाचकानुप्रवेश संकर निरूपणावसरे-''अत्रेदं चिन्त्यम्- समप्राधान्य-संकरमभ्युपगच्छतो भिन्नशब्दव्यवस्थितार्थभेदस्समप्रधान प्रयोजकः-आग्नेयादावुत्पत्ति विधिभेदसत्त्वेऽपि-'सप्तदश प्राजापत्त्यान्पशूनालभेत'इत्यादौ विधिभेदाभावेपि समप्राधान्य व्यवस्थितेः-तद्वदत्रापि प्रतिपादक शब्दभेदाभावेऽपि प्राधान्य संभवादितोऽपि न समप्राधान्य-संकरसंभवः-एकवाचकानुप्रवेशसंकरस्य निर्विषयतापत्तेः। तत्रानुप्रविष्टयोरलंकारयोरेक जातीयचमत्कारप्रयोजकतया समप्राधान्यस्यैवोपपत्तेः'' इत्यभाणीत्।

नापि संदेह संकरः- एकालंकारकोट्यां तदन्यालंकारकोटि प्रतिक्षेपाभावात्।

संसृष्टिरित्यन्योऽपि विच्छित्तिविशेषः- तत्र च प्राथमिक परिकर पर्यायोक्त त्रिकयोर्माला दीपकस्यानुप्रासस्य चैकवाचकानुप्रवेशसंकर इत्यपरोऽपि विशेषः- एवं स्वस्य गौतमत्वादि निषेधरूपवाक्यार्थेन स्तोष्यत स्स्वस्यापहसनावश्यंभाववर्णनरूपवाक्यार्थस्य समर्थनात्काव्य-लिंगभेद इत्येतस्य चोक्तालंकारैस्सहैकवाचकानुप्रवेशसंकर इतीतरोपि विशेषः- चरणकमले-इत्यत्र समासभेदाश्रयणेन धर्मवाचकलुप्तोपमानिरवयवरूपकयोः उभयोरपि संभवेनैकत्रैव कविसंरम्भस्य नियन्त्रयितुम् अशक्यतया तयोश्च संदेहसंकरः- स चायं प्राथमिकपरिकर-पर्यायोक्ताभ्यां चकारपुनरुक्तिलक्षणवृत्त्यनुप्रासेन च सहैकवाचकानुप्रविष्ट इत्यपरोऽपि संकर इति सावधानं विभावनीयम्। नन्वत्र किमिति मालादीपकानामलंकारान्तरत्वमभ्युपेत्यम्-दीपकोज्जीवितत्वादेकावळ्यास्तयोस्संकरत्वेनाप्युपपत्तेः- अन्यथाऽलंकारान्तरसंकरस्यापि संकरबहिर्भावापत्तेरिति चेन्न- वस्तुत इह दीपकालंकारसंभवात्। मालादीपकोदाहरणेषु "संग्रामाङ्गणसङ्गतेन भवता चापे समारोपिते देवाकर्णय येन येन सहसा यद्यत्समासादितम्। कोदण्डेनशराश्शरैररि शिरस्तेनापि भूमण्डलं तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयी"त्यत्र कोदण्डादीनां सर्वेषामपि प्रस्तुतत्वेन प्रस्तुताप्रस्तुतैकधर्मान्वय-रूपदीपकस्यात्र प्रसरायोगात्। न चास्तु प्रस्तुतैकरूप धर्मान्वयात्तुल्ययोगितेति वाच्यम्। तथात्वे उक्तरीत्या संकरापत्तेः।

वस्तुतस्तु नात्रलंकारान्तरसंकरवत्संकरमात्रकृतो विच्छित्तिविशेषः- नियतदीप-कैकावळीयोगविच्छित्ति विशेषस्यालंकारन्तरेणैव निर्वाह्यात्वात्- दीपकत्व- व्यवहारश्चास्य तच्छायानुसारित्वमात्रादेवेत्यवोचाम। दण्डी त्विममपि दीपकावान्तर- विशेषत्वेनैव व्यवजहार। तथा च दीपकप्रकरणे काव्यादर्शे- "शुक्लश्श्वेतार्चिषो वृद्ध्यै पक्षः पञ्चशरस्य सः। स च रागस्य रागोऽपि यूनां रत्युत्सवश्रियः। इत्यादि दीपकत्वेऽपि पूर्वपूर्वव्यपेक्षिणी। वाक्यमाला प्रयुक्तेति तन्मालादीपकं मत"मिति। रुद्रटस्तु दीपकत्वेनैवामुं व्यवाहार्षीत्। तथा च काव्यालंकारे। "यत्रैकमनेकेषां वाक्यार्थानां क्रियापदं भवति। तद्वत्कारकपदमपि तदेतदिति दीपकं द्वेधे"ति दीपकं लक्षयित्वा "कान्ता ददाति मदनं मदनस्संताप मसममनुपशमम्। संतापो मरणमहो तथापि शरणं नृणां नैवे"त्याद्युदाहृतवान्। किंचैतन्मतेऽत्र स्म इति क्रियापदस्यैकस्यैवानेक वाक्यार्थान्वयात्क्रियादीपकमित्युच्यते। तथा च काव्यादर्शे। "जातिक्रियागुणद्रव्य-वाचिनैकत्रवर्तिना। सर्ववाक्योपचारश्चेत्तमाहुर्दीपकं यथे"त्युक्तम्। तत्राप्यन्त्यवाक्यार्थे क्रियापदसद्भावादन्त्यक्रियादीपकमिदं- तथा च काव्यालंकारे "आदौ

तत्क्रियादीपकं कारकदीपकं चेति द्विविधं दीपकमित्यर्थः। वक्त्राण्यासन्निति कारकक्रिययोरादौ विद्यमानयोः वाक्यार्थान्तरेऽप्यन्वयादादि- कारकक्रियादीपकयोस्संकरः। पूर्वोक्त क्रियादीपकस्यास्य च संसृष्टिः- वस्तुतस्त्वत्र पूर्वोक्तरीत्यालंकारान्तरमेव चारुतातिशयहेतुरिति ध्येयम्। किंचैतन्मते उक्तपरिकरविषयेऽप्युक्तानां विशेषणानां द्रव्यविशेष्यकत्वात् इमे द्रव्यपरिकरा इत्युच्यन्ते- तथा च काव्यालंकारे, ''साभिप्रायैस्सम्यग्विशेषणैर्वस्तु यद्विशिष्येत। द्रव्यादिभेदभिन्नं चतुर्विधः परिकरस्स स्या''दितीति दिक्। श्लोकद्वयं मन्दाक्रान्तावृत्तम्। लक्षणं तूक्तम्॥17॥

**मू. अभूमिस्त्वद्भूमा जननि जरतीनामपि गिरा**
**मसौ कस्मादस्मादृशकृशमनीषोक्तिविषयः।**
**अशक्यानामौर्वाग्निभिरपि निपातुं निधिमपा**
**मपारं तं पातुं मशकशिशुकः किं प्रभवति॥ 18**

ननु कस्मात्त्वां परिहसतु जनः ''अहं हि पृष्टोऽर्यमणो भवद्भिराचक्ष आत्मापगमो अत्र यावान्। नभः पतन्त्यात्मसमं पतत्रिणस्तथा समं विष्णुगतिं विपश्चित'' इति श्रीभागवतोक्तरीत्या त्वमपि यथाप्रज्ञं प्रयतस्व स्तोतुम्- वदन्ति हि महान्तोऽपि ''यथा ज्ञानं तु वक्ष्यामि- ब्रह्माद्यास्सकला देवा मुनयश्च तपोधनाः। त्वां स्तोतुमपि नेशानास्त्वत्प्रसादलवं विना- न ते वर्णयितुं शक्ता गुणान् जिह्वाऽपि वेधस'' इत्येव अत्र सनातनगिरामप्यविषयं स्तोतुं त्वन्महिमानं सर्वेऽपि ब्रह्माद्याः कर्मसंकुचितज्ञानतया वयमिवाशक्ता एवेति सर्वेषामप्यैकराश्यमभिप्रेत्याह। अभूमिरिति। हे जननि- अनेन ''यतो वा इमानि भूतानि जायन्त'' इत्युक्तरीत्यास्या जगत्कारणत्वमुक्तम्। तेन च सर्वज्ञत्वसर्वशक्तित्वादय स्तदौपयिकाः कल्याणगुणा आक्षिप्यन्ते- बह्वृचसंहितायां लक्ष्मीसूक्ते ''अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वा। परोदिता पर एना पृथिव्यै तावती महिना संबभूवे''ति कारणत्वादिकं स्फुटतरमेवाभिधीयते। ''अस्येशाना जगतो विष्णुपत्नी''त्यत्र निखिल जगदन्तर्यामित्वरूपव्याप्तिनिमित्तकविष्णुशब्दः- पतिकर्तृककार्यसहाधिकारबोधक पत्नीशब्दप्रयोगश्चात्रोपष्टम्भक एव। ''लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया। रक्षकस्सर्वसिद्धान्ते वेदान्तेषु च गीयते- ''श्रिया सार्धं जगत्पतिः''- ''त्वया च विष्णुना- चाम्ब! जगद्व्याप्तं चराचर''मित्यादिषु जगद्रक्षकत्वजगदन्तर्यामित्वादिकथनमप्यत्रैवान-

मिति। अभूमिः- अविषयः-वदन्ति हि ता एव "यतो वाचो निवर्तन्ते इति-यद्वाचाऽनभ्युदित"मिति च- न च ब्रह्मविषयिका श्रुतिश्श्रीविषये प्रमाणं भवितुमर्हतीति वाच्यम्। व्यासज्यवृत्तिनि कारणत्वे तदनुसारिणीनां सर्वासां श्रुतीनामुभयविषयत्वस्य निरर्गळत्वात्- अत एव ब्रह्मप्रतिपादनस्थले सर्वत्रापि लक्ष्म्या अपि प्रतिपादनं भवतीत्याचार्य श्रीसूक्तिश्च संगच्छते। "अन्योन्येनाविनाभावादन्योन्येन समन्वयात्। मय्ययं देवदेवेश स्तत्राहं च सनातनी"त्यादि लक्ष्मीतंत्रोक्तमप्यत्रानुसंधेयम्। एवं सर्वत्रापि द्रष्टव्यम्। असौ वर्णनीयत्वेन प्रस्तुतः- तव पूर्वोक्तरीत्या जगत्कारणत्वादि वैभवशालिन्या इति भावः- भूमा सर्वजगद्व्यापित्वसर्वेश्वरत्वादिमहिमेत्यर्थः- बहुशब्दात्पृथ्वादित्वादिमनिचि "बहोर्लोपो भू च बहो"रितीमनिजदयवाद्येकारलोपो बहुशब्दस्य भू इत्यादेशश्च- अदश्शब्दश्च श्रुतीनामेवागोचरत्वेनास्माकमतिविप्रकृष्ट इति द्योतनाय। तदुक्तम्। "अदसस्तु विप्रकृष्ट"मिति। कस्माद्धेतोः। वयमिव पश्यतीत्यस्मादृशः- चतुर्मुखादिरऽपीति हृदयम्। कर्मकर्तरि व्युत्पत्तिः- एतच्चासदृशमरुणाब्जदृशमित्यत्र निरूपितमधस्तात्। "त्यदादिषुदृश" इति कञि "दृग्दृशवतुष्विति दीर्घः- यः कृशमनीषः मितप्रज्ञः- केवल कृशशब्देन कार्श्यस्य नैसर्गिकत्वं द्योत्यते। तेन "स्वभावो दुरतिक्रम" इत्युक्तरीत्या पौनःपुन्येन पोषणेऽपि तदपगमो दुर्घट इति व्यज्यते। तस्य- उक्तिः केवलव्याहारः- न तु गुणरसालंकारसुन्दर काव्यलक्षण गम्भीर वाग्गुम्भ इति भावः- तस्याः विषयः गोचरः- भवेदिति शेषः- कस्मादित्यनेन निपुण निरूपणतोपि न पश्यामि तादृशं हेतुमित्युक्तं भवति। अत्र "वक्तुं न शक्यः पद्माया महिमा निगमैरपि। देवासुरमनुष्यैस्तु स कथं नाम शक्यत" इत्यादिकमनुसंधेयम्। अत्र असौकस्मान्मादृक्कृशजडमनीषोक्तिविषय" इति पाश्चात्यपाठः- मादृशः कृशजडमनीषस्येति तद्व्याख्यानं चायुक्तम्। मनीषायां कार्श्यं च जाड्यमेवेति कृशजड शब्दयोरनतिरिक्तार्थकत्वेन पौनरुक्त्यापातादनुप्रास सौन्दर्यभङ्गापत्तेः कवेरनुप्रास जीवातुकत्वाच्च- अस्मादृशशब्दस्य[1] मादृश इति व्याख्यानं च नानुरूपम्। बहुवचनान्तास्मच्छब्दस्यैक-वचनान्तेन तेन विवृते राम्रप्रश्ने कोविदारोत्तरवदसंगतत्वात्- तथा च- "प्रत्ययोत्तरपदयोश्चे" ति सूत्रमस्मच्छब्दस्य मपर्यन्तस्यैकत्व एवानुशास्ति मादेशम्।

उक्तार्थे दृष्टान्तमाह। अशक्यानामिति। अविद्यमानः पारो यस्येति तं तथोक्तम्- दुस्तरमित्यर्थः- तं अगाधतमत्वेन प्रसिद्धमित्यर्थः- और्वाग्निभिर्बाडबाग्निभिरपि "और्वस्तु बाडबो बडबानल" इत्यमरः- यद्यपि बाडबाग्निरेक एवेति प्रथते पुराणेषु- तथापीह

पाठः- तदा पाङ्पान- इत्यस्य रूपम्। निपातुमिति पाठ एव स्वच्छो वृत्त्यनुप्रासादि सौन्दर्याधिक्यात्। अशक्यानां- और्वाग्निभिरपीत्यनेन प्रख्यात जलशोषण प्रभावानां तेषामेव अशक्यत्वे तत्पानमितरेषां दूरतो निरस्तमिति व्यज्यते। अपां अंभसां- निधिं- नितरां धीयन्तेऽस्मिन्निति निधिः- सिन्धुमित्यर्थः- "उपसर्गे घोः कि" रिति किः- निधिशब्देन सर्वस्यां धरण्यां सर्वैर्जलदैरभिवृष्टानां सर्वासामपामयमेवाधार इति सूचितम्- तेन वक्ष्यमाण मशक-शिशुककर्तृकपानाशक्तिरतीवोत्तम्भ्यते। पातुं- निश्शेषत इत्युपस्कार्यम्- मशक शिशुकः- मशक एवातिक्षुल्लकः- तस्य शिशुरित्यनेन ततोऽपि क्षुल्लकतरत्वम्- तत्राप्यल्पार्थक कनाऽतिक्षुल्लकतमत्वं चोक्तम्। एतेनौर्वाग्नीनां तस्य च वाचामगोचरमन्तरमिति द्योतितम्। प्रभवति किं - शक्नोति किं- न शक्नोत्येवेत्यर्थः- यद्वा- किं प्रभवति- केन कारणेन समर्थो भवतीत्यर्थः- अस्य तादृशप्रभवे कश्चिदपि हेतुः कदाऽपि संभवेदित्याशंसापि नोत्पद्यत इति भावः।

अत्र- "अशक्यं नामौर्वाग्निभिरपि निपातुं निधिरपा" मित्यपि पाठो दृश्यते- तदैवं योजना- हे जननि-त्वद्भूमा-जरतीनां गिरामप्यभूमिरित्येकं वाक्यम्-असौ एवं तासामप्यगोचर स्त्वद्भूमा- कस्मादस्मादृशमनीषोक्तिविषयः इत्यन्यद्वाक्यं- एवमुत्तरार्थेऽपि वाक्यद्वयम्- अपांनिधिस्समुद्रः- और्वाग्निभिरपि निपातुं- अशक्यं नाम- अशक्यं खलु "शक्यं चानेन श्वमांसादिभिरपि क्षुदुपहन्तुम्" - "शक्यमञ्जलिभिः पातुं वाताः केतकगन्धिनः" "शक्यमरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम्। अङ्गैरनङ्गतप्तैरविरळमालिङ्गितुं पवन" इत्यत्रेवाशक्यमिति सामान्ये नपुंसकम्- अपारं तं पातुं मशकशिशुकः प्रभवति किमिति- अयमेव पाठस्स्वच्छः-अदश्शब्दतच्छब्दयोरुक्तार्थपरामर्शे पूर्वोक्तार्थापेक्षया सौन्दर्याधिक्यात्- अभूमिरित्यस्य लक्ष्मीभूम्न इवाशक्यमित्यस्य जलधेरेव विशेषणत्वे बिम्बप्रतिबिम्बभावानुरूप्याच्च- अत एवात्र दृष्टान्तो नामार्थालंकारः।

अभूमिरित्यत्र भकारमकारयोः कस्मादित्यत्र सकार मकारयोः- प्राथमिक पाठे- निधिमपामित्यत्र मकार पकारयोः- मशकेत्यत्र शकार ककारयोश्च व्यञ्जनयोस्सकृत्सादृश्यात् छेकानुप्रासश्शब्दालंकारः- "नोऽनेकस्य सकृत्पूर्व" इति सूत्रमुक्त्वा- अनेकस्य- अर्थाद्व्यञ्जनस्य सकृदेकवारं सादृश्यं छेकानुप्रास इति व्याख्याय "ततोऽरुण परिस्पन्द मन्दीकृत वपुश्शशी। दध्रे कामपरिक्षामकामिनी गण्डपाण्डुताम्"। इत्येतत्पद्यं- नन्दमन्दीति नकार दकारयोः- कामकामिनीति ककार मकारयोः गण्डपाण्डु- इति णकार डकारयोश्च

निकर्षोत्कर्षौ स्त इति प्रतीचीनपाठस्त्वनुचितः- दृष्टान्तदार्ष्टान्तिकवाक्ययोरुभयोरपि तुल्यलकारस्यैवोचि[illegible]त्वादन्यथा स्वारस्यहानेश्च। दिनकरकरव्रातैः दिवाकर किरण निवहैः- जटिले- जटा अस्य सन्तीति जटिलं- तथोक्ते- अभिव्याप्त इत्यर्थः- पिच्छादिषु जटाशब्द पाठान्मत्वर्थीय इलच्- तथाच सूत्रं "लोमादिपामादिपिच्छादिभ्यश्शनेलच" इति। दिवा तु अह्नि तु- अधिकरणशक्तिप्रधानमव्ययम्। "दिवाह्नी"त्यमरः- मध्याह्न इति यावत्- दिनकरकरव्रातजटिल इति विशेषण स्वारस्यात्- जटिले इत्येतन्नपुंसकं सप्तम्येकवचनान्तं दिवेत्यव्यय विशेषणम्- अव्ययानां सर्वलिङ्गविभक्तिवचनसाधारणरूपत्वात्- तथाच श्रूयते "सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्नव्येति तदव्यय"मिति। उदयास्तमयप्रत्यासन्नसमययो रविकिरणमान्द्याच्चन्द्रखद्योतद्युत्योर्यत्किंचिद्वैलक्षण्यं संभवेदपि- मध्याह्ने तु तदपि दुर्लभमिति द्योतयितुं दिनकरेत्यादि विशेषणम्- को वा भेदः न कोऽपि भेदः- तत्रोभयोरपि सहस्रकिरणकिरणगणनिराकृतप्रकाशत्वतौल्यादिति भावः। तथाचोक्तम्। "खद्योतो द्योतते तावद्यावन्नोदेति चन्द्रमाः। उदिते तु सहस्रांशौ न खद्योतो न चन्द्रमा" इति।

अत्रोपमानोपमेयधर्माणां बिम्बप्रतिबिम्बभावेन निर्देशाद्दृष्टान्तालंकारः- "चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलंकृति"रिति लक्षणात्। किंच बिम्बवाक्यार्थे श्रीस्तुति दशायां ब्रह्मादीनां कवेश्च स्वरूपभेदावभासेऽपि व्यावर्तक विशेषो नोपलक्ष्यते- एवं प्रतिबिम्ब वाक्यार्थेऽपि दिवाचन्द्रखद्योत विद्योतयोस्स्वरूपभेदावभासेऽपि व्यावर्तक विशेषो नोपलक्ष्यते- अतः उभयत्र सामान्यं नामालंकारः- "सामान्यं यदि सादृश्याद्विशेषो नोपलक्ष्यते- पद्माकरं प्रविष्टानां मुखं नालक्षि सुभ्रुवा"मिति- लक्ष्यलक्षणसंग्रहात्। अनयोः परस्परं संसृष्टिः दृष्टान्तवृत्त्यनुप्रासाभ्यां त्वेकवाचकानुप्रवेशसंकरः।

अत्र यथासंख्यान्वयानुरोधेन शशिखद्योत महसोरुत्कर्ष निकर्षौ स्यातामिति वक्तव्ये निकर्षोत्कर्षावित्युक्तेः- "का नाम गणनाऽस्माकं काकतीयस्य भूपतेः- यशःप्रतापयोर्मग्नौ सूर्याचन्द्रमसावपी"त्यादाविव क्रमभ्रष्टाख्यः काव्यदोषः प्राप्नोति- यद्यपि निकर्षोत्कर्षाविति समुदायस्य शशिखद्योतेति समुदायेनान्वये अभिधानक्रमेणाभिधेयक्रमौचित्येऽपि

बाधकाभावान्नार्थक्रमभङ्गः- तथापि शब्दक्रमभङ्गोऽस्त्येव यथासंख्यन्यायविरोधात्। अत्र द्वंद्वसमासवर्तीनि पदानि प्रत्योकं स्वसहचारितपदार्थान्तराण्यपि युगपदभिदधत इति वार्तिककारमते निकर्षपदेनोत्कर्षस्य उत्कर्षपदेन निकर्षस्यापि बोधसंभवेन शब्दक्रमोल्लङ्घनमपि नास्तीति कथंचित्समाधेयम्। तथाहि "चार्थे द्वंद्व इति सूत्रे भाष्ये- "चार्थे द्वंद्ववचनेऽसमासेऽपि चार्थसंप्रत्ययादनिष्टप्रसङ्गः- चार्थे द्वंद्ववचनेऽसमासेऽपि चार्थसंप्रत्ययादनिष्टं प्राप्नोति- अहरहर्नयमानो गामश्वं पुरुषं पशुम्। वैवस्वतो न तृप्यति सुराया इव दुर्मदी। इन्द्रस्त्वष्टावरुणो वायुरादित्य इती"त्याक्षिप्य "सिद्धं तु युगपदधिकरणवचने द्वंद्ववचना"दिति न्यासान्तरं कृतं वार्तिककृता- अधिकरणं वर्तिपदार्थौ तयोर्युगपत्पदद्वयेनाभिधाने द्वंद्व इति तदर्थः। एवं च रामकृष्णावित्यादौ रामपदेन रामकृष्णयोः कृष्णपदेन च तयोरभिधानाद्भवति द्वंद्वः- तथाच तत्रैव भाष्ये "अन्यवाचकेनान्यवचनानुपपत्तिरिति चेत्प्लक्षस्य न्यग्रोधत्वान्न्यग्रोधस्य प्लक्षत्वात्स्वशब्देनाभिधान"मिति वार्तिकम्। गामश्वमित्यादौ परस्परनिरपेक्षास्स्वतन्त्रा एव गवादयो भिन्नैरेव शब्दैः पृथक्प्रत्याय्यन्त इति युगपद्वाचित्वाभावाद्द्वंद्वाभावः। न च विरूपाणामपि समानार्थकानामित्येकशेषापत्तिरिति वाच्यम्। द्वंद्वविधिसामर्थ्येन समानार्थानामिति सामर्थ्येन च युगपदधिकरणतां विनाऽपि समानार्थतायामेवैकशेषात्।

नन्वेवं पट्वीमृद्व्यावित्यादौ समानाधिकरण लक्षणः पुंवद्भावः प्रसजेदिति चेन्न- वृत्तेः प्रागपि यत्र सामानाधिकरण्यं तत्रैव तत्प्रवृत्तेः- सहभूतयोरेव युगपदर्थद्वयबोधसामर्थ्यमिति नान्यतरवैयर्थ्यम्। तथा च तत्रैव भाष्ये- "एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्न इति चेदनुक्तत्वात्प्लक्षेण न्यग्रोधस्य न्यग्रोधप्रयोगः-एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्न इति चेन्न- किं कारणं- अनुक्तत्वात्प्लक्षेण न्यग्रोधस्य न्यग्रोधप्रयोगः- अनुक्तः प्लक्षेण न्यग्रोधार्थ इति कृत्वा न्यग्रोध शब्दः प्रयुज्यते। कथमनुक्तो यावतेदानीमेवोक्तं प्लक्षोऽपि न्यग्रोधो न्यग्रोधोऽपि प्लक्ष इति-सहभूतावेवान्योऽन्यस्यार्थमाहतुर्न पृथग्भूताविति"। द्वंद्व विषयं चैतत्। अतः केवल रामपदाद्रामं कृष्णं चेति वाक्यघटकाच्च नोभयबोधः-तथा च भाष्यम्-"तद्विषयं च-तद्विषयं चैतद्द्रष्टव्यं प्लक्षस्य न्यग्रोधत्वं-किं विषयं-द्वंद्वविषयं-युक्तं पुनर्यन्नियत विषया नाम शब्दास्स्युः- बाढं युक्तमिति- अत्र च ज्ञापकं "द्यावाचिदस्मैपृथिवी" इत्यादौ विग्रहेऽपि युगपद्वचनं- तथाच तत्रैव वार्तिकं- "विग्रहे युगपद्वचनं ज्ञापकं युगपद्वचनस्येति। विग्रहे खल्वपि युगपद्वचनता दृश्यते "द्यावाहक्षामा- द्यावाचिदस्मै पृथिवी नमेते इति। किमेतत्त्। युगपदधिकरणताया उपोद्बलकम्। विग्रहे किल नाम युगपदधिकरणवचनता स्यात्किं

यथोक्तं प्रतिपद्य पृच्छति। उपोद्बलकमिति। उत्कृष्टबलकमुद्बलकं प्रत्यक्षं- तत्समीपम् अनुमानमुपोद्बलकं- आगमस्येहानुमानत्वेनोपन्यासात्। विग्रहे किलेति। साहचर्यादि निमित्ताश्रयेण वाक्येऽपि शब्दानामनेकार्थाभिधायित्वं यदा दृश्यते तदा समासे शक्त्यन्तराणां वाक्ये अदृष्टानामपि दर्शनादसंभावना न कार्येत्यर्थ'' इति। विस्तरस्तु तत्रैव द्रष्टव्यः। वस्तुतस्त्वत्र दोष एव। सर्वदा केवलपदानामेकैकार्थवाचकत्वाद्वर्ति पदानामपि मतभेदेन तथाभावात्प्रायेण सर्वेषामप्येवमेव व्युत्पत्तेश्च- अत एवायं पक्षो भाष्य एव दूषितः- ''नेयं युगपदधिकरणवचनता दुःखा दुरुपपादाचे''त्यादिना- ''दुःखं प्रतीतावनुपरोहात्। वृद्धव्यवहाराद्धि शब्दार्थावसायः। न हि प्लक्षशब्दस्य न्यग्रोधाभिधायित्वं क्वचिद्दृश्यते- दुरुपपादा प्रमाणाभावा''दिति कैयटः। विस्तरस्त्वाकरे द्रष्टव्य इत्यलं बहुना।

ननु निकर्षोत्कर्षावित्यत्राजाद्यदन्त स्योत्कर्ष शब्दस्यैवा''जाद्यदन्त''मित्यनेन पूर्वप्रयोगेऽवश्यं भाविनि तदकरणाद्दोषान्तरमप्यापततीति चेन्न। ''समुध्राभ्राद्धः- लक्षणहेत्वोः क्रियाय'' इत्यादिनिर्देशात्तस्य प्रकरणस्यानित्यताज्ञापनेनादोषात्। निकर्षोत्कर्षौ स्तामधिरजनि खद्योत शशिनो''रिति पाठे तु न दोषः- न च प्रथम यतिस्थाने सवर्णावृत्ति नियमभ्रंशोऽस्मिन्पाठे दोष इति वाच्यम्। तस्य नियमस्य द्वितीयपाद एव परित्यक्तत्वात्। नापि खद्योतशशिनोरित्यत्र सर्वतोऽभ्यर्हितं पूर्वमिति नियमोल्लङ्घनं दोष इति वाच्यम् ''श्वयुवमघोना''मिति निर्देशेन तस्याप्यनित्यत्व ज्ञापनादित्यलम्। वृत्तं पूर्ववत्॥19॥

**मू. वाग्भिः कोरकितानि ते रचयत स्स्तोत्राणि वाणीपते**
**रस्माकं सुमितां स्तुतिं कलयतामप्यम्ब! तुल्यम् फलम्**
**कौबेरीं श्रियमानशे बहुतरैः कश्चित्तपोभिश्चिरा**
**देनामाशु कुचेल एव जगृहे धानाप्रदानादपि॥ 20**

अथास्तु वा प्रभूताल्पशक्तित्वाभ्यां स्तुतिचातुर्याचातुर्य प्रयुक्तं चतुर्मुखादीनामस्माकं च तारतम्यम् - फलतारतम्यं तु तत्कृतं नास्तीत्याह। वाग्भिरिति। हे अम्ब, अनेन वात्सल्यातिशयस्सूचितः- माता समर्थेभ्य इवासमर्थेभ्योपि पुत्रेभ्यस्तच्छक्तितारतम्या नादरेणाभीप्सितानि ददात्येविति व्यञ्जयितुमम्बेति संबोधनम्। यथोच्यते महाभारते। ''समर्थं वाऽसमर्थं वा कृशं वाप्यथवाऽकृशं-रक्षत्येव सुतं माता नान्यः पोष्टा विधानत'' इति-

कोरका एषां संजाताः कोरकितानि-कोरकशब्दस्य तारकादिषु पाठात् ''तदस्य संजातं तारकादिभ्य इतजि''तीतच्प्रत्ययः-अलंकृतानीति यावत्- कुट्मलितानीत्यपि ध्वन्यते- ते- स्तोत्राणि परमार्थगुणवर्णनानि-बहुवचनात्तेषामानन्त्यं द्योतितम्। रचयतः-शय्यापाकादि- सुन्दरतया ग्रथ्नतः- ''शय्यापाकादिभिश्श्लाघ्या ग्रथना रचनेष्यत'' इत्युक्तेः- वाणीपतेः ब्रह्मणः-अनेन स्तुतिरचनानुगुणं वैदुष्यं वश्यवाक्त्वं च सूचितम्-सुमितां सुष्ठु मितां अल्पीयसीमित्यर्थः- स्तुतिं नुतिं- एकवचनेन मितापि स्तुतिरेकविधैव, न तु नानाविधेति ध्वन्यते-आभ्यां च पदाभ्यां ब्रह्मकर्तृकस्तुतीनां स्वकर्तृकस्तुतेश्च जलनिधिजलत्रसरेण्वोरिव महत्तरस्तरतम भावइति व्यञ्जितम्। सुमानि कुसुमान्यस्यास्संजातानि सुमिता। तामित्यपि ध्वन्यते-तारकादेराकृति गणत्वादितच्-कलयतां-यथा कथं चिद्ग्रथ्नतां, न तु चतुर्मुखवद- पौरुषेय वाक्यैश्शय्यापाकादि सौन्दर्यवैशिष्ट्येनेति भावः- कवीनां ''कलिः कामधेनुस्सर्वार्थ- प्रदत्वा''दिति मल्लिनाथादयः। अस्माकमपि अज्ञानामवश्यवाचामपीति भावः- फलं निश्श्रेयससाम्राज्यपर्यन्तं प्रयोजनं प्रसिद्धफलमपीति ध्वन्यते। तुल्यं- तुलया सम्मितं- समानमित्यर्थः- ''नौवयोधर्मे''त्यादिना तुलाशब्दात्सम्मितार्थे यत्- अधिकारिभेदेन गुरुलघूपाययोस्तुल्यफलकत्वस्य सिद्धान्तितत्वादिति भावः- कोरकितानि रचयतां कुसुमितानि कलयतां च तुल्यमेव फलम्। कोरकिताद्यादृशं फलं लभ्यते तादृशमेव कुसुमितादपि, न तु तद्विपरीतमित्यपि व्यज्यते।

नन्वेवं गुरूपायसाध्यं फलं कथं लघूपायेन सिध्येदित्याशङ्कां दृष्टान्तप्रदर्शनेन परिहरति। कौबेरीमिति। कश्चिच्चेतनः- कश्चिदित्यनेन तस्यानितरसाधारण महाभाग्यवत्त्वं सूचितम्। बहुतरैः भूयोभिः- तपोभिः अनशनादिव्रतैः- बहुतर शब्देन बहुवचनेन च तेषां प्रत्येकं वैविध्यं सूचितम्। कुबेरस्येयं कौबेरी, तां- धनदसबन्धिनीमित्यर्थः- श्रियं संपदं- चिरात् अतिदीर्घकालात्-न तु भूयिष्ठतपःक्लेशेनापि क्षिप्रमिति भावः- आनशे व्याप्नोतिस्म- प्राप्नोदितियावत्- अश्नोतेर्व्याप्त्यर्थकात्सौवादिकाल्लिट्- ''अश्नोतेश्चेति'' दीर्घादभ्यासा- दवर्णात्परस्य नुट्- कुचेलः प्रसिद्धः- कुचेल इत्यनेन वसन मालीमसीं सूचयता तस्य क्वचिदपि लक्ष्मीकटाक्षविषयता दुर्लभेति द्योतितम्। यदुच्यते जैमिनीयाश्वमेधिके- ''कुचेलिनं दन्तमलप्रधारिणं बह्वाशिनं निष्ठुरभाषणं तथा। सूर्योदये चास्तमये च शायिनं विमुञ्चति श्रीरपि चक्रपाणिन''मिति। एतेन पूर्वोक्तकौबेरसंपदभीप्सुचेतनस्यास्यच वैलक्षण्यं महदिति [illegible] धानाः पृथुकतण्डुलाः- अनेन

स भार्यया विप्रो बहुशः प्रार्थितो मृदु। अयं हि परमो लाभ उत्तमश्लोकदर्शनम्। इति संचिन्त्य मनसा गमनाय मतिं दधे। अस्त्यप्युपायनं किंचिद्गृहे कल्याणि दीयताम्। याचित्वा चतुरो मुष्टीन्विप्रान्पृथुक तण्डुलान्। चेरखण्डेन तं बध्वा भर्त्रे प्रादादुपायनम्। स तानादाय विप्राग्र्यः प्रययौ द्वारकां किल। कृष्णसंदर्शनं मह्यं कथं स्यादिति चिन्तयन्।'' इत्यादिना– कृष्णसंदर्शनानन्तरं च- ''किमुपायनमानीतं ब्रह्मन्मे भवता गृहात्। अण्वप्युपहृतं भक्तैः प्रेम्णा भूर्येव जायते। भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते। पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति। तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः।'' इत्युक्तोऽपि द्विजस्तस्मै व्रीडितः पतये श्रियः। पृथुकप्रसृतिं स्वीयां न प्रायच्छदवाङ्मुखः। सर्वभूतात्मदृक्साक्षात्तस्यागमन कारणम्। विज्ञायाचिन्तयन्नायं श्रीकामो माऽभजत्पुरा। पत्न्याः पतिव्रताया मे सखा प्रिय– चिकीर्षया। प्राप्तो मामस्य दास्यामि संपदोऽमर्त्य दुर्लभाः। इत्थं विचिन्त्य वसनाच्चीर बद्धान् द्विजन्मनः। स्वयं जहार किमिदमिति पृथुक तण्डुलान्। नन्वेतदुपनीतं मे परमप्रीणनं सखे। तर्पयन्त्यङ्ग! मां विश्वमेते पृथुकतण्डुलाः। इति मुष्टिं सकृज्जग्ध्वा द्वितीयां जग्धुमाददे। तावच्छ्रीर्जगृहे हस्तं सत्वरा परमेष्ठिनः। एतावताऽलं विश्वात्मन् सर्वसंपत्समृद्धये। अस्मिन् लोकेऽथवाऽमुष्मिन्पुंसस्त्वत्तोषकारण''मिति। अनेन पूर्वोक्तचेतनकृत बहुतर तपोरूपोपायस्य एतत्कृताल्पिष्ठधानाप्रदानरूपोपायस्य च महत्तरमन्तरमिति व्यञ्जितम्- आशु शीघ्रं- न तु पूर्वोक्तचेतनवदतिचिरात्- समनन्तरमेव तत्संपदवाप्तिराख्यायते हि श्रीभागवते। एनामेव कौबेरी सदृशीमेवेति यावत्- न त्वन्यादृशीमिति भावः। ''दयाकुचेलेधनदत्कुचेले'' इत्युक्तेः- जगृहे उपाददे। अनेन स्वयमेव संपदस्समीपोपनतत्वेन सौलभ्यं व्यञ्जितम्। ''ग्रह उपादाने'' इति हि धातुः। अत्र ''देवं सेवितुमेव निश्चिनुमहे योऽसौ दयाळुः पुरा धानामुष्टिमुचे कुचेलमनये दत्ते स्म वित्तेशता''मित्याचार्य श्रीसूक्तिरनुसंधेया-अधिकारिभेदेन गुरुलघूपाययोः तुल्यफलकत्वस्य सिद्धत्वात् असंभावनाशङ्काया नावकाश इति भावः।

किंच-उक्त दृष्टान्तेन- कोरकितानि सुमितामिति पदाभ्यां चोक्तरीत्या स्तुतिकर्तॄणां ब्रह्मादीनामेव विलम्बेन फलप्राप्तिरस्माकं त्वतिशीघ्रमित्यर्थलाभादस्माकमेव ततोऽपि प्रकर्ष इति हार्दाभिप्रायोऽपि व्यञ्जितः। पूर्वश्लोकवद्दृष्टान्तांकारः। तकारादि व्यञ्जनासकृदावृत्ति प्रयोज्यो वृत्त्यनुप्रासश्च- किंच। कारणानामसमग्रत्वेऽपि कवेर्ब्रह्मादितुल्यफलकत्व रूपकार्योत्पत्तेः सिद्धवद्भावेन वर्णनाद्विभावनाभेदः। पूर्वार्थे- उत्तरार्थेऽपि कुचेलस्य हेत्व

कार्योत्पत्तिश्च सा मते''ति लक्षणात्। अथोऽप्येते एकवाचकानुप्रविष्टा इति संकरः- विभावनयोस्तु संसृष्टिः- एतदादिश्लोक पञ्चकं शार्दूल विक्रीडत वृत्तम् ॥20॥

मू. आसन्धन्यतमा गुणां स्तव बहूनास्वाद्य शक्रादयो
गृह्णन्तोऽपि गुणार्णवामृतकणान्मातः! कृतार्था वयम्।
आचामन्ति सुधाझरान् सुमनसो द्वित्रांश्चकोराः कणा
नैणाङ्कानविशेषमार्तिशमनं तत्रोभयेषामपि ॥ 21

एवमेव भूयोगुणास्वादिनामिन्द्रादीनां कतिपयगुणग्राहिणामप्यस्माकं च धन्यत्वम विशिष्टमेवेति पूर्वोक्तमेवार्थं भङ्ग्यन्तरेणाह। आसन्निति। हे मातः- शक्रादयः इन्द्रमुखाः- शकिधातोर्निष्पन्नेन शक्रशब्देन भूयिष्ठगुणास्वाद सामर्थ्यं व्यञ्जितम्। तव- ''कल्याणगुण वारिधि''रिति प्रथिताया इति भावः- बहून् अपरिमितान्- गुणान् सौशील्यादीन्- आस्वाद्य विगळितवेद्यान्तरत्वेनानुभूयेत्यर्थः-अनेन ''रसास्वादेन तरळा ये माद्यन्ति विपश्चितः। त एव भावुका लोके भवन्ति हृदयाळव'' इत्युक्तरीत्या तेषामतिहृदयाळुत्वं प्रतीयते। अत एवैषां वक्ष्यमाणस्सुमनोदृष्टान्तोऽपि युज्यते-आस्वाद्येत्यस्य प्रस्तुत्येति पाश्चिमव्याख्यानमयुक्तम्। प्रपूर्वकस्तौतेः- ''भाव! प्रस्तूयतां- वर्णकान्तरं प्रस्तौती''त्यादावुपक्रमार्थकत्व प्रसिद्धेस्तस्येहानुपयोगात्- धनं लब्धारो धन्याः- ''धनगुणं लब्धे''ति यत्प्रत्ययः- अतिशयेन धन्याः धन्यतमाः- आसन् अभूवन्- एतच्च लक्ष्मीतन्त्रविष्णुपुराणादौ प्रसिद्धम्- गुणा एवार्णवस्सिन्धुः- अर्णांस्यस्य सन्तीत्यर्णवः- ''केशाद्वोऽन्यतरस्या''मिति सूत्रे ''अर्णसोलोपश्चे''ति वार्तिकेन मत्वर्थीये वप्रत्यये- अर्णश्शब्दसकारलोपः- अत्र सामान्योऽप्यर्णवशब्दो दुग्धाम्बुधिरूपविशेषे पर्यवस्यति। गुणलेशेष्वमृत कणत्वाध्यवसानाल्लिङ्गात्। गुणेष्वम्बुधित्व रूपणेनापारत्वादि व्यज्यते। तत्संबन्धिनोऽमृत कणान् सुधाबिन्दून् - अर्णवस्थानीयगुणगणसंबन्ध्यमृतस्थानीयकतिपयगुणानां कणस्थानीयान्-लेशेनाति भावः। गृह्णन्तोऽपि यथाकथंचिदास्वादयन्तोऽपि- न तु शक्रादि वदिति भावः- वयं अशक्तास्सहृदयतागन्धानभिज्ञाश्चेति भावः- अत एव वक्ष्यमाण तिर्यग्दृष्टान्तोऽपि युज्यते। कृतार्थाः निष्पन्नप्रयोजनाः- धन्यतमा इत्यर्थः- पुरुषार्थव्यवस्थाया आत्माभिमानानुगुणत्वादिति भावः- तेषामस्माकं च भूयोगुणास्वादयितृत्वकतिपय गुणग्राहित्वाभ्यां हृदयाळुत्वाहृदयाळुत्वाभ्यां च महत्यपि वैलक्षण्ये कृतार्थता तुल्यैव।

पिबन्ति- चमतेर्भौवादिकादाङ्पूर्वकात्कर्तरि लट्- ''आङिचम इति वक्तव्यं''इति नियमात्- ''ष्ठिवुक्लमुचमांशिती''ति दीर्घः- अत्र- संभृतं चार्धमासेन तत्सोमस्थं सुधामृतम्। पिबन्ति देवा मैत्रेय सुधाहारा यतोऽमराः। त्रयस्त्रिंशत्सहस्राणि त्रयस्त्रिंशच्छतानि च। त्रयस्त्रिंशत्तथा देवाः पिबन्ति क्षणदाकर''मिति श्री विष्णुपुराणोक्तमप्यनुसंधेयम्।

आचमन्तीत्यस्य भक्षयन्तीति व्याख्यानं तु नातीव सुन्दरम्। आङ् पूर्वक चमधातोः पानार्थकत्वप्रसिद्धेः। भक्षयतिस्तु खरविशदतमाभ्यवहार एव शक्तः- तथा च ''भक्ष्येण मिश्रीकरण''मिति सूत्रे तत्त्वबोधिन्यादौ- खरविशदतममभ्यवहार्यं भक्ष्यं- खरं कठिनं- विशदं विविक्तावयवं खाद्यं भक्ष्यमित्यर्थः- अब्भक्ष इत्यादिप्रयोगस्तु भाक्त इत्युक्तम्- पेयविषयेऽपि भक्षयतेश्शक्तत्वे ''संस्कृतं भक्षा'' इत्यधिकारे ''क्षीराड्ढञि''ति सूत्रे ''भक्षा इति निवृत्तं तेन यवाग्वामपि भवतीत्युक्त्वा क्षैरेयीत्युदाहृतमसंगतं स्यात्। भवदुक्तरीत्या पेयेऽपि भक्षयतेश्शक्तत्वेन भक्ष इत्यस्यानुवृत्तावपि बाधकाभावात्। न चात्राप्यब्भक्ष इत्यादाविव भाक्त एव प्रयोगः किं न स्यादिति वाच्यम्। मूलाननुरूपं पदं यत्नतो विलिख्य तस्य भाक्तत्व कल्पनापेक्षया ''स्वायत्ते शब्दप्रयोगे नावाचकं प्रयुञ्जीते''ति न्यायेनानुरूपार्थ समर्थकपदेन तद्व्याख्यानस्यैवोचितत्वात्- चकोरस्तु- ऐणाङ्कानित्येतदत्रापि संबध्यते- द्वौ वा त्रयो वा द्वित्राः तांस्तथोक्तान् ''संख्ययाऽव्ययासन्नादूराधिकसंख्यास्संख्येये'' इत्यनेन बहुव्रीहौ ''बहुव्रीहौ संख्येये डजबहुगणा''दिति समासान्तो डच्- अयं च बहुव्रीहिर्वार्थे- न च वार्थो न विकल्पः-पक्षे द्विवचनस्याप्यापत्तेः। किन्तु संशयः-स चानियतसंख्यावमर्शी- तत्र च त्रयोऽपि सर्वदा भासन्त इति तदपेक्षं बहुवचनमेव- आनयनादि क्रियान्वयस्तु द्वयोस्त्रयाणां वेत्यनियत एवेत्याहुः-कणान्-अर्थादमृतशीकरानित्यर्थः-अनेन देवास्वादनी यामृत झरापेक्षया व्यतिरेकः प्रदर्शितः- आचामन्तीत्येतदत्रापि संबध्यते- करानिति पाठे किरणानित्यर्थः- ''बलिहस्तांशवः करा'' इत्यमरः- यद्यपि पाठद्वयेऽपि वृत्त्यनुप्रासस्तुल्य एव- तथापि प्राथमिकपाठे कणेष्वमृत संबन्धित्वकल्पनक्लेशेऽपि झरेषु कणानामेकदेश लेशकोटितमांशत्वप्रसिद्ध्या बिम्बानुरूप्याच्च स्वारस्याधिक्यमिति प्रतिभाति- तत्र उक्तरीत्या सुधास्वादने- उभयेषां देवानां चकोराणामपि- आर्तेः पिपासाजनितग्लानेः- शमनं शान्तिः- अविद्यमानो विशेषो यस्य तत् अविशेषं तुल्यमेव- सुधापानतारतम्येप्यार्तिशान्तिरुभय साधारणीत्यर्थः।

यत्त्वत्र- ऐणाङ्कानित्यत्र ...

अन्तादाचामेत्-मध्यादाचामे" इति च छान्दोग्ये आचमनेऽप्यवधि दर्शनादत्राप्यवधि समर्पकपदेनावश्यं भाव्यमिति वाच्यम्। तत्रापि "अन्ताद्गृहीत्वा मध्वात् गृहीत्वेति भाष्यकारैर्व्याख्यातत्वादन्तमध्ययोर्ग्रहणावधित्वस्यैव स्फुटत्वेनाचमनावधित्वायोगात्- अस्तु वा तत्रावधित्वमेव तयोः- अत्र तु न तदुपयोगः प्रत्युतास्वारस्यं च- उक्तरीत्या बिम्बप्रतिबिम्बयोर्वैरूप्यापातात्- यथोक्तपाठे तु-अस्य तद्धितान्तत्वेन सौशब्द्यरूप गुणाधिक्यं चाभ्युच्चयः- इष्टतमश्च कवेर्दाक्षिणात्यत्वेन तद्धितान्तप्रयोगः- भाषितं चैतत् "प्रियतद्धिता हि दाक्षिणात्याः-यथा लोके वेदे चेति प्रयोक्तव्ये लौकिकवैदिकेष्विति प्रयुज्यत" इति। अत्र दृष्टान्त-विभावना-वृत्त्यनुप्रास-संकरः पूर्वश्लोकवदेव। विशेषस्तु-पूर्वार्धे गुणलेशं रूपविषयं निगीर्य तस्यामृतकणरूपविषयिवाचिपदेन उल्लेखनाद्रूपकातिशयोक्तिः अलंकारः। "रूपकातिशयोक्तिस्स्यान्निगीर्याध्यवसानतः- पश्य नीलोत्पलद्वंद्वान्निस्सरन्ति शिताश्शरा" इति लक्ष्यलक्षणसंग्रहात्- इयं च गुणार्णवेति रूपकेणाङ्गेनोपष्टभ्यत इति संकरः- अयं च दृष्टान्तादिभिरेकवाचकानुप्रविष्टैस्संकीर्यत इत्यपरोऽपि संकर इति ॥21॥

मू. देवि श्री वृ(वृ)षशैलदेवदयिते! दाक्षिण्य पु(प)ण्यक्षिते
मातस्साहसतस्तव स्तवमिमं कर्तुं प्रवृत्तस्य मे।
उन्मीलन्तु परं गिरस्तव करालंकारपङ्केरुह -
प्रेङ्खत्तुङ्गषडङ्घ्रिसङ्घ विसरज्झंकारशङ्काकृतः॥ 22

एवं ब्रह्मादीनां स्वस्य च स्तुतिरचनशक्तितारतम्येऽपि फलतारतम्याभावं निश्चित्य परित्यक्तसाहसप्रवृत्तिसाध्वसस्स्वाभीष्टं प्रार्थयते। देवीति। श्रीवृषशैलस्य श्रीवेङ्कटाद्रेः- देवः श्रीवेंकटाद्रिस्थो देवश्श्रीनिवास इत्यर्थः- राजेत्यर्थोप्युपस्कार्यः- "राजा भट्टारको देवः" इत्यमरः- "राजाधिराजस्सर्वेषां विष्णुर्ब्रह्ममयो महा" नित्यादिकमिह भाव्यम्। तस्य दयिते! वल्लभे!- इदं च "मूकं करोति वाचालं पङ्गुं लङ्घयते गिरिम्। यत्कृपा तमहं वन्दे श्रीनिवासं जगत्पतिम्"। "मूकारब्धं कमपि बधिराश्श्लोकमाकर्णयन्ती" त्याद्युक्तमघटित घटनापटीयस्त्वं तवाप्यस्तीति द्योतयितुम्। तेन चाज्ञेनापि स्वेन प्रस्तुताशंसनीयस्य लोकोत्तरवाक्चातुर्यस्य निर्वहणक्षमत्वं श्रियोऽस्तीति द्योतितम्। न केवलं तव तद्दयितात्वमेव, किंतु तत्तुल्यैश्वर्य दिव्यमहिषीत्वमप्यस्तीत्याह। देवीति। देवि! सकलभुवनरक्षणाय कृताभिषेके! इत्यर्थः। "देवी कृताभिषेका या" मित्यमरः- अनेन चाभीष्टदानेनाश्रितरक्षणमेव तव परमप्रयोजनमिति

दत्तवती न स्वादिति पूर्वोक्तमुभयमप्यनुपकारकमेव स्यात्-तस्मादिह पुरुषार्थकाङ्क्षिणामुपकारक मुक्तगुणत्रयमपि दाक्षिण्यशब्देन विवक्षितम्। तस्य-पुण्यक्षिते! पुण्यभूमे! आर्यावर्तक्षेत्रभूते इत्यर्थः।"आर्यावर्तः पूण्यभूमिर्मध्यं विंध्यहिमागयो"रित्यमरः। मनुश्च "आसमुद्राच्च वै पूर्वादा समुद्राच्च दक्षिणात्। तयोरेवान्तरं गिर्योरार्यावर्तं प्रचक्षते" इति। यद्वा। "आर्यावर्तः कुरुक्षेत्रमित्याद्याः पुण्यभूमय" इति भारतोक्तेः-पुण्यक्षिते इत्यस्य कुरुक्षेत्रभूते इत्यर्थः- अनेन "कुरुक्षेत्रं च मत्स्याश्च पञ्चालाश्शूरसेनकाः- एष ब्रह्मर्षिदेशो वै ब्रह्मावर्तादनन्तरः। एतद्देश प्रसूतस्य सकाशादग्रजन्मनः। स्वंस्वं चरित्रं शिक्षेरन्पृथिव्यां सर्वमानवा"। इति मनूक्तरीत्या यथा कुरुक्षेत्रादिप्रसूताद्विप्रात्सर्वदेशीया अपि मनुजास्स्वस्वचरित्रं शिक्षेरन्- तथैव लक्ष्म्याश्रिताद्दाक्षिण्यादेव सर्वेपि देवमनुष्यादयस्स्वस्वाभीप्सितार्थान्भिक्षेरन्निति व्यज्यते-पण्यक्षिते इति पाठे- अंजलि बन्धौन्मुख्यादिलक्षणमूल्येनैतद्दाक्षिण्यरूप महार्घवस्तु सर्वैरपि सौकर्येण क्रेतुं शक्यमिति व्यज्यते- तेन चैतद्दाक्षिण्यमियत्तातीतमिति व्यज्यते। न ह्यनर्घं वस्त्वितरसाधारणमापणे प्रसार्यते विक्रेतुमल्पधनैरापणिकैः।

अथ स्वत एव त्वं पूर्वोक्तरीत्या दाक्षिण्यादिकल्याणगुणसमृद्ध्याप्याश्रितं मां रक्षसि, किं पुनर्जनन्यपि भवती इति व्यञ्जयन्नाह। मातरिति। अनेन स्वचिकीर्षितसाहसस्य सोढव्यत्वमपि व्यञ्जितम्। वृषशैलदेवदयिते मातरित्याभ्यां भगवति वाल्लभ्यादस्मासु वात्सल्याच्चावश्यं त्वमेव पुरुषकारभूता सती सापराधानामस्माकं प्रशासितुर्भगवतः पितृत्वप्रयुक्तमूष्मलीभाव "मुचितैरुपायै र्विस्मार्ये"त्युक्तरीत्या विस्मार्य स्तवरूपं यत्किंचिद्व्याजमवलम्ब्य अस्मां स्तत्पादारविन्दे समर्प्य "भवेयं शरणं हि व" इत्युक्तरीत्याऽस्माकं रक्षाहेतुर्भवसीत्ययमर्थोऽ भिव्यञ्जितः-देवि श्रीरिति पाठे तु श्रीरित्येतद्विशेष्यं-तदा चायमर्थः-नाहं स्वार्थसाधन तत्परतया त्वां गुणारोपेण वर्णयामि-किं तु त्वन्नाम्नैवामी गुणाःख्याप्यन्त इत्यभिप्रयन्नाह-श्रीरिति-अयं च शब्दः-"शॄहिंसायां-श्रीञ् पाके- इति क्रैयादिकाभ्यां धातुभ्यां शृणाति श्रीणातीति कर्तरि, "श्रीञ् सेवाया" मित्यस्माद्भौवादिकात् श्रीयते श्रयति इति कर्मणि कर्तरि च, "श्रुश्रवण" इत्यस्माद्भौवादिकादण्यन्ताण्ण्यन्तादपि शृणोति श्रावयतीति कर्तरि चे, ति षोढा व्युत्पादितः-तथा च श्रीशब्दनिरुक्तयः-"शृणाति निखिलान्दोषाञ् श्रीणाति च गुणैर्जगत्। श्रीयते चाखिलैर्नित्यं श्रयने च परं पदम्। श्रयन्तीं श्रीयमाणां च शृणतीं शृण्वतीमपी"त्यादिषु द्रष्टव्याः-अनेन

त्वमेव स्तोत्रप्रवृत्तिप्रतिबन्धकदोषान्निराकृत्य तदौन्मुख्यं संपाद्य भगवत्प्राप्तौ पुरुषकारत्वेनाश्रीयमाणा मद्रक्षणाय भगवन्तमाश्रित्य स्वयमपि सहधर्मचारिणीभवन्ती मदीयस्तवं स्वयं शृण्वती भगवन्तमपि श्रावयसीति स्वनैर्भर्यं व्यञ्जितम्।

इमं- विवक्षितं- तव "योऽन्तःप्रविश्य मम वाचमिमां प्रसुप्तां संजीवयत्यखिल शक्तिधरस्स्वधाम्ने"त्युक्तवागुज्जीवकत्वभूम्नो भगवतो वल्लभायाः "विचित्र वाग्भूतिकरीं यशस्विनीं- नवं नवं स्पष्टसुवाक्यदायिनी"मित्याथर्वणरहस्यादिषु स्वयमपि तथा प्रसिद्धायाश्चेति भावः- स्तवं स्तोत्रं- कर्तुं- न त्वन्यदीयं पठितुमिति भावः- तव स्तवं कर्तुमित्यनेन न हि त्वदन्येषामेतादृशवाग्विभूतिवितरणनैपुणमस्ति, येनास्मदभीप्सितं फलेग्रहि स्यात्-सरस्वत्यादीनां वाग्देवतात्वादिव्यवहारोऽपि त्वद्विभूतिभूतत्वादेवेति च व्यज्यते। साहसात् साहसतः। पञ्चम्या आद्यादित्वात् तसिल्- अनालोचितस्वबलाबलमिति यावत्। प्रवृत्तस्य उद्युक्तस्य- प्रवृत्तिमत्त्वमेव मम- अन्यत्सर्वं त्वत्कृपयैव निर्वर्तनीयमिति भावः- मे किमपि विवक्षतः विवक्षितं बहिर्मुखान्निस्सारयितुमशक्नुवानस्य* चेति भावः- अत्र "स तं विवक्षन्तमतद्विदं हरिर्ज्ञात्वाऽस्य सर्वस्य च हृद्यवस्थितः। कृताञ्जलिं ब्रह्ममयेन कम्बुना पस्पर्श बालं कृपया कपोयोः" इति श्रीभागवतोक्ता ध्रुवावस्था कवेरनुसंहिता- गिरः- वाचः- काव्यलक्षणलक्षिता इति भावः- परं अस्मदभीप्सितादप्यतिशयितं यथास्यात्तथा- उन्मीलन्तु विकसन्तु- त्वत्कृपया विजृम्भन्तामिति भावः- उन्मीलन्त्विति कर्तरि प्रत्ययेन गिरां विकसनेऽस्मत्प्रयत्नलेशोऽपि नापेक्षित इति ध्वन्यते।

गिरो विशिनष्टि - तवेति - तव भवत्याः - करयोरलंकारौ करालंकारौ "अलंकारस्त्वाभरण"मित्यमरः। अलं[illegible]क्रियते आभ्यामित्यलंकारौ- करणे घञ्- करौ अलंकारौ ययोस्ते इति वा- अनेन, करेणालंकारा यस्येति पाश्चिमव्याख्यानं प्रत्युक्तम्- संभवति समानाधिकरण बहुव्रीहौ व्यधिकरण बहुव्रीहेरयुक्तत्वात्। पङ्के रोहत इति पङ्केरुहे "हलदन्तात्सप्तम्यास्संज्ञाया" मित्यलुक्- करालंकारे च ते पङ्केरुहे च-ताभ्यां प्रेङ्खन्तः उद्गच्छन्तः-प्रपूर्वकात् इखिधातोर्गत्यर्थकात्कर्तरि शता-इदित्वान्नुम्-तुङ्गाः उन्नताः परिपुष्टा इति यावत्-ये षडंघ्रयः भ्रमराः- "द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमराळय" इत्यमरः। पङ्केरुहप्रेङ्खदित्यनेन भ्रमराणां तादात्विकमरन्दपानमत्तत्वं- तेन झंकाररामणीयकसमृद्धिश्च व्यज्यते- तुङ्गा इत्यनेन तदीयझंकारे क्वचिदप्यपरिपोषो व्युदस्यते। तेषां संघाः, न तु द्वित्राः पञ्चषा वा-तेन भ्रमराणामन्योन्योपष्टम्भ-

कृञः क्विप्- सुकर्म पापमन्त्र पुण्येषु कृञ् इत्यत्र क्विब्व कृञ् एव भूत एवेति त्रिविध-नियमस्यैव स्वीकरणेन स्वादिष्वेवेति नियमाभावाच्छास्त्र कृद्धाष्यकृदित्यादाविवान्यस्मिन्नपि सुप्युपपदे क्विपो नानुपपत्तिः- "आशंसायां भूतवच्चे"ति वर्तमानसामीप्ये भविष्यत्याशंसायां भूतवत्प्रत्यय इति ध्येयम्-आशास्यन्ते हि कविनोक्तविधा वाचः-किमिमे मदीयकरारविन्दो-च्चलद्भ्रमरझंकारा इति भवत्यास्संदेहं संददाना इति भावः-अनेन मम गिर उक्तविध्रभ्रमर-झंकारवदजस्रं तव श्रोत्रयुगळगोचरा भवन्त्वित्याशंसा च व्यञ्जिता। अन्येषां च शङ्कां कुर्वाणेति व्याख्यानं तु मन्दम्-अदस्स्तुतिश्रवणे कथमप्यन्येषामुक्तविधसंशयसंभवे कारणाभावात्। लक्ष्म्यास्तूद्धृतनिजकरयुगळ विधृतारविन्दोच्चलद्भ्रमरझंकारनिशमन-नैरन्तर्येण स्तुतावपि तादृशसंशयस्सुलभसंभव एवेति यथोक्तव्याख्यैव साधीयसी।

अत्र करालंकारेत्यादि वाक्यगतसंदेहालंकारेण वाचां लोकोत्तरमाधुर्यप्रतीतेः अलंकारेण वस्तुध्वनिः- प्रागुपपादित रीत्या कवेर्ध्रुवौपम्यं व्जज्यत इति वस्तुनाऽलंकारध्वनिः कवेर्लक्ष्मीविषयकभक्तिभावाभिव्यक्तेर्भावध्वनिरिति त्रिविधोऽपि ध्वनिरिति ध्वनि प्रस्थानोत्सुकानां संभ्रमः- गाम्भीर्यादिभिस्सादृश्यात् वाग्झंकाररूपकोटिद्वयगोचरस्य संदेहस्य तावन्मात्रपर्यवसायित्वाच्छुद्धसंदेहालंकारः- तदुक्तं विद्यानाथेन- "विषयो विषयी यत्र सादृश्यात्कविसम्मतात्। संदेहगोचरौ स्यातां संदेहालंकृतिश्च सा। सा त्रिविधा शुद्धा निश्चयगर्भा निश्चयांता चेति। तत्र संदेहमात्रपर्यवसायिनी शुद्धेति"। दण्डी त्विमां संशयोपमामाह। तथा च काव्यादर्शे। "किं पद्ममन्तर्भ्रान्तालि किं ते लोलेक्षणं मुखम्। मम डोलायते चित्तमितीयं संशयोपमे"ति। देवीत्यादि विशेषणानां विशेष्यस्य चोक्तरीत्याऽभिप्राय गर्भत्वात्परिकरपरिकराङ्कुरयोस्संसृष्टिः- दाक्षिण्यपुण्यक्षिते इत्यत्र रूपकं च। उक्त संसृष्टिरूपकयोरुक्तसंदेहालंकारस्य च संसृष्टिः। किं च स्वाभिलषितवाग्रूपवस्त्वाशंसनात् प्राचीनमतरीत्याऽशीर्नामालंकारः। तदुक्तं काव्यादर्शे। "आशीर्नामाभिलषिते वस्तुन्याशंसनं यथा। पातु वः परमं ज्योतिरवाङ्मानसगोचर"मिति। अयमलंकारो वैचित्र्यविशेषं नावहतीति बहुभिर्नादृतः। कैश्चित्तु तादृशाशंसनेऽपि वैचित्र्यमस्तीति परमभ्युपगतः। उक्तं च। "आशीरिति च केषांचिदलंकारतया मता। सौहृद्यस्याविरोधोक्तौ प्रयोगोऽस्याश्च तादृश" इति। कैश्चित्तु नाट्य एवास्याश्चमत्कारकारित्वान्नाट्यालंकारतया गण्यते। यथोच्यते। "आशीरास्कन्दकपटाः क्षमागर्वोद्यमाश्रया" इति। उदाहृतं च-"ययातेरिव शर्मिष्ठा पत्युर्बहुमता भव। पुत्रं त्वमपि सम्राजं सेव पूरुमवाप्नुही"ति। अन्ये तु प्रेयोऽलंकारभेद एवायमित्याहुः।

''माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकेष्यते'' इति लक्षणात्। एतच्चा ''भूमिस्त्वद्भूमे''ति श्लोके विस्तरेणोपपादितमधस्तात्। अत्र हे श्रीः भगवद्विभूतिभूते- अत एव वृषशैलदेवस्य प्रिये- अत एव देवि- देवदेवेन त्रैलोक्यपट्टाभिषिक्ते दाक्षिण्यस्याश्रितच्छन्दानुवर्तनस्य मनोज्ञस्थानभूते- जगन्मातृत्वप्रयुक्त वात्सल्यवतीति संबुद्ध्यन्तपदानि व्याख्याय विशेषण विशेष्यानादरेणात्र संबोधनानां साभिप्रायत्वात् परिकरांकुर इति केषांचिल्लेखनमविचारित रमणीयम्, एतत्पदमेतदभिप्रायकमिति विविच्य तैस्संबोधनानामभिप्रायस्यावर्णनेन तस्य दुर्विज्ञानत्वात्कथंचिदभिप्रायकल्पनेऽपि सर्वेषां साभिप्रायत्वाभिसंधौ परिकराङ्कुरत्वायोगात् विशेषणसाभिप्रायत्वे परिकरः- विशेष्यसाभिप्रायत्वे परिकराङ्कुर इति विभागदौस्थ्यापत्तेश्च- विशेषणमात्रसाभिप्रायत्वाभिसंधौ तु सुतरां तदयोगद्विशेष्यमात्रस्यैव तथात्वविवक्षायां परिकराङ्कुरसंभवेऽपि संबोधनानां साभिप्रायत्वादिति स्वोक्तिविरोधाच्चेति दिक्।

किंचात्र श्लोके बहूनां पदानामेकपदवदवभासाच्छ्लेषाख्यो गुणः- ''मिथस्संश्लिष्ट पदता श्लेष इत्यभिधीयत'' इति लक्षणात्- पदानां झडित्यर्थ समर्पकत्वात्प्रसादो नाम गुणः- ''प्रसिद्धार्थपदत्वं यत्स प्रसादो निगद्यत'' इति लक्षणात्- पादचतुष्टयेऽपि तुल्यवद्भणनात् समता नाम गुणः- ''अवैषम्येण भणनं समता सा निगद्यत'' इति लक्षणात्। बन्धस्यात्र उज्वलत्वात्कान्तिर्नाम गुणश्च- ''अत्युज्वलत्वं बन्धस्य काव्ये कान्तिरितीष्यत'' इति लक्षणात्- यदभावे चिरन्तन चित्रच्छायेव प्रबन्धच्छाया भवति तदौज्वल्यं सैव कान्तिरित्यर्थः ''औज्वल्यं कान्तिरित्याहुर्गुणं गुणविपश्चितः- पुराण चित्रस्थानीयं तेन वन्ध्यं कवेर्वच'' इति-लक्ष्म्या उचितविशेषणयोगादुदात्तता नाम गुणः- ''श्लाघ्यैर्विशेषणैर्योगो यस्तु सा स्यादुदात्तते''ति लक्षणात्- समासभूयस्त्वादोजो नाम गुणः- ''ओजस्समासभूयस्त्व'' मिति लक्षणात्। लक्ष्मीविषयक भक्तिभाववशाद्देवि श्रीर्वृषशैलदेवदयिते इत्यादि वाक्यवृत्ति सद्भावात्- ''स्वामिंस्तात कुलोत्तंस वीररुद्र जगत्प्रभो। पुत्रिणां धुरमेषोऽहं पुत्रेणारोपित- स्त्वये''त्यत्रेव भाविकं नाम गुणः- ''भावतो वाक्यवृत्तिर्या भाविकं तदुदाहृतमिति'' लक्षणात्- एवमादयो गुणा अन्येऽपि बुद्धिमद्भिरूहनीयाः। किंचात्र संयुक्तकोमलवर्णबन्धेन कविना लक्ष्मीविषयकभावप्रकाशनाद्भारती नाम वृत्तिः। ''ईषन्मृद्वर्थसंदर्भा भारती वृत्तिरिष्यत'' इति लक्षणात्। ''टवर्गवर्जितास्स्पर्शास्स्वस्व वर्गान्त्यशेखराः। लघुरेफणकारौ च कोमलाः परिकीर्तिताः। रेफेण यस्य कस्यापि योग आद्यतृतीययोः। स्वोत्तराभ्यां तुल्ययोर्वा

दीर्घान्तरेफादयोऽल्पशः परुषवर्णास्सन्ति- तथापि न माधुर्यभङ्गः- तद्भूयस्त्वस्यैव माधुर्यभङ्गहेतुत्वात्। तदुक्तं आन्दवर्धनाचार्येण- ''शषौ च रेफसंयोगष्टवर्गश्चापि भूयसा। विरोधिनस्स्युश्शृङ्गारे- ते न वर्णा रसच्युता'' इति। शृङ्गार इत्येतत्कोमलवर्ण संदर्भाभिव्यङ्ग्य रसान्तरोपलक्षकम्। एवं सर्वत्रापि ऊह्यम्। रीतिस्तु पाञ्चाली। ''बन्धपारुष्यरहिता शब्दकाठिन्यवर्जिता। नातिदीर्घसमासा च वैदर्भी रीतिरिष्यते। ओजः कान्तिगुणोपेता गौडीया रीतिरिष्यत'' इति चोक्तलक्षणरीतिद्वयसांकर्यदर्शनात्। तदुक्तं विद्यानाथेन। ''पाञ्चालरीतिर्वैदर्भीगौडीरीत्युभात्मिके''ति। पदविनिमयासहिष्णुत्वाद्बन्धस्य पदानुगुण्यरूपा शय्या चात्र सुन्दरतरा- ''या पदानां पराऽन्योन्यमैत्री शय्येति कथ्यत'' इति लक्षणात्। अत्र पाठसमयेऽपि लक्ष्मीविषयकभक्तिभावस्यास्वाद्यमानत्वाद्द्राक्षापाकः- ''द्राक्षापाकस्स कथितो बहिरन्तस्स्फुरद्रस'' इति लक्षणा तत्। पाको नामार्थगम्भीरिमा- ''अर्थगम्भीरिमा पाक'' इति लक्षणात्। अत्र प्रार्थनवाक्यस्यैवेदृश गुणादि सौन्दर्यवैशिष्ट्येन कथनाद्वक्ष्यमाणायां स्तुतावेवमेव गुणादि पौष्कल्यं त्वत्कृपयाऽविर्भूयादिति कवेराशंसाऽभिव्यज्यत इत्यलं बहुना ॥22॥

मू. **पद्यानां दशभिर्यदस्तुत शतैस्त्वत्प्रेयसः पादुकाम्**
**त्रय्यन्तार्यकविः परो हयमुखस्तत्राम्ब! को विस्मयः।**
**स्तोकप्रज्ञमतीव मूकमपि मां श्लोकैस्सहस्रेण ते**
**स्तोतारं समवेक्ष्य सूक्ष्ममतिभिः कस्मान्न विस्मीयते॥** **23**

ननु कियानयं संरम्भो यत्पश्चाद्रचयसि वा न वा श्रीविषये श्लोकान् -अथ सहस्रमपि- चेद्रचयसि, तदाऽपि कुशाग्रीयमतीनां वाचस्पति प्रभृतीनामपि स्फुटतरविषयपौष्कल्यास्फुरणे- वर्णयितुमशक्यां श्रीभगवत्पादुकामधिकृत्य एकयाममात्र निरर्गळ विनिर्मितानवद्यपद्यसहस्रे- श्रीमन्निगमान्तमहादेशिकमणिषु हृदयस्थेषु न कश्चिदपि विस्मयः पारे परार्ध पद्यनिर्माणानुगु- लावण्याद्येकैकगुणभूमत्वाज्जगज्जनन्या इत्यत आह। पद्यानामिति। हे अम्ब- पद्यान- श्लोकानां दशभिर्दशसंख्याकैः- शतैः- सहस्रेणेत्यर्थः- सहस्रेणेति वक्तव्ये दशभिश्शतै इत्युक्तिवैचित्र्यं श्लोकपौष्कल्यप्रदर्शनार्थम्- शतगत बहुत्वविवक्षया शतशब्दस्- बहुवचनम्- त्वत्प्रेयसः- श्रीरङ्गनाथस्य पादुकां पदावनीं- ''अथ पादुका- पादू''रित्यमरः अस्तुत अस्तौदिति यत्-स्तौतेः कर्तरि लङ्-तत्र स्तुतिविषये-को विस्मयः-न कोऽपि विस्म-

स्वच्छः- अन्यथा सबुद्धिसमर्पक पदावश्यभावेन तदध्याहारप्रसङ्गात्। न चास्मिन्नपि पाठेऽस्तीत्यस्यावश्यकतया तुल्योऽध्याहार प्रसङ्ग इति वाच्यम्। भाष्यानुशासनतो "भवन्ति परस्या" स्तेरप्रयुज्यमानस्यापि सद्भावेनादोषात्- स्तोका अल्पप्रज्ञा यस्य तं तथोक्तं "स्तोकाल्पक्षुल्लका" इत्यमरः- प्रज्ञाकार्श्येऽपि किं वाग्मिता वाऽस्तीत्यत्राह- अतीव मूकमिति। मुकं वागिन्द्रियविकलमपि। अतीवेत्यनेन मौक्यस्याजन्मसिद्धत्वं सूचितम्- मूढमिति पाठस्तु वृत्त्यनुप्रासभङ्गप्रसङ्गाद्विवक्षितस्तुतिवचनासामर्थ्यरूपार्था-पोषकत्वाच्चोपेक्ष्यः- अनेन त्रय्यन्तगुरोस्स्वस्य च महदन्तरमिति व्यञ्जितम्।

सहस्रेण श्लोकैः सहस्रसंख्याकैः पद्यैः- न तु दशकशतकादिक्षुद्रप्रबन्धेनेति भावः- "विंशत्याद्यास्सदैकत्वे सर्वास्संख्येयसंख्ययोः- संख्यार्थे द्विबहुत्वे स्त" इति नामलिङ्गानुशासनात् सहस्र शब्दस्यैकवचनस्यापि श्लोकैरिति बहुवचनांत विशेषणत्वमविरुद्धम्- आ दशसंख्यास्संख्येये इत्यत्र दशशब्दश्रुतिपर्यन्तमिति व्याख्यानाद्यथा दशशब्देनाष्टादश पर्यन्तसंख्यायास्संग्रहः- एवं विंशतिशब्देनापि विंशतिश्रुतिपर्यन्तसंख्यायास्संग्रहः- आद्यशब्देन परार्धपर्यन्त संख्या गृह्यन्ते- एकेन विंशत्याद्यास्सर्वास्संख्याः संख्येय संख्ययोः संख्येयेषु बहुषु घटादिषु संख्यायां च वर्तमाना अपि सदा एकत्वे एकवचन एव वर्तन्ते- यदा च संख्यार्थे संख्यान्तरस्याभिधेये विंशत्यादयो वर्तन्ते, तदा द्विवचन बहुवचने स्त इति तदर्थः- यत्तु सहस्रेण श्लोकैः पादुकासहस्रेणेति पाश्चिमः- तत्प्रामादिकं- लक्ष्मीमधिकृत्यैवेदं सहस्रं प्रवृत्तमिति स्वेनापि ज्ञातत्वात्। ते- स्तोतारं- स्तौतेः कर्तरि तृच्- "कर्तृकर्मणो"रिति षष्ठी- अनेन पादुकास्तत्रापेक्षया स्वस्य व्यतिरेकः प्रदर्शितः- समवेक्ष्य सम्यग्विचारपूर्वकं विलोक्येत्यर्थः- सूक्ष्ममतिभिः- "स्पृशन्ति शरवत्तीक्ष्णास्स्तोकमन्तर्विशन्ति" चेत्युक्तरीत्या कुशाग्रीयमतिभिरित्यर्थः- अनेन विमर्शकौशलमुक्तं भवति- सूक्ष्ममतीनामप्यनवधानेन दर्शनेऽन्यथाग्रहोऽपि स्यात्। स्थूलमतीनां तु सम्यगवेक्षणेऽपि "बहुस्पृशाऽपि स्थूलेन स्थीयते बहिरश्मव"दित्युक्तरीत्या वस्तुतत्त्वमेव दुर्विज्ञानं स्यादिति सूक्ष्ममतिभिस्समवेक्ष्येत्युक्तम्। कस्माद्धेतोः - न विस्मीयते नाश्चर्यं प्राप्यते- विपूर्वकात् स्मयतेर्भावे लट्- यन्महतामपि दुष्करं कार्यं तदेव चेत्क्षोदीयांसो निर्वर्तयेरन् कुतो न विमृशन्तो विस्मयेरन्निति भावः- अत्र पूर्वार्धे पादुकासहस्रप्रणयन विस्मयाभावरूपवाक्यार्थस्य परो हयमुख इत्यनुभयताद्रूप्यरूपक

"या पृथक्पदता वाक्ये माधुर्यं तन्निगद्यत" इति लक्षणात्। अर्थप्रतिपादने वाक्यस्य निराकाङ्क्षतया परिपूर्णत्वादर्थव्यक्तिर्नाम गुणश्च- "यत्तु संपूर्णवाक्यत्वमर्थव्यक्तिं वदन्ति ता"मिति लक्षणात्। एवमन्येऽपि गुणा यथा संभवमुन्नेयाः ॥23॥

मू. मन्ये सत्स्वपि वाङ्मयेषु विदुषामन्येषु धन्यैर्बुधै
रुक्तिर्मे भुवि देवि! तावकगुणस्पर्शादुपादीयते।
भद्रे! त्वद्रमणप्रशस्तचरणद्वंद्वैकसंसर्गतो
भर्गस्स्वर्गधुनीं बिभर्ति शिरसा भूयस्सु सत्स्वम्बुषु ॥ 24

ननु लुठन्ति दिशिदिशि पारेपरार्थं भट्टबाणप्रभृतिमहाकविशिरोमणिप्रणीता निर्भररसभावगर्भालंकारानुबन्धाः प्रबन्धाः। के नु नाम त्वत्कृतिमिमामाद्रियेरन्नित्यत्राह मन्य इति। हे देवि- अन्येषु रसालंकारनिर्भरेषु विदुषां महाकवीनां- वाङ्मयेषु प्रबन्धेषु "एकाचोमयण्नित्य"मिति वाक्छब्दाद्विकारार्थे मयट्। सत्स्वपि जागरूकेष्वपीति यावत् "षष्ठी चानादर" इत्यत्र चकारादनादराधिक्ये भावलक्षणसप्तमी। धन्यैः- यादृच्छिकादिसुकृतपरिणामवद्भिरिति यावत्- बुधैः- विद्वद्भिः- धन्यैरित्यनेन- "नाधन्यः केशवं स्तौति ना धन्योऽर्चयति प्रभुम्। नमत्यधन्यो न हरिं नाधन्यो वेत्ति माधव"मित्युक्तरीत्या अधन्यानां त्वदीयस्तवोपादानं दुर्घटमिति व्यज्यते। बुधैरित्यनेन त एव बुधाः, ये त्वद्गुणस्तवमुपाददते न त्वितरे- इति व्यज्यते। मे उक्तिः वक्ष्यमाण प्रबन्धरूपा उक्तिरेव- सर्वं वाक्यं सावधारणमिति न्यायात्- वक्ष्यमाणगङ्गादृष्टान्तानुरूप्याय सावधारणत्वेन व्याख्यानम्। तवेमे तावकाः युष्मच्छब्दादेकवचनादणि तस्य तवकादेशः - ये गुणाः वात्सल्यसौशील्यादयः तेषामेव स्पर्शात्संबन्धादित्यवधारण गर्भस्समासः- अब्भक्ष इत्यादिवत्- वक्ष्यमाण चरणद्वंद्वैक संसर्ग इति दृष्टान्तानुरोधात्। भुवि भूम्यां अविशेषेण सर्वत्रेति भावः- उपादीयते स्वीक्रियते इति मन्ये- उपादीयत इति वर्तमान सामीप्याभिप्रायेण भविष्यति वर्तमान निर्देशः- अनेनोपादानस्य सार्वकालिकत्वं द्योतितम्। "न यद्वचश्चित्रपदं यशो हरेर्जगत्पवित्रं प्रगृणीत कर्हिचित् मृषागिरस्ता ह्यसतीरसत्कथा न कथ्यते यद्भगवानधोऽक्षज" इत्याद्युक्तरीत्या त्वद्गुणसंस्पर्श

मङ्गळपदं तवेदं नाभिध रूपनिपतितं श्रीरसि यतः। प्रसून पुण्यन्तीमपि परिमळोद्धिं जिगदिषुर्नचैवंत्वादेवं स्वदत इति कश्चित्कवयत" इत्युक्तरीत्या "मङ्गळानां च मङ्गळ" मिति मङ्गळतमत्वेनोक्तस्य भगवतोऽपि मङ्गळत्वे त्वत्संबन्ध एव नियामकः- न तु तव तथात्वे नियमाकान्तरापेक्षेति द्योतितम्। भूयस्सु अतिशयेन बहुषु- अम्बुषु पुण्यतीर्थेषु- सत्सु विद्यमानेष्वपि- विद्यमानान्यप्यनेकानि पुण्यतीर्थान्यनादृत्येत्यर्थः- पुर्ववत्सप्तमी- केवलाम्बुपदं विष्णुपदीप्रसङ्गे इतरेषामपुण्यतीर्थत्वद्योतनाय- भर्गः हरः- त्वद्रमणस्य श्रीनिवासस्य प्रशस्तं यच्चरणद्वंद्वं। "द्वंद्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगा- भिव्यक्तिष्वि"ति सूत्रेणाभिव्यक्त्यर्थे स्वार्थे द्विशब्दस्य द्विर्वचनं पूर्वपदस्याम्भावोऽत्वं चोत्तरपदस्य नपुंसकत्वमेकवद्भावश्च निपात्यते- अत्यन्तसहचरितत्वेन लोकविज्ञानमत्र अभिव्यक्तिः। "अत्यन्तसहचरिते लोकविज्ञाते द्वंद्वमित्युपसंख्यान" मिति वार्तिकात्। अत एवाभिव्यक्तौ साहचर्येणेत्युक्तं मूले। तेन द्वंद्वं संकर्षणवासुदेवावित्यत्रेव द्वौ युधिष्ठिरार्जुना- वित्यत्र न भवति। द्वंद्वं न्यग्रोत्यत्र वीप्सायां द्वित्वं- अन्यत्र स्वार्थे- द्वंद्वं प्रशस्तचरणौ प्रशस्त चरणद्वंद्वमिति समासः- राजदन्तादेराकृतिगणत्वाद्द्वंद्वशब्दस्य परनिपातः- अन्यथा द्विशब्दात् स्वार्थे द्वंद्व इति निपातनाद्द्वंद्वं संकर्षणवासुदेवावित्यत्रेव तस्य च विशेषणत्वावश्यंभावेन परनिपातानापत्तेः। अत्यन्तसहचरितत्वेन लोकविज्ञातौ प्रशस्तचरणावित्यर्थः- न च ब्राह्मणानां विंशतिरित्यादाविवात्रापि षष्ठीसमासश्शक्यः कर्तुम्- "आ दशतस्संख्यास्संख्ये- ये वर्तन्ते न तु संख्याया" मिति भाष्येण द्विशब्दस्य संख्येयमात्रवाचित्वेन संख्यासंख्येयोभय वाचित्वाभावात्। यद्वा। द्वंद्वशब्दः कश्चिदस्मादेव सूत्रात्सिध्यति द्वयशब्दानतिरिक्तार्थकः- "योगविभागादन्यत्रापि द्वंद्व इष्यत" इति मूलोक्तेः- तेन षष्ठीसमासः-प्रशस्तचरणयोर्द्वंद्वं प्रशस्तचरणद्वंद्वमिति- अत एव "द्वंद्वं द्वयं हिमोष्णादिकलहो मिथुनं रह" इति रत्नमालोक्तं "द्वंद्वं कलहयुग्मयो" रित्यमरसिंहोक्तं च संगच्छते। वस्तुतस्तु। योगविभागस्य भाष्यानारूढत्वात् पूर्वोक्तैवोपपत्तिस्स्वारसिकी- द्वंद्वयुद्धानीत्यत्र तु मर्यादावचनेन सिद्धम्- एषा हि युद्धमर्यादा- शीतोष्णादिषु तु अभिव्यक्तौ- सहचरितत्वं शब्दप्रयोगे बोध्यम्। चार्थे द्वंद्व इति संज्ञाशब्दोऽव्युत्पन्नः- अवयवार्थाभानादिति शब्देन्दुशेखरे स्पष्टम्। अथ कथं- चिद्द्वयार्थकः कश्चिदव्युत्पन्नो द्वंद्वशब्दोऽप्यभ्युपगम्येत, तदा षष्ठीसमासे, न, काप्यनुपपत्तिः।

"वियद्विहारी वसुधैकगत्ये"ति नैषधीयश्लोकव्याख्यावसरे- "एकस्यां गतिर्यस्सास्सा एकगतिः- वसुधायामेकगतिर्वसुधैंकगतिः- शिवभागवतवत्समास" इत्युक्तम्- यद्वा- "गमकत्वादेव शिवस्य भगवतोभक्त इत्यर्थे शिवभागवत इत्ययश्शूलेति सूत्रे भाष्यप्रयोगः- परंतु तत्र वृत्तिरेव- न तु शिवस्य भगवत इति वाक्यं साधु- तत्र भगवच्छब्दादण् शिवपदेन भगवच्छब्दस्य समासश्च युगपदेव बोध्यम्। तथोपस्थितिश्च समुदायशक्तिसाध्ये"ति समर्थ सूत्रे शेखरोक्तरीत्या प्रशस्तचरणद्वंद्वस्यैकस्य संसर्ग इत्यर्थे प्रशस्तचरणद्वंद्वैकसंसर्ग इति युगपदेव समासः- अत एव "तदेकदासीत्वपदात्- तदेकलुब्धे" इति च विगृहीतं मल्लिनाथेन।

परेतु- "यदेकशेषं यदेकनियाम्यं यदेकधार्यं- त्वदेक रक्ष्यस्य मम- भक्त्येकलभ्ये पुरुषोत्तमे तु- शब्दैकसमधिगमे" इत्यादि प्रामाणिकतमप्रयोगसहस्रप्राचुर्यदर्शनादीदृश समासानां चिन्मात्रमित्यादीनामिव मयूरव्यंसकादित्वेन साधुताकल्पनं साधीयः- इयांस्तु विशेषः- चिन्मात्रमित्यादौ द्वयोरेव पदयोस्समासः- यदेकशेषमित्यादौ तु त्रयाणां युगपदिति- मात्रशब्दैकशब्दयोरवधारणार्थकत्वं तु तुल्यमेव- चिदेव चिन्मात्रमितिवच्चरणद्वंद्वस्यैव संसर्गश्चरणद्वंद्वैक संसर्ग इत्यस्व पदविग्रहः- अत एव मितगद्याधिकारे अशेषशेषतैकरतीत्यत्र अशेषशेषतायामेव रतिरशेषशेषतैकरतिरित्याचार्यैर्विगृहीतं च योयुज्यते। "वैधव्यैकफलां श्रिय"मित्यत्र वैधव्यमात्र फलामिति संजीविन्यां मल्लिनाथोक्तिरप्यत्रैवानुकूला- शास्त्रान्तराननु शिष्टेदृशप्रामाणिकप्रयोगनिर्वाहायैव हि मयूरव्यंसकादिगणाद्यारम्भः कृतः पाणिनिना भगवता- तथाचानुगृहीतं तत्त्वटीकायां श्रीमदाचार्यैस्स्थेमपदसाधुताविचारावसरे "ईदृशानां प्रयोगाणामबहिष्कारसिद्धये। बहुधा बहुळादीनामष्टाध्याय्यामुपक्रम" इत्याहुः इति॥

यद्वा। एको मुख्यः केवलो वा संसर्गः एकसंसर्गः- "एकमुख्यान्यकेवला"इत्यमरः। ततः प्रशस्तचरणद्वंद्वस्यैकसंसर्ग इति षष्ठीसमासः- अथ वा- एकस्य संसर्गः एकसंसर्गः- गमकत्वात्समासः- चरणद्वंद्वे एकसंसर्गश्चरणद्वंद्वैक संसर्गः- चरणद्वंद्वमध्ये एकस्य वामपादस्य संसर्ग इत्यर्थः- वरमयमेव पक्षो "विष्णुवामपदाङ्गुष्ठनखस्रोतोविनिस्सृते" इत्यादि प्रमाणानुगुण्यात्- संसर्गात् संसर्गतः- पञ्चम्या आद्यादित्वात्तसिः- स्वर्गधुनीं स्वर्गङ्गामेव शिरसा उत्तमाङ्गेन- न त्वङ्गान्तरैरिति भावः- अनेन तद्गरिमातिशयो द्योतितः- बिभर्ति धत्ते- वर्तमाननिर्देशेन धारणस्य निरन्तरानुवृत्तिस्सूचिता- अत्र "द्रवीभूतस्तदा धर्मो हरिभक्त्या महामुने। गृहीत्वा धर्मपानीयं पदं नाथस्य तुष्टये। क्षाळितं परया भक्त्या

पाद्यार्घ्यादिभिरर्चितम्। तदम्बु परया भक्त्या दधार शिरसा हरः- पावनार्थं जटामध्ये योग्योऽस्मीत्यवधारणात्- वर्षायुतानथ बहून्न मुमोच तथा हरः।'' इतीश्वरसंहितायां ब्रह्मोक्तं, ''तथेति राजाभिहितस्सर्वलोकहितश्शिवः। दधारावहितो गंगां पादपूतजलां हरे''रिति श्रीभागवतोक्तं चानुसंधेयम्। अत्र कविसूक्तिगङ्गादीनां बिम्बप्रतिबिम्बभावे चे त्कवेः संरम्भ-स्तदा दृष्टान्तालंकारः-पूर्वोत्तरार्धयोस्समर्थ्य समर्थक भावे चेत्संरम्भस्तदा काव्यलिङ्गमित्युभ-यथापि संभवादनयोस्संदेहसंकरः। काव्यलिङ्गालंकारकक्ष्यायां परंपरया लक्ष्मीसंबन्धादेव गङ्गायास्सर्वज्ञमाननीयत्वे सिद्धे साक्षात्तद्गुणसंबन्धेऽस्य प्रबन्धस्य सर्वज्ञ माननीयत्वं कैमुत्य-सिद्धमित्यर्थस्य प्रतीतेः काव्यार्थापत्त्यलंकारो व्यज्यते। किंच। पूर्वार्धे काव्यस्य लक्ष्मीगुण संस्पर्शलक्षणगुणेनैकेनैव विदुषां एतदादरणान्यकाव्यानादरणरूपगुणदोषयोर्वर्णनादुल्लास अलंकारद्वयम्- उत्तरार्धेऽपि गङ्गाया (काव्यस्य) श्श्रीवल्लभचरणारविन्द संसर्गरूप गुणैनैकेनैव सर्वज्ञस्य तन्माननान्यजलानादरणरूपगुणदोषयोर्वर्णनादुक्तालंकारद्वयमेव- ''एकस्य गुणदोषाभ्यामुल्लासोऽन्यस्य तौ यदी''ति लक्षणात्। अनयोर्द्विकयोरन्योन्य नैरपेक्ष्यात्संसृष्टिः-उक्तसंदेहालंकारेणैषामुल्लासानां वृत्तयनुप्रासस्य चैकवाचकानुप्रवेशसंकर इति संक्षेपः॥24॥

**मू. तव स्तोत्रे मन्दाः कतिचिदतिचित्रेऽपि कमले !**
**न विन्दन्त्यानन्दं यदि तदपि* न म्लायति मनः।**
**सृजेदेव स्रष्टा स किल विपुलेऽस्मिन् क्षितितले**
**चमत्कारानन्दानुभवचतुरान्यत्रिचतुरान्॥ 25**

नन्वेवं महताऽपि प्रयत्नेन रसभावगभीरमधुरोदारमपि यद्यपि रचयेः प्रबन्धं लक्ष्मीविषये- अथापि ''प्रायेणाल्पायुषस्सभ्याः कलावस्मिन्युगे जनाः। मन्दास्सुमन्दमतयो मन्दभाग्या ह्युपद्रुताः''। ''रसज्ञा दुर्लभाः कलौ'' इत्याद्युक्तरीत्या मन्दभूयिष्ठे जने दौर्लभ्यात् रसज्ञानामिदानीं त्वत्प्रयासो लभेत वैतथ्यमेव, कान्तार इव शारदकौमुदी- तेन भजेत हृदयमतितरां म्लानिमानमेव- ततो ''यत्र सूक्तं दुरुक्तं च समं स्यान्मधुसूदन। तत्र नैवालपेत् प्राज्ञो बधिरेष्विव गायनं'' इति भारतोक्तरीत्या वरं जोषंभाव एवेत्यत्राह। **तवेति**। हे कमले-अतिचित्रे शब्दतोऽर्थतश्चात्यन्तविस्मयनीयेऽपि- अनेनानन्दनावश्यंभावहेतुर्गर्भितः-स्वरूपतो वैलक्षण्यमप्युक्तम्- न केवलमेतावदेव- अपि तु विषयवैलक्षण्यमप्यस्तीत्याह। तवेति-तव स्तोत्रे ''विचित्रवाग्भूतिकरीं यशस्विनीं-नवं नवं स्पष्टसुवाक्यदायिनीं'' इत्वाथर्वण

मन्दा इति। "तरवः किं न जीवन्ति- भस्त्राः किं न श्वसन्ति च। न खादन्ति न महन्ति किं ग्राम्याः पशवोऽपरे। श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः। न यत्कर्णपथोपेतं जातु नाम गदाभृतः।" इत्याद्युक्तप्रकारा मूढा एवेत्यर्थः- ते हि- "वाचाटोक्तौ वागमृते वा सुकवीनां स्तोकप्रज्ञास्तुल्यदृशो हन्त भवन्ति। गोमायुनां कोकिलयुनामपि शब्देष्वेकाकारा मानसवृत्तिर्महिषाणा"मित्युक्तरीत्या सारासारविभागगन्धमपि न जानन्ति- मन्दा इत्यनेनाभाग्याः मत्सरमलीमसतया परगुणग्रहापटवश्च गृह्यन्ते- "मूढाल्पापटुनिर्भाग्याः मन्दा" इत्यमरः। यथाकथंचिद्रसग्रहणकौशलेऽपि- "रोचते भाग्यहीनानां न गोविन्द कथामृत"मिति- "मत्सरग्रस्तचित्तानां दोषायन्ते गुणा अपी"ति चोक्तरीत्या न रोचते, हि, तेभ्योऽयं स्तवः- आनन्दं रसास्वादनेन विगळितवेद्यान्तरमानन्दमित्यर्थः- यदीत्यस्य यद्यपीत्यर्थः। यद्यपीत्यवधारण इति केशवः। तदप्रीतिप्रतिनिर्देशस्वारस्यात्। न विन्दन्ति यद्यपि, न प्राप्नुवन्त्येव- तदपि तथापि तेषामानन्दालाभेऽपि- मनः- मम चेतः- न म्लायति, हर्षक्षयं न प्राप्नोति- आरण्यक-निसर्गजडक्लीबानभिनन्दितयौवनोन्मत्तमत्तकाशिनी-विभ्रमस्येव अस्यानपराधादिति भावः- "म्लै हर्षक्षये" अस्मात्कर्तरि लट्- वर्तमान निर्देशेन कदाचिदपि ग्लानिसंभावनापि न संभवतीति द्योतितम्। अत्र "तान् शोच्यशोच्यानविदो न शोचे- हरेः कथायां विमुखा नरा ये। क्षिणोति देवोऽनिमिषस्तु तेषामायुर्वृथावादगतिस्मृतीना"मित्यादयोऽप्यनुसंधेयाः।

नन्वेवमद्यत्वे सर्वेऽपि दृश्यन्ते तादृश एव युगमहिम्ना- न तु कतिचिदेव- तद्ग्रहीतृवैधुर्यप्रयुक्तप्रबन्धरचनावैयर्थ्यमूलकमानसम्लानिमा तव दुष्परिहर एव स्यादित्यत आह। सृजेदिति- यत् यस्मात् - सः- अवाङ्मनसगोचरविलक्षणवस्तुसृष्टिचातुरीप्रभावत्वेन-आकल्पान्तस्थायित्वेन च प्रसिद्ध इत्यर्थः। अत एवायं विनाऽपि यच्छब्दं प्रयुक्तः- तदुक्तं काव्यप्रकाशे "प्रक्रान्तप्रसिद्धार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षत" इति। स्रष्टा ब्रह्मा- सृजेस्तृन्- अनेन नैरन्तर्येण सर्जनशीलत्वमुक्तम्- "आक्वेस्तच्छीलतद्धर्म तत्साधुकारिष्वि"ति ताच्छील्ये तृनो विधानात्- तेनेतःपरं सर्जनासंभवसंभावना प्रतिक्षिप्यते। विपुले विशाले- "रुन्द्रोरुविपुल"मित्यमरः। इदं च रसग्राहिपुरुषसर्जनप्रवेशासंभव-संभावनां प्रतिक्षिपति। अस्मिन् परिदृश्यमाने "इदमः प्रत्यक्षगत"मित्युक्तेः- क्षितितले भूप्रदेशे- न द्वीपान्तरे, नापि लोकान्तरे वेति भावः- चमत्कारेण- अस्मद्विरचित शब्दार्थालंकारादिवैचित्र्येण- य आनन्दः- तस्यानुभवे उपलम्भे- "उपलम्भस्त्वनुभव"

निरूपितं विस्तरेण- ''बहुव्रीहौ संख्येये डजबहुगणा''दिति प्राप्तडचोऽपवादः। ''त्र्युपाभ्यां चतुरोऽजिष्यत'' इत्यच्प्रत्ययस्समासान्तः। सृजेदेव किल- ''सृजविसर्गे'' अस्मात्तौदादिकात् संभावनायां लिङ्। अत्र किलेत्यव्ययं निरर्थकं वाक्यालंकारमात्रप्रयोजनकम्। ''अळीकेऽनुनये किल'' ''वार्तासंभाव्ययोः किले''ति कोशोक्ताळीकानुनय वार्ताद्यर्थानामिहानुपयोगात्संभावनायाश्च लिङैवोक्तत्वात्- प्रार्थनाद्यर्थसाधारणं लिङ्गं संभावनायामेव स्पष्टं व्यवस्थापयितुं वा- अत्र क्रियासंगतोऽयमेवकारस्सर्जनात्यन्तायोगं व्यवच्छिनत्ति। इदानीं तादृशरसज्ञाभावेऽपि भविष्यति च काले भूयिष्ठतादृशजनसृष्टि दौर्लभ्येऽपि सति ब्रह्मणस्सर्जनताच्छील्ये, सति तस्य द्विपरार्धपर्यन्ते चायुषि, सति च विशाले भूतले त्रिचतुरा वा रसज्ञशिरोमणयः कथं न संभयेयुः- अतो यथा कथंचिद्येषां केषांचित् रसज्ञानां यत्र क्वचिद्यदाकदाचित्संभवसंभावनया, प्रबन्धरचनाप्रयासवैफल्य शङ्कासमङ्कूरिता ग्लानिर्नास्मानुपरुणद्धीति भावः।

चमत्कारनन्दानुभव चतुरांश्च त्रिचतुरानित्यपि पाठो दृश्यते- तदा चशब्दो वार्थकः- यत्त्वत्र द्वित्रिचतुरानिति पाठं परिकल्प्य द्वौ वा त्रयो वा चत्वारो वेति विजगृहे पाश्चात्यः- तन्न- ''संख्ययाव्यये''ति सूत्रे ''अनेकमन्यपदार्थे'' इत्यतोऽनेकमित्यस्याननुवृत्तेर्भाष्यतोऽवगमात्- तथाचा''नेकमन्यपदार्थे'' इति सूत्रे ''अथानेकग्रहणं किमर्थं''मित्यादिना अनेक ग्रहणप्रयोजनं परिचोद्य ''उत्तरार्थं च। उत्तरार्थं चानेकग्रहणं कर्तव्यं, चार्थे द्वंद्व'' इति भाषितम्- यद्यनेक मित्यस्य संख्ययाव्ययेत्यनंतरसूत्रेप्यनुवृत्तिरभिमता स्यात्तर्हि त्रिचतुर सूत्रातिलंघनेन चार्थे द्वंद्व इति सूत्रे तस्य प्रयोजनं न भाष्येत- नन्वेवमनन्तरसूत्रेषु तदननुवृत्तौ कथं चार्थ इति सूत्रे तदनुवर्त्येतेति चेन्मण्डूकप्लुत्येत्यवधेहि। न च त्रयो वा चत्वारो वा त्रिचतुराः- द्वौ वा त्रिचतुरा वा द्वित्रिचतुरा इति समासस्स्यादिति प्रत्यवस्थातव्यं- ते चतुरा इत्यजन्तस्यात्कारान्- तस्येव संख्यात्व वैधुर्येण ''संख्ययाव्ययेति'' सूत्राविषयत्वात्- तथाच तस्मिन्नेव सूत्रे भाष्ये- ''एवं तर्ह्येवं विग्रहः करिष्यते- द्वौ, दश, तौ, द्विदशा इति। एवमप्यत्कारान्तत्वात्संख्ययेत्यत्र न प्रसिद्धिः- न ह्यत्कारान्तसंख्याऽस्तीति''। अतो यथोक्तपाठस्साधीयान्।

अत्र लक्ष्मीस्तुतेरतिचित्रत्वरूपकारणपौष्कल्येऽपि मन्दानामानन्दरूपकार्या जननाद्विशेषोक्तिरलंकारः- ''कार्याजनिर्विशेषोक्तिस्सति पुष्कलकारणे'' इति लक्षणात्- मन्दा इत्यस्यानन्दानवाप्तिहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गं च- स्तोत्रातिचित्रत्वरूपगुणेन मन्दानामानन्दरूप गुणानुदयादेकोऽवज्ञालंकारः- मन्दानन्दापाप्तिरूपदोषेण चित्तम्लानिरूप

कविसंरम्भस्याशक्यनिश्चयत्वात्संदेहसंकरः- विशेषोक्तिसंरम्भपक्षे द्वैतीयीकावज्ञायाः तदुज्जीवितत्वेन विजातीययोरङ्गाङ्गिभावलक्षणस्संकरः। निरुक्तकाव्यलिङ्गस्योपपादित विशेषोक्तिप्राथमिकावज्ञाभ्यां यथायथमेकवाचकानुप्रवेशसंकरः- उत्तरार्धे तु- "ये नाम केचिदिहे"त्यत्रेव त्रिचतुररसिकपुरुषसृष्टेस्संभवाख्यप्रमाणसिद्धस्य वर्णनात्संभावनाख्य-प्रमाणालंकारः- स्रष्टा- विपुले- इति पदयोर्विशेष्यविशेषणरूपयोः सृष्टिनैरंतर्यरसज्ञ पुरुषसर्जनप्रदेशपौष्कल्यसंभवसंभावनाभिप्रायगर्भत्वात् परिकराङ्कुरपरिकरालंकारौ। उक्तालंकाराभ्यामुक्तसंभावनालंकारस्योत्तेजितत्वाद्विजतीयांगाङ्गिभावसंकरः। त्रिचतुरपुरुष-सर्जन संभवसंभावनरूपोत्तरवाक्यार्थेन मन्दानन्दालाभजनितचित्तम्लानिमाभावरूपपूर्व-वाक्यार्थस्य समर्थितत्वात्काव्यलिङ्गम्। अस्य च पूर्वोक्तविशेषोक्तिकाव्यलिङ्गावज्ञाभिः समर्थनीयवाक्यार्थगताभिः- उक्तपरिकराङ्कुरपरिकरसंभवालंकारैः समर्थकवाक्यार्थगतैश्च सहैकवाचकानुप्रवेशसंकरः- पूर्वार्धे द्वैतीयीकावज्ञालंकारः प्रधानीभूतः- उत्तरार्धे तु संभवाख्य प्रमाणालंकारः। विशिष्टश्लोके अंतिमकाव्यलिङ्गालंकार एव प्रधानीभूतः-कतिचिदतिचित्रेति सस्वरव्यञ्जनद्वयावृत्तिलक्षणयमकस्य चतुरांश्चतुरानिति सस्वरव्यञ्जनत्रयावृत्तिरूप यमकस्यानुप्रासस्य चाप्यभ्युच्चय इति दिक्- अत्र "ये नाम केचिदिह नः प्रथयन्त्यवज्ञां जानन्ति ते किमपि तान्प्रति नैष यत्नः-उत्पत्स्यते हि मम कोऽपि समानधर्मा कालो ह्ययं निरवधिर्विपुला च पृथ्वी"ति श्लोकच्छायोपजीवनात्कविना स्वस्य च्छायोपजीवित्वमपि प्रकाशितम्। तथा च कविकण्ठाभरणे "छायोपजीवी पदकोपजीवी पादोपजीवी सकलोपजीवी। भवेदथ प्राप्तकवित्वजीवी स्वोन्मेषतो वा भुवनोपजीव्य" इति। तत्र च्छायोपजीवी यथा भट्टभल्लटस्य "नन्वाश्रयस्थितिरियं तव कालकूट! केनोत्तरोत्तरविशेष विदोपदिष्टा। प्रागर्णवस्य हृदये शशिलक्ष्मणोऽथ कण्ठेऽधुना वससि वाचि पुनः खलाना"मिति। यथा च श्रीमदुत्पलराज देवस्य "मात्सर्यतीव्रतिमिरावृतदृष्टयो ये, ते कस्य नाम न खला व्यथयन्ति चेतः। मन्ये विमुच्य गलकन्दल मिन्दुमौळेर्येषां.सदा वचसि वल्गति कालकूट" इति। अत्र यथा भल्लटोक्तच्छाया उत्पल राजदेवस्योपजीव्या- तथा भवभूत्युक्ता छायाऽस्य कवेरुपजीव्येति ध्येयम्। वृत्तं शिखरिणी। लक्षणं तूक्तमधस्तात्॥25॥

मू. सुचारुमधुवी(मो)चिकारसमुचो वचो देवता-
कुचामृतकचाकचिप्रचुरचातुरीमेदुराः।
नरास्सततमिन्दिरागणकथासुधादोहिनी

गुणाधमात् - गुणाधिकाद्गुणाधमादिति ल्यब्लोपे पञ्चम्यौ- तौ दृष्ट्वेत्यर्थः- मूढान्दृष्ट्वा कृपायीत? हितं चैषां विबोधयेत्। लक्षणं हि सतामेतद्यन्मन्दानुग्रहो महा''नित्याद्युक्तरीत्या तेषु कृपाकरणावश्यंभावं तेषामपि श्रीस्तवे प्रवर्तनें''अज्ञानाय तु यो ज्ञानं दद्याद्धर्मोपदेशनम्। कृत्स्नां वा पृथिवीं दद्यात्तेन तुल्यं न तत्फल''मिति स्मरणान्महाफलं च पश्यन् ''सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु'' इत्युक्तरीत्या दयमानमनाः पामरपरीक्षकविभागानादरेण सर्वानपि नरान् श्रीस्तवोपासने प्रवर्तयते। **सुचार्विति**- हे नराः- नरा इति सामान्यतो निर्देशेन तेषां वक्ष्यमाण श्रीस्तवोपासने ब्रह्मोपासन इव जातिवृत्तवैदुष्यादि कृतविशेषो नापेक्षित इति द्योत्यते। अथ विचारादिक्षमत्वमस्तु वा मा वा-भवतां प्रावण्यमात्रेणाप्यमूभ्यो वाग्भ्यः सकलोऽपि पुरुषार्थस्सुलभ इति भावः- सुचारवः अत्यन्तरुचिराः- याः- मधुनः क्षुद्रस्य पुष्परसस्य वा वीचिकास्तरङ्गाः- वीचीनां तादात्विकवस्त्वन्तरक्षोभजन्यत्वेन वातातपाभि-घातातिरेकानास्वादिततया तत्स्वादिम्नो यातयामत्वं द्योतितम्। तासां रसं तत्सदृशं रसं स्वादं मुञ्चन्तीति तथोक्ताः- रसमाविर्भावयन्तीरित्यर्थः- (यद्वा सुचारुमधुवीचिकासु, रसमनुरागं- मोचयन्तीति तथोक्ताः- णिजन्तान्मुचेः कर्तरि क्विप्। स्वमधुरिमातिशयेन स्वास्वादिनां सुरुचिरमधुवीचिकासु रुचिमपचिन्वतीरित्यर्थः)- ''रसो गन्धरसे जले। शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः। देहधातुप्रभेदे च पारदस्वादयोःपुमा''निति मेदिनी। सुचारुमधुमोचिकेति पाश्चात्यपाठः- तदा सुचारुणो मधुनो मोचिकायाः कदळीफलस्य च रसं मुञ्चन्तीति तथोक्ता इत्यर्थः- ''रम्भो मोचांऽशुमत्फले''त्यमरः। मोचाशब्दः कदळीवृक्षवाची फले तु लाक्षणिकः- ततस्स्वार्थिकः कन्- प्रत्ययस्थादितीत्वं- वैकारिकाणः ''फले लु''गिति लुकि तु ''लुक्तद्धितलुकी''त्युपसर्जन स्त्रीप्रत्ययस्य लुकि मोचमिति स्यात्- ''द्विहीनं प्रसवे सर्व''मिति कोशात्- न चायं हरीतक्यादित्वेन ''हरीतक्यादिभ्यश्चे''ति लुपि ''हरीतक्यादिषु व्यक्ति''रिति प्रकृतिवल्लिङ्गातिदेशेन निर्वोढुं शक्यः- हरीतक्यादौ मोचाशब्दपाठाभावात्तस्य चानाकृतिगणत्वात्- पाठाभ्युपगमे तु न कश्चित्क्लेशः।

अनेन ''शिशुर्वेत्ति पशुर्वेत्ति वेत्ति गानरसं फणी''त्युक्तरीत्या गानवच्छ्रवणमात्रेण पशुप्रायाणाप्यानन्ददायित्वं व्यञ्जितम्- यथोच्यते ''अविदितगुणाऽपि सत्कविफणितिः कर्णेषु वमति मधुधाराम्। अनधिगतपरिमळापि हि हरति दृशं मालतीमाले''ति। वचोदेवतायाः सरस्वत्याः-कुचयोः-अमृतं-तदन्तस्संभृतं यत्क्षीरम्- ''स्याद्यज्ञशेषाम्बुनभो-रसायनक्षीराज्यसोमान्नसुधासु चामृत''मिति रत्नमाला। तेन सह-यत्कचाकचि-कचेषु कचेषु

कथं सूत्राक्षरलभ्यत इति चोदिते शब्दादिति गृह्यताम्। अत एवेतिशब्दादयं विषयविशेषो लभ्यत इति मूल एवोक्तम्- स हि लौकिकीं विवक्षां दर्शयति-लोके केशाकेशीत्यादि प्रयोगे यावानर्थः प्रतीयते तावत्यर्थे बहुव्रीहिर्भवतीति तदर्थः- ''इच्कर्मव्यतिहार'' इति समासान्त इच्प्रत्ययः- ''अन्येषामपि दृश्यत'' इतीचि कर्मव्यतिहारे बहुव्रीहौ पूर्वपदान्तस्य दीर्घः- तिष्ठद्गुप्रभृतिष्विच्प्रत्यय पाठादव्ययीभावत्वमव्ययत्वं च। तस्मिन् प्रचुरा प्रभूता ''प्रभूतं प्रचुरं प्राज्य''मित्यममरः। सरस्वती कुचामृत तिरस्कारिणीति यावत्- या- चातुरी रसभावादि चातुर्यं- ''गुणवचने''ति ष्यञि ''षिद्गौरे''ति ङीष्- तया- मेदुराः सान्द्रस्निग्धाः- ''सान्द्रस्निग्धस्तु मेदुर'' इत्यमरः- सान्द्रे घनः स्निग्धश्चिक्कणः घनाघनादिवच्चाकचक्य विशिष्टश्च मेदुर इति टीकासर्वस्वकृत्- ''ञिमिदास्नेहने'' इत्यस्मात् ''भञ्जभासमिदो घुरजि''ति घुरच् प्रत्ययः- अन्तस्संभृतं रसमुद्गिरन्तीरिव स्थिताः अत्यन्तरसनिर्भरा इति यावत्-उपमानभूतामृतस्य वाग्देवताकुचकुम्भसंबन्धित्वोक्त्या वाचां सकलविद्वदुपजीव्यत्वं द्योतितम्। सुचार्वित्यादि विशेषणे मधुवीचिकानिदर्शनेन बहिरन्तस्स्फुरद्रसत्वप्रतीतेः कासांचिद्वाचां ''द्राक्षापाकस्स कथितो बहिरन्तस्स्फुरद्रस'' इत्युक्त लक्षण द्राक्षापाक मधुरत्वं द्योतितम्। यद्वा मधुपाक एव विवक्षितः- मोचिकेति पाठे कदळीपाकोऽपीति विशेषः- अस्ति च मधुकदळ्यादि पाकान्तरं-अत एव- द्राक्षापाक नारिकेळ पाकावर्थस्य द्रुत विलम्बित प्रतीत्योः परां कोटिमारूढौ- अतस्तदन्तराळवर्तिन्या मध्यमप्रतीतेरनेकविधत्वात्तदनुसारेण कदळीरसालादि पाकास्स्वयमूह्या इत्यभिप्रायेण ''एवं मधुक्षीरादीनि यथा संभवमुह्यानीत्युक्तं विद्यानाथेन। स्पष्टं चैतद्रत्नापणे- अनेन विशेषणेन तु- सरस्वतीकुचकुम्भान्तस्संभृतामृत सदृशरसचातुरी गर्भितत्वोक्त्या कासांचिद्गिरां बहिः काठिन्यस्फूर्तावप्यन्तरुद्दामरस निर्भरत्व प्रतीतेः ''स नारिकेळपाकस्स्यादन्तर्गूढरसोदय'' इत्युक्तलक्षणनारिकेळपाकगभीरत्वं द्योतितम्। तेन सहृदयक्षोदक्षमत्वं व्यञ्जितम्- यद्वा- वचोदेवताकुचामृत कचाकचिविषये प्रचुरचातुरीमेदुराः अत्यन्तपेशला इत्यर्थः- अस्मिन्नर्थे कासांचिद्गिरां क्षीरपाकधाराळत्वं सूचितम्। एषां पाकानां विच्छित्ति विशेषास्तु सहृदय हृदयैकसाक्षिकाः। यदाहुः - इक्षुक्षीर गुडादीनां माधुर्यस्यान्तरं महत्। तथापि न तदाख्यातुं सरस्वत्याऽपि शक्यत'' इति। विशेषण द्वयेन कविगिरां स्वरूपतो वैलक्षण्यं सूचितम्।

अथ विषयवैलक्षण्यमप्याह। इन्दिरेति। इन्दिरायाः लोकमातुः-गुणानां वात्सल्य-सौशील्यादीनां कथा-कथनं- गुणप्रकाशकचरित्रं वा- सैव सुधा अमृतं- अनेन सर्वताप-निवर्तनलोकोज्जीवनाद्येकान्तशीलत्वं द्योत्यते। अत्र। ''[illegible]

इत्याद्युक्तः प्रकारोऽनुसंधेयः- दुहन्ति प्रपूरयन्तीति दोहिन्यः- ताः- "संपृचानुरुधे"त्यादि सूत्रे दुहेरुपादानान्निरुपपदादेव तस्मात्ताच्छील्ये घिनुणप्रत्ययः- "ऋन्नेभ्य" इति ङीप्- ततस्सुधाया दोहिनीरिति षष्ठीसमासः- न च सुप्युपपदे ताच्छील्ये णिनिरेवेति भ्रमितव्यं- "सुप्यजाता"वित्यत्र जाति पर्युदासेन सुधायाश्च जातिवाचितया तदसंभवात्। यद्वा। "बहुळमाभीक्ष्ण्य" इत्यनेन सुप्युपपदे णिनिरेव- अताच्छील्यार्थत्वादजात्यर्थत्वाच्च सूत्रस्याजातेरिति निषेधाप्रवृत्तेः- पुनः पुनर्दुहाना इत्यर्थः- अनेनास्पृष्टविषयान्तरत्वं द्योत्यते। अत एव सुधां दुहन्तीति सुधादोहिनीरिति केषांचिद्विग्रहप्रदर्शनमप्युपपद्यते। उदाराः- "श्रियं लोके देवजुष्टामुदारा"मिति श्रुतिप्रथितमहौदार्यलक्ष्मीगुणविषयप्रवृत्तया- ऐहिकामुष्मिकापवर्गिक सुखवितरणशीला इत्यर्थः- तथाचोक्तं नारदीये- "सा हि सर्वार्थदा वाणी या स्तुयाज्जगदीश्वरी"मिति। औदार्यलक्षणं च। "यद्विश्राणनताच्छील्यमौदार्यं तन्निगद्यत" इति- उदारा इत्यनेनौदार्यगुणवैशिष्ट्यं च ग्राह्यम्। तल्लक्षणं च। "विकटाक्षर बन्धत्वमार्यैरौदार्यमिष्यत" इति। विकटाक्षरबन्धत्वं च नर्तन बुद्ध्युत्पादक पदविन्यासः- यथास्मिन्नेव पद्ये- अयमेव हि गुणः पदविन्यासवैचित्र्यनिदानं- तदुक्तं रत्नापणे। विकटत्वं च बन्धस्य कथयन्ति ह्युदारताम्। वैचित्र्यं न प्रपद्यन्ते यया शून्याः पदक्रमा" इति। इदं गुणान्तरवैशिष्ट्यस्याप्युपलक्षकम्- वेङ्कट इत्यध्वरी यज्वा- प्रशंसायां भूम्नि वा मतुप्- "नामोक्तावर्धोक्तिः पूर्णोक्तेः कार्यकरी"ति न्यायाद्वेङ्कटनाथ इति वक्तव्ये वेङ्कट इत्युक्तिः- यद्वा वेङ्कट इत्येतावदेवास्य नाम। गिरिनाममात्रधारणस्यापि लोके प्रसिद्धेः- स एव कविः क्रान्तदर्शी- काव्यकर्तेत्यर्थः- कविशब्देनास्य ब्रह्मवेत्तृत्वमपि सूचितम्- "दुर्गं पथस्तत्कवयो वदन्ती"त्यादौ ब्रह्मविद्विषये कविशब्दप्रयोगात्- अध्वरिकविशब्दाभ्यामस्य यथाक्रमं पूर्वोत्तरमीमांसापारीणत्वं सूच्यते। तेनैतत्सूक्तीनां तत्र तत्रोभयमीमांसार्थमांसलत्व-मपि द्योत्यते। गिरः प्रबन्धरूपा वाचः- अनेन कर्तृवैलक्षण्यमपि सूचितम्।

न चात्र स्वकृतेः स्वेनैव कर्तृवैलक्षण्य सूचनमनुचितमिति वाच्यम् - संप्रदायस्यास्य कविकुलक्षुण्णत्वात्। अत एव "प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः। चकार चरितं कृत्स्नं विचित्रपदमात्मवा"निति भगवता वाल्मीकिना स्वकाव्यस्योक्तविधवैलक्षण्य-प्रतिपादनं संगच्छते- रामस्येत्यनेन विषयवैलक्षण्यं- भगवानृषिरित्यादिना कर्तृवैलक्षण्यं- विचित्रपदमिति स्वरूपवैलक्षण्यं चात्रोक्तमिति ध्येयम्- "विंशत्यब्दे विश्रुतनानाविधविद्य" इत्यादिकमप्यत्रैवानुकूलम्- इह- सर्वं वाक्यं सावधारणमिति न्यायादिहैव। पुरोवर्ति

[illegible] महता पुण्यपण्येन क्रीतेयं कायनौस्त्वया। प्राप्तुं दुःखाम्बुधेः पारं त्वर यावन्न भिद्यते। मानुष्यं प्राप्य लोकेऽस्मिन्मूको वा बधिरोऽपि वा। नापक्रामति संसारात्स खलु ब्रह्महा भवेत्। शुभमिदमुपलभ्य मानुषत्वं सुकृतशतेन वृथेन्द्रियार्थहेतोः। रचयति कुरुते न मोक्षमार्गं स दहति चन्दनमाशु भस्महेतो''रित्यादिकमपीहानुसंधेयम्- सततं- संततं अविच्छेदनेत्यर्थः- अनेन ज्योतिष्टोमादीनामिवास्य कालविशेषापेक्षित्वमपि नास्तीति द्योतितम्- ''समो वा हिततयो''रिति समो मकारस्य लोपः- उपाध्वं- विजातीय प्रत्ययाव्यवधानेन चिन्तयध्वं- उपपूर्वकादासधातोरादादिकाल्लोण्ममध्यम पुरुष बहुवचनम्- ''धिचे''ति धादौ प्रत्यये परे धातुसकारलोपः- वेङ्कटाध्वरिकविगिरामुपासनं कुरुध्वमित्यर्थः- उपासनं च ''विजातीय प्रत्ययाव्यवहितमनवरतभावनात्मकं ज्ञानमित्यभाषि- अनेनैतासां वाचां ब्रह्मतौल्यं द्योत्यते। अत एवोपमालंकारध्वनिः।

अत्र सुचार्वित्यादि विशेषणे मधुवीचिकारसस्यान्य धर्मस्यान्यत्र कविवाणीष्वसंभावेन तत्सादृश्ये पर्यवसानादसंभवद्वस्तुसंबन्धनिबन्धना निदर्शना- (द्वैतीयीक व्याख्यानपक्षे- वाण्या मधु-वीचिकानुरागमोचकत्वासंबन्धेपि तत्संबन्धवर्णनादतिशयोक्तिभेदः- स च वक्ष्यमाणरीत्यौपम्य एव विश्राम्यतीत्युपमा- एवमुभयथाऽपि कविसंरम्भस्य संभावनीयत्वात् अनयोस्संदेहसंकरः।) वचोदेवतेत्यादि विशेषणे कचाकचीत्यादेरौपम्ये पर्यवसानादुपमा- ''इववद्वायथाशब्दा'' इत्युपक्रम्य ''तेन सार्थं विगृह्णाति तुलां तेनाधिरोहती''त्याद्युक्त्वा- ''तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति। तस्य वाऽनुकरोतीति शब्दास्साधर्म्यवाचका'' इति दण्डिनेदृशशब्दानां साधर्म्यार्थबोधकत्वाभिधानात्। विस्तरस्त्वस्मिन्नेव स्तबके तृतीयश्लोकव्याख्यायां द्रष्टव्यः- अमृतस्य स्वतो मधुरत्वेन तदुत्कर्षहेतोरपि वाग्देवताकुच संबन्धित्वस्य हेतुत्वकल्पनात् प्रौढोक्तिर्नामालंकारः- ''प्रौढोक्तिरुत्कर्षहेतौ तद्धेतुत्व प्रकल्पनम्- कचाः कळिन्दजातीरतमालस्तोममेचका'' इति लक्ष्यलक्षण संग्रहकृत्- तदुत्तम्भित उपमालंकार इति विच्छित्तिविशेषः- अत्रापि किं केवलोपमायां कवेस्संरम्भः- आहोस्वित्प्रौढोक्त्युत्तम्भितायामित्युभयधापि संभवात्संदेहसंकरः।

इन्दिरा गुणकथायां केवलायां सुधात्वरूपणान्निरवयवरूपकम्- इन्दिरागुण कथासुधादोहिनीरिति पदार्थेनोदारा इत्युक्तौदार्यस्य समर्थितत्वे नैकपदार्थहेतुकं

काव्यलिङ्गम्। गिरामुपासनास्य सुचार्वित्यादि सर्वविशेषणैस्समर्थनादनेकपदार्थहेतुकं काव्यलिङ्गं प्रधानीभूतम्।एतच्चोपपादित निदर्शनोत्तम्भित केवलोपमाप्रौढोक्त्युज्जीवितोपमा-संदेहसंकरेणैकवाचकानुप्रविष्टेन संकीर्यते। अन्येषामलंकाराणां तु परस्परनैरपेक्ष्यात्संसृष्टिः- सर्वेप्येते वृत्त्यनुप्रासैः एकवाचकानुप्रविष्टैस्संकीर्यन्ते पृथक्पृथक्- वृत्त्यनुप्रासश्चात्र कोमलाख्यः- ''माधुर्यौजोव्यञ्जकान्यैर्वर्णैर्भवति कोमले''ति लक्षणात्- एतच्चास्मिन्नेव स्तबके आभूमिस्त्वद्भ्रूमेति श्लोकव्याख्यायां विस्तरेण निरूपितमधस्तात्। कोमलपरुषवर्ण-संग्रहश्च देविश्रीरिति द्वाविंशश्लोके प्रदर्शितः- अत्र बहूनां पदानामेकपदवदवभासमानत्वात् श्लेषाख्यो गुणः-''मिथस्संश्लिष्टपदता श्लेष इत्यभिधीयत'' इति लक्षणात्। पादचतुष्टयेऽपि तुल्यवद्भणनात्समता। अवैषम्येण भणनं समता सा निगद्यत'' इति लक्षणात्। अर्थप्रतिपादने वाक्यस्य निराकाङ्क्षत्वादर्थव्यक्तिः- ''यत्तु संपूर्णवाक्यत्वमर्थव्यक्तिं वदन्ति ता''मिति लक्षणात्। विकटाक्षरबन्धत्वमौदार्यं- तल्लक्षणं त्वत्रैवावोचाम- गिरां श्लाघ्यविशेषण योगादुदात्तता- ''श्लाघैर्विशेषणैर्योगो यस्तु सा स्यादुदात्तते''ति लक्षणात्- विलक्षणसुबन्त तिङन्त प्रयोगात्सौशब्द्यम्- ''सुपां तिङां च व्युत्पत्तिस्सौशब्द्यमिति कथ्यत'' इति लक्षणात्- रसमोचनादेश्चेतनधर्मस्य कविवाणीष्वारोपणात्समाधिः- ''समाधिरन्यधर्माणां यदन्यत्राधि-रोपणमिति लक्षणादिति दिक्- अत्र स्ववागुपासन प्रवर्तन वाक्यस्यैवैतादृशानेक गुणगुम्भितत्वेन कथनं सर्वा अपि मदीयगिर एतादृश्य एवेति व्यञ्जयितुमिति ध्येयम्। एतेनास्य कवेस्सप्तविध कविलक्षणवत्ता च सूच्यते- तथा चोक्तममृतानन्दीयादौ- ''विवेकी वाचिको रौचिकार्थिकौ शिल्पिकस्तथा। भूषणार्थी मार्दवीति सप्तधा कविरुच्यते। गुणदोश विभागज्ञो विवेकी परिकीर्तितः। अनुप्राससमाबद्ध पदबन्धस्तु वाचिकः। प्रसादमधुरायत्त-रचनो रौचिको भवेत्। अर्थसंग्रहचातुर्यधुर्यस्यादार्थिकः कविः। शिल्पिकस्तु भवेद्दक्षः कवने यमकात्मके। सालंकृतिर्भूषणार्थी मार्दवी रसतत्पर'' इति। पृथ्वीवृत्तम्। लक्षणं तूक्तमधस्तात्॥26॥

मू. स्वैरं प्ररोहयतु पद्यसहस्रमाशु दासस्य मे वदनसीम्नि तवावलोकः।
यः क्वापि हन्त सकृदञ्जलिबन्धभाजि जन्तौ जगज्जननि! सौति सहस्रमक्ष्णाम्॥

अथैवमनालोच्य स्वशक्त्यादिकमुत्साहपारवश्येन ''स्तोकप्रज्ञमतीवमूकमपि मां

तदिदं "शेषः परार्थत्वा" दिति सूत्राभिप्रेतं वेदार्थसंग्रहे विवृतं- "परगतातिशयाधानेच्छयोपादेयत्वमेव यस्य स्वरूपं स शेष" इति। नन्विदमाम्रप्रश्ने कोविदारोत्तरवदसंगतं- यद्दासलक्षणे विवक्षिते शेषलक्षणवर्णनमिति चेन्मैवं- दासत्वस्यापि तद्विशेषत्वात्सामान्यलक्षणस्यात्र निरर्गळत्वात्। तथाहि- द्वयोरपि परगतातिशयाधानेच्छयोपादेय स्वरूपत्वं तुल्यमेव- शेषत्वं ह्यचेतनं प्रत्यचेतनस्यापि भवति- दासत्वं तु चेतनं प्रति चेतनस्यैवेत्येतावान्विशेषः। एतच्च रहस्यरक्षादौ स्पष्टमतो नोक्तलक्षणविरोधः- अत्र "दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मनः" इत्युक्तरीत्या सर्वेषां चेतनानां परमात्माविनाभूतत्वाद्दासत्वस्य नैसर्गिकत्वेऽपि "अतोऽहमपि ते दास इति मत्वा नमामि त" मित्युक्तरीत्या स्वस्य च ज्ञातृत्वं विवक्षितं- तेन वक्ष्यमाणजन्त्वपेक्षया स्वस्वोत्कर्ष सूचनेन तदपेक्षया कैमुत्येनेप्सित पूरणावश्यंभावं व्यज्यते। मे-हठात्स्वकृतायास्सहस्रश्लोकनिर्माणप्रतिज्ञायास्त्वत्कटाक्षैकनिष्पाद्यत्वं निश्चित्य त्वां शरणमुपगतस्येति भावः-वदनसीम्नि मुखप्रदेशे- "सीमसीमे स्त्रियामुभे" इत्यमरः-पद्यानां श्लोकानां-सहस्रं स्वशक्त्यादिकमपर्यालोच्य कर्तव्यतया प्रतिश्रुतमिति भावः। स्वैरं स्वच्छन्दं यथा स्यात्तथा-अप्रतिहतमिति यावत्- "मन्दस्वच्छन्दयोः स्वैर" इत्यमरः। "स्वादीरेरिणो" रिति वृद्धिः- इदं वक्ष्यमाण प्ररोहण क्रियाविशेषणं- अत एव "सामान्ये नपुंसक" मिति नपुंसकलिङ्गत्वं द्वितीयान्तत्वं च। इदं चानियतलिङ्गविषयं- तेनादि पचतीत्याद्येव- आदिशब्दो हि नित्यपुमान्- आद्यपाकानुकूलक्रियेति तदर्थः- न्यायसिद्धमेतत्- विशेष्यविशेषासन्निधाने लिङ्गसर्वनाम्नो नपुंसकस्य न्याय्यत्वात्- लिङ्ग सर्वनामनपुंसकमिति "दाण्डिनायने" ति सूत्रे भाष्ये स्पष्टम्- अनेनैव क्रियाविशेषणानां नपुंसकत्वे सिद्धे "क्रियाविशेषणानां क्लीबत्वं द्वितीयान्तत्वं चे" ति नापूर्वम्-धातूपात्त भावनां प्रति फलांशस्य कर्मतया तत्समानाधिकरणे क्रियाविशेषणे द्वितीयान्तत्वस्यापि सिद्धेः- अत एव सकृल्ल्वावित्यादौ कारकपूर्वत्वादण्- वाचनिकत्वे तु यत्र धात्वर्थस्य करणत्वेन अन्वयस्तत्रापि स्यात्- यथा तृप्तिकामस्स्तोकेनौदनं पचतीत्यादौ तृप्तिविषयक कामनावत्कर्तृकः स्तोकविक्लित्तिकरणक ओदनकर्मकः पाक इति बोधः- तद्विषयकामनावत्कर्तृकत्वे तस्या उद्देश्यत्वमर्थसिद्धम्- केषांचित्तृप्त्यादिषु कर्मत्वव्यवहारस्तूद्देश्यत्व सामान्यादिति दिक्।

प्ररोहयतु अंकूरयतु- उत्पादयत्विति यावत्- नन्वीदृशभाग्यस्य "तपो विशेषैर्बहुजन्मसिद्धैर्लभ्यं वचश्श्रीपतिवर्णनार्हम्। तरन्ति येनैव जवात्कवीन्द्रा नावेव सिन्धुं

सामर्थ्यस्यासंभाव्यता प्रतिक्षिपस्तत्प्रार्थनाया नैष्फल्यशङ्कां वारयति। य इति। यदाहुः- "प्रार्थना सफला तस्मिन्यस्तत्कार्यकृतिक्षमः - अशक्ते तु कृता याच्ञा न जातु सफला भवेत्" इति। यः कटाक्षः- सकृत् एकवारमेव- न त्वनवरतमिति भावः- अञ्जलिः संयुक्तनिकुब्जपाणिद्वयरूपमुद्राविशेषः- तस्य बन्धः करणं- "पाणिर्निकुब्जः प्रसृतिस्तौ युतावञ्जलिः पुमा"नित्यमरः- तं भजतीत्यञ्जलिबन्धभाक्- तथोक्ते न तु "समस्तिष्क-प्रणामस्स्यादञ्जलिं मस्तके न्यसेत्। प्रणामस्संपुटस्स स्याद्धृदयेऽञ्जलिमर्पयेत्। प्रह्वाङ्गस्संपुटं कुर्यात्सा प्रह्वाङ्गनमस्क्रिये"त्याद्युक्तशास्त्रीयाञ्जलिबन्धभाजीति भावः- किंच- केवलमञ्जलिबन्धभाजीत्युक्त्या येन केनापि कारणेन यदृच्छयैवायं रचितोऽञ्जलिबन्धो न तु सोऽपि "त्वदङ्घ्रिमुद्दिश्य कदाऽपि केनचिद्यथा तथावापि सकृत्कृतोऽञ्जलि"रित्युक्त रीत्या त्वामुद्दिश्य- येना"ञ्जलिः परमा मुद्रा क्षिप्रं देवप्रसादिनी"त्युक्तानन्यगतिकत्व सूचक मुद्राविशेषरूपत्वेनास्य क्षिप्रप्रसादनहेतुत्वमपि संभाव्येतेति द्योत्यते। क्वापि जन्तौ कस्मिंश्चित्प्राणिनि- अप्रसिद्धसूचकेन क्वापीत्वनेनात्यपकृष्टताद्योतकेन जन्तुशब्देन च त्वत्कटाक्ष लाभोपायभूतदास्यज्ञानाद्यभावेऽपि यथाकथञ्चित्त्वदुद्देशेनाऽञ्जलि करणप्रवृत्तिः अप्यस्याशिक्षितस्य तिरश्च इव न घटत इति द्योत्यते। अक्ष्णां-चक्षुषां- "ईक्षणं चक्षुरक्षिणी" इत्यमरः- "अस्थिदधिसक्थ्यक्ष्णामनङुदात्त" इत्यनङ्- "अल्लोपोऽन" इत्यल्लोपश्च। सहस्रं- न तु दश वा विंशतिर्वा-सौति अभ्यनुजानाति- उत्पादयतीति यावत्। ऐन्द्रीं संपदं ददातीति हृदयम्- अत्र "सामर्ग्यजुर्मयीं देवीं वेदगर्भां मनस्विनीम्। लोकेशेश विभूतीनां कारणं यन्निरीक्षण"मिति श्रीसंहितामङ्गणसंहितादिषूक्तं स्मर्तव्यम्। "षु- प्रसवैश्वर्ययोः"- अस्मादादादिकात्परस्मैपदिनः कर्तरि लट्। प्रसवोऽभ्यनुज्ञानम्। अत एव "ओमिति ब्रह्मा प्रसौती"ति श्रौतप्रयोगस्संगच्छते। प्राणिगर्भविमोचनार्थक षूङ् धातुत्वे तु तस्यात्मनेपदित्वेन सूत इति स्यात्- यद्वा- धातूनामनेकार्थत्वात्- षुधातोरेव प्राणिगर्भ विमोचनार्थकत्वमभ्युपेयते- अत एव "मातः कद्रु यदि प्रसौति भवती भूयस्सुतानीदृशानि"ति मुरारिप्रयोगश्च संगच्छते। एवं चात्र सौतेर्लाक्षणिकत्वमेव। हन्तेति जातिवृत्तौन्मुख्य-गुणाद्यनादरेण यथाकथंचिद्यादृच्छिकाहृदयनिकुब्जपाणिद्वयमेळनमात्रमेव महोपकारकोटौ- निवेश्य जन्तुसामान्येप्यैन्द्रपदप्रदानमत्याश्चर्यमिति सूचयति। यद्वा। श्रीलोचनजन्य एक एव कटाक्षस्सहस्रं लोचनान्येव यत्र क्वचिज्जन्तौ जनयतीत्याश्चर्यम्। अत एव कार्यात्कारण-

प्ररोहयत्वित्यनेन प्रस्तुतेऽवलोके- अप्रस्तुतसस्याङ्कुरोत्पादनक्षमवर्षोन्मुखप्रावृषेण्य-धाराधरवृत्तान्त परिस्फूर्तेस्समासोक्तिस्सारूप्यनिबन्धना- ''समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चे''दिति लक्षणात्। सर्वेषामेषामेकवाचकानुप्रवेशसङ्करः- अपि चात्राकस्मिकाञ्जलिबन्धवति यस्मिन्कस्मिंश्चिज्जन्तावेव विस्मयनीयं लोचनसहस्रं जनयितुरवलोकस्य दासभूतस्य प्रार्थयमानस्य वदनसीम्नि पद्यसहस्रप्रोहणं कियदिति दण्डापूपिकयाऽर्थान्तरापतनप्रतीतेः काव्यार्थापत्तिर्व्यज्यते। वृत्तं वसन्ततिलका। ''उक्ता वसन्ततिलका तभजा जगौ ग'' इति लक्षणात्॥27॥

**मू. पङ्कजनिलये! स्तोत्रं वेङ्कटकविगीतमेतदविगीतम्।**
**किङ्करकृतमिति कृपया त्वङ्कलयितुमर्हसि प्रसीदन्ती॥ 28**

अथेदानीमुपक्रान्तां स्तुतिमनुग्रहीतुं श्रियं प्रार्थयते। पङ्कजेति। हे पङ्कजनिलये- अनेन निवासस्थानसौकुमार्यकथनेन हृदयस्याप्यतिमात्रं मार्दवं द्योत्यते। तेन दोषभूयस्त्वेऽपि स्तुतिं ग्रहीतुमपराङ्मुख्यास्तव दोषवैधुर्ये माधुर्यादिगुणपौष्कल्ये च तद्ग्रहणं किं पुनर्न्याय सिद्धमिति द्योत्यते-वेङ्कटकविना-गीतं-गातुमुपक्रान्तमित्यर्थः-''आदिकर्मणि क्तः कर्तरिचे''ति क्तः- गीतमित्यनेन ''पादबद्धोक्षरसमस्तन्त्रीलयसमन्वितः- समाक्षरैश्चतुर्भिर्यः पादैर्गीतो महात्मने''त्युक्तप्रकारेण समाक्षरपादबन्धादिभिस्तन्त्रीलयादियोग्यतया ''पाठ्ये गेये च मधुरं प्रमाणैस्त्रिभिरन्वितम्। जातिभिस्सप्तभिर्बद्धं तन्त्रीलयसमन्वितम्। रसैश्शृङ्गारकारुण्य हास्य वीरभयानकैः। रौद्रादिभिश्च संयुक्तं काव्यमेतदगायता''मित्युक्तरीत्या श्रीरामायणस्य इवास्यापि गानार्हत्वं द्योतितम्। श्रवणमात्रैणैवानन्दसंदायित्वमप्यनेन सूचितम्। एतत् त्वद्विषये प्रस्तुतं स्तोत्रं विद्यमानगुणवर्णनरूपं प्रबन्धं- विगीतं गर्हितं न भवतीत्यविगीतं यथा स्यात्तथा- शब्दार्थयोर्विषयस्य च सौष्ठवादिति भावः- किंकरेण स्वशेषतैकरसेन कृतं कर्तुमुपक्रान्तमित्यर्थः- पूर्ववदेव क्तः- किंकरकृतत्वमेकमेवालमनुग्राह्यत्वेऽनतिक्रमणीयं कारणम्-तत्राप्यविगीततया कृतत्वे किमु वक्तव्यमिति भावः-इति हेतोः-किंकरकृतमित्यत्रेति शब्देन कर्मणोऽभिहितत्वात्प्रथमा- तदुक्तं ''क्वचिन्निपातेनाभिधान''मिति- कृपया- प्रसीदन्ती महता श्रमेणायं निबध्नाति मामुद्दिश्य सरसतमां स्तुतिम्-मदुपेक्षायां खिद्येतेति प्रसन्ना भवन्तीत्यर्थः- त्वं- न हि त्वदितरैरादृतत्वेऽपि प्रबन्धनेत्र्यास्तवानादरे शोभेत। कृतिर्बन्धु जनादृतत्वेऽपि वल्लभानादृतेव कुलललनेति भावः। कलयितुं अङ्गीकर्तुं श्लाघितुं वा च-

ह्येकान्तिनश्श्रेष्ठान्प्रीणाति भगवान् हरिः। विधिप्रयुक्तां पूजां च गृह्णाति शिरसा स्वय'' मित्युक्तरीत्याऽवश्यमत्यादरेण स्वीकर्तव्यमन्यथा प्रबन्धवैलक्षण्यं संकुचितं स्यादिति भावः- प्रबन्धवैलक्षण्यं नाम परमाप्तप्रणीतत्वं पुण्यश्लोकविषयत्वं महाजनपरिगृहीतत्वं प्रबन्धनायकश्लाघितत्वमित्यादीति श्रीरामायणभूषणे स्पष्टम्। तत्र परमाप्तप्रणीतत्व पुण्यश्लोकविषयत्व रूपवैलक्षण्यं पूर्वमसकृत्सूचितमेव वेङ्कटकविगीतमेतत्स्तोत्रमित्या-भ्यामनूद्यात्र प्रबन्धनायिकाश्लाघितत्वलक्षणवैलक्षण्यलाभाय त्वं कलयितुमर्हसीति प्रार्थ्यते- महाजनपरिगृहीतत्वरूपवैलक्षण्यप्रार्थनं तूत्तरश्लोके स्फुटीभविष्यति- प्रागपि स्फुटमिति ध्येयम्- यद्वा- त्वं- कृपया प्रसीदन्ती सती वेङ्कटकविगीतमेतत्स्तोत्रं किङ्करकृतमित्य विगीतं कलयितुमर्हसीति योजना। किङ्करकृतं किङ्करेण मदेकशेषतैकरसेन कृतं कर्तुमुपक्रान्त-मिति हेतोः न त्वन्यन्निमित्तमस्तीति भावः- अविगीतं शब्दार्थादिदोषैरदूषितं- कलयितुं निर्वर्तयितुं- अर्हसि योग्यासि- स्वतंत्रासीति यावत्। स्तोत्रं तावदुपक्रान्तं त्वत्कृपावलम्बनेन दासेन- तदविगीततानिष्पादनमपि त्वत्कृपायत्तमेवेति भावः। काव्यलिङ्गं वृत्त्यनुप्रासो यमकं चालंकाराः ॥28॥

मू. **रसिकाळिभिरास्वाद्यं रम्यं श्रीकरविलसदलंकरणम्।**
**विकसतु सूर्यालोकात्पद्मसहस्रं सहस्रपत्रमिव॥** 29

इति श्रीमदात्रेय रघुनाथदीक्षित गुरुवरचरणारविन्दानुसंधानसंपादितसारस्वतस्य श्रीमद्वेदान्तदेशिकपदाम्बुरुहैककुलदैवतस्य- श्रीनिवासपदकमलदास्यैकधनस्य श्रीवेङ्कटार्य दीक्षितस्य कृतिषु लक्ष्मीसहस्रे प्रारम्भस्तबकः प्रथमः।

एवं पूर्वश्लोके कृतेर्नायिकापरिग्रहं प्रार्थ्येदानीं ''आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम्। बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेत'' इत्युक्त प्रकारेणाविद्वत्परितोषं प्रयोगसाधुतायां नैर्भर्यमलभमानो विद्वत्परिग्रहेण प्रचारमाशास्ते। रसिकेति। रस एषामस्तीति रसिकाः- रसज्ञास्सहृदया इत्यर्थः- ''रसशब्दादतिशायनेऽर्थे ''अत इनिठना''विति मत्वर्थीयष्ठन्- ठस्येकादेशः- तेषां- आळयः पङ्क्तयः- ''वीथ्याळिरावळिः पंक्तिः'' इत्यमरः- ताभिः- आस्वाद्यं विगळितवेद्यान्तरतयाऽनुभवितुं योग्यम्- अनेन रसभाव-

स्फुट प्रकाशमानानि- अलंक्रियते काव्यसंपदेभिरित्यलंकरणान्युपमादीनि यस्मिंस्तथोक्तम्- अनेनार्थचित्रत्वं सूचितम्- यद्वा- श्रीकरं लक्ष्मीविषयप्रवृत्ततया सौभाग्यवहं- ''श्रीदेव्यास्स्तुतिमात्रेण दारिद्र्यं याति भस्मसात्। तथाऽष्टगुणमैश्वर्यं ददाति पठतां नृणा''मित्याद्ये पुराणे तन्नामसहस्रोक्तेः- विलसदलंकरणं विद्योतमानोपमाद्यलंकारं चेति विशेषणोभयपदकर्मधारयः- पक्षे- श्रियः लक्ष्म्याः करयोः हस्तयोः- विलसत् आभरणान्तरापेक्षया विशिष्य शोभमानं- अलंकरणं अलंकार इत्यर्थः- ''श्रीर्वेषरचनाशोभासंपत्सरळशाखिष्वि''ति रत्नमाला- पद्यसहस्रं श्रीविषयकमिति भावः- सहस्रपत्रं कमलमिव- सूरीणां गुणदोषविमर्शनिष्णातानां सहृदयानां विदुषां ''धीमान् सूरिः कृती कृष्टिः'' इत्यमरः। आलोकात् विचारपूर्वकपरिग्रहादिति यावत्- पक्षे- सूर्यस्य भानोरालोकात् प्रकाशात्- ''आलोको दर्शने द्योते'' इत्यमरः- विकसतु प्रचारं प्राप्नोतु- अन्यत्र- पुल्लत्वित्यर्थः- विलसत्विति पाठे प्रकाशतामित्युभयत्रापि तुल्योऽर्थः।

अत्र सहस्रपत्र पद्यसहस्रयोरुपमानोपमेययोः-रसिकाळ्यास्वाद्यत्वादिरूपसमानधर्मस्य- इवेत्युपमावाचकशब्दस्य चोपादानाच्छ्रौती पूर्णोपमा- समानधर्मस्य चात्र ''असौ मरुच्चुम्बितचारुकेसरः प्रसन्नताराधिपमण्डलाग्रणीः। वियुक्तरामातुरदृष्टिवीक्षितो वसन्तकालो हनुमानिवागत'' इत्यत्रेव श्लेषानुगामितोपचारमिश्रणेन निर्देशः- तथाहि- रसिकाळिभिरास्वाद्यं-श्रीकर विलसदलंकरणं-सूर्यालोकादिति श्लेषेण निर्देशः- रम्यमित्यनुगामितया-रम्यत्वस्योभयानुयायित्वात्-विकसत्वित्युपचारेण-विकासस्य कमलधर्मस्य पद्यसहस्रे उपचरितत्वात्-उक्तं च चित्रमीमांसायां-क्वचित्साधारणधर्मस्यानुगामितया निर्देशः-क्वचिद्वस्तुप्रतिवस्तुभावेन-क्वचिद्बिम्बप्रतिबिम्बभावेन-क्वचिच्छ्लेषेण-क्वचिदुपचारेण-क्वचित्समासान्तराश्रयणेन-क्वचिदेषां यथासंभवं मेळनेनेति- नन्वत्र सहस्रपत्रं विकसतीत्यन्वेति न तु विकसत्विति-अतोऽयमुपमादोषः-यथोक्तं चित्रमीमांसायां-''केचित्तु कालपुरुषलोडर्थादिभेदमपि दोषमाहुरित्युपक्रम्य यथा ''आशास्यमन्यत्पुनरुक्तभूतं श्रेयांसि सर्वाण्यधिजग्मुषस्ते। पुत्रं लभस्वात्मगुणानुरूपं भवन्तमीड्यं भवतः पितेव''। अत्र भवन्तमलभतेत्यन्वेति न तु लभस्वेत्याशी''रितीति चेन्न-लोकसिद्धत्वेनादोषात्-तथा च चित्रमीमांसायामेव ''तथापि लोकसिद्धत्वाददोषः- अत एव ''प्रवृद्धो हीयते चन्द्रस्समुद्रोऽपि तथाविधः- स तु तत्समवृद्धिश्च न चाभूत्ताविव क्षयी''त्यादौ कालभेदेऽपि भूयांस्युदाहरणानि- एतादृशीषु लोकसिद्धत्वाल्लिङ्गादिभेदो न दोष इति वामन इति समाहितम्- अत्र प्रकृताप्रकृतश्लेष इति केषांचिद्व्याख्यानं त्वलंकार सर्वस्वकृतो

हेतुश्लेष एवावसेय इत्यवोचत्। विद्यानाथोऽपि सर्वस्वकार सिद्धान्त-श्रद्धाळुतया "स्वतस्सिद्धेन भिन्नेन सम्मतेन च धर्मतः। साम्यमन्येन वर्ण्यस्य वाच्यं चेदेकदोपमे" त्युपमा "नीराजयन्त्यन्ध्रपुरीरमण्यः प्रदीपजालैर्वरवीररुद्रम्। चन्द्रानना गोत्रपतिं रजन्यस्तारागणैर्मेरुमिव स्फुरद्भिः"। अत्र प्रतापरुद्रं पुरस्त्रियो नीराजयन्ति मेरुं रजन्य इवेति नोपमा- गोत्रपतिमिति विशेषणार्थस्य साम्याभावात्- गोत्रशब्देन राजपक्षे कुलप्रतीतिः- मेरुपक्षे पर्वतप्रतीतिः- तथा चन्द्रानना इति स्त्रीपक्षे चन्द्र इवाननं यासामिति समासः- रात्रिपक्षे चन्द्र एवाननं यासामिति शब्दमात्रसाम्येन नोपमाप्राप्तिः- किंतु श्लेष एवेत्यवादीत्- श्लेषालंकारप्रकरणे च। "विजितारिपुरो मूर्तौ विलसत्सर्वमङ्गळः। राजमौळिः प्रतापाङ्करुद्रो रुद्र इव स्थित" इति प्रकृताप्रकृतश्लेषस्योदाहरणं दत्तवान्। वस्तुतस्त्वत्रोक्तरीत्या सकलकलं पुरमेतदित्यादाविवोपमालंकार एव।

नन्वेवं यथा पुरे सकलकलत्वं कलकल शब्द साहित्यम्-सुधांशुबिम्बे कलासाकल्यमिति नैको धर्मोऽनुगतो लभ्यते- तथेहापि पद्यसहस्रे रसिकजनावळ्यास्वाद्यत्वादिः- सहस्रपत्रे रसाभिलाषि भ्रमरास्वाद्यत्वादिरिति नैको धर्मोऽनुगतो लभ्यत इति दृष्टान्त इव दार्ष्टानिकेप्युपमा दुर्घटैवेति चेन्न- श्लेषभित्तिकाभेदाध्यवसायमूलया भेदेऽभेद इत्येवं रूपयाऽतिशयोक्त्या धर्म साधारण्यस्य निरर्गळत्वात्-न ह्युपमानोपमेयानुगत्या धर्मस्य मुख्ये साधारण्य एवोपमालंकारता नान्यत्रेति वेदानुशासनं-तथासति- "पाण्ड्योयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन। आभाति बालातपरक्तसानुस्सनिर्झरोद्गार इवाद्रिराज" इत्यादौ हरिचन्दन बालातपहार-निर्झरादीनां बिम्बप्रतिबिम्बभावेन निर्दिष्टानामपि साधारणधर्मत्वानापत्तेः- अभ्युपगम्यते चात्र सर्वैरप्यालंकारिकैस्साधरणधर्मता।

अथ सकलकलमित्यादौ गुणसाम्यं चेदुपमैव स्यादिति चेच्छब्दसाम्यमात्रं चेदपि किमित्युपमा न स्यात्- न हि शब्दान्यगुणादिसाम्यमेवोपमाप्रयोजकं न शब्दसाम्यमिति कुलधर्मः- "यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा-तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जना"दित्यनुगतार्थनामरूपशब्दसाम्येऽप्युपमादर्शनात्- अन्यथा बहुग्रन्थ विरोधस्स्यात्- तथा च रुद्रटः काव्यालंकारे श्लेषप्रकरणे- "भाषाश्लेषविहीनस्स्पृशति प्रायोऽन्यमप्यलंकारम्। धत्तेऽसौ वैचित्र्यं सुतरामुपमासमुच्चययोः। स्फुटमर्थालंकारावेतौ उपमासमुच्चयौ किंतु। आश्रित्य शब्दमात्रं साधर्म्यमिहापि संभवतः"। इति। अयं पूर्वोक्तश्लेषो भाषाश्लेषरहितः-प्रायो बाहुळ्येन- अन्यमप्यलंकारमर्थविषयं व्यतिरेकादिकं

किंतु वाक्यद्वयसाधारणशब्दाश्रयं सादृश्यं विद्यत इति भावः। शब्दश्लेषो नार्थालंकार इति तन्मतं- तस्याप्यर्थालंकाराङ्गत्वं क्वचिद्भवति- तत्राप्युपमासमुच्चयाङ्गत्वमतिशयेन चमत्कारकारीति कारिकाद्वयतात्पर्यार्थः- एतच्च शब्दसाम्यमात्रकथनमन्ततश्शब्द-साम्यमात्रमाश्रित्योपमां समर्थयितुं शक्यत इति भावेन- न त्वभेदाध्यवसायेनापि गुणसाम्यं न संभवतीति भावेन- श्लिष्टविशेषणेष्वभेदाध्यवसायेनैक्यस्यालंकारान्तरेष्वपि सर्वैरपि समाश्रयणादिति चित्रमीमांसायामुक्तम्- दण्डिनापीदृशस्थलेषूपमेवाभ्युपगता। तथा च काव्यादर्शे। "शिशिरांशुप्रतिस्पर्धि श्रीमत्सुरभिगन्धि च। अम्भोजमिव ते वक्त्रमिति श्लेषोपमा स्मृता। सरूपशब्दवाच्यत्वात्सा समानोपमा मता। बालेवोद्यानमालेयं सालकानन शोभिनी"ति। काव्यप्रकाशकृदपि "यथा- कमलमिव मुखं मनोज्ञमेतत्कचति तरामित्यादौ गुणसाम्ये क्रियासाम्ये उभयसाम्ये वोपमा- तथा- 'सकलकलं पुरमेतज्जातं संप्रति सुधांशु बिम्बमिवे'त्यादौ शब्दमात्रसाम्येऽपि सा युक्तैवे"ति- साहित्यरत्नाकरकृदप्युपमाप्रकरणे- "श्लिष्टपदोपादानेऽपि न श्लिष्टशङ्कातङ्कः- स्वतोभिन्नयोरपि धर्मयोश्श्लिष्टपदोपादानेन भेदे सत्यभेदरूपातिशयोक्तिलाभादेकत्वधीपथ पान्थयोरुभयानुगतैक धर्मत्वेनाङ्गीकृतत्वात्। तथा चैतादृशस्थले श्लेष प्रतिभोत्थापितातिशयोक्त्युप्राणितोपमेत्युच्यत" इत्यवादीत्।

न चैवं श्लेषस्योपमाद्यलंकारान्तर विविक्तविषय दौर्लभ्येन तद्बाधकत्वमेव स्यादिति वाच्यम्- "देव! त्वमेव पातालमाशानां त्वं निबन्धनम्। त्वं चामरमरुद्भूमिरेको लोक-त्रयात्मक" इत्यादिषु विविक्तविषयलाभस्य काव्यप्रकाशकृतादर्शितत्वात्-वस्तुतस्तु विविक्तविषयान्तराभावेन अलंकारान्तरबाधकत्वमिति वाचोयुक्तिरप्ययुक्ता- विषयसद्भाव-मात्रेण निरवकाशत्व हानेर्विविक्तविषयानपेक्षणात्-न ह्ययमलंकारगोचरो लोकन्यायः- यद्विविक्तविषयो वक्तव्य इति- अरन्ध्ररत्नानां सुवर्णविविक्तविषयाभावेऽपि सुवर्णाश्रितानामेव चारुत्वाहेतुत्वे-नालंकारान्तरत्व व्यवस्थितेः-अन्यथा निरवकाशैररन्ध्रप्रत्युप्तरत्नैस्साव-काशस्य तदाश्रय सुवर्णस्यालंकारता बाध्येत। नाप्ययं वाक्यवित्संमतश्शास्त्रीय न्यायः- पदे जुहोतीत्यादीना-मिव- उत्तरार्धे जुहोतीत्यादीनामाहवनीयशास्त्रादिविविक्तविषयाभावेऽपि सविषयत्वमात्रेण प्रतिष्ठितत्वात्-नाप्यसाधारण्येनैतच्छास्त्रन्यायः-सहोक्त्यादीनामतिशयो-क्त्यादि विविक्तविषयाभावेऽपि तदबाधेनालंकारान्तरत्वव्यवहारादविरोध इहप्यविशिष्टः- तस्मादत्रोपमाप्रतिभोत्पत्तिहेतुश्श्लेषालंकार इत्ययुक्तम्- प्रत्युतोपमैवात्र श्लेषप्रतिभाहेतुः- न हि पुरवर्णनप्रकरणे सकलकलमिति तद्विशेषणस्य सुधांशुबिम्बमित्युपमाया अनिबन्धने कला साकल्यलक्षणार्थान्तर प्रतिभा संभवति। ननु चात्र श्लेषसद्भावेऽपि कुतश्श्लेषालंकार-

मृदुभिः करैः''रिति काव्यादर्शश्लेषोदाहरणस्यैव कुवलयानन्दे प्रकृताप्रकृतश्लेषोदाहरणतया उपादानं च संगच्छते। अत्र तु विशेष्ययोरश्लिष्टत्वेन न प्रकृताप्रकृतश्लेषावकाश इति दिक्।

स्यादत्रोपमालंकार इति सुष्ठूक्तम्-इयं चोपमा रेफादिवर्णपुनरुक्तिलक्षणवृत्त्यनुप्रासेन एकवाचकानुप्रविष्टेन संकीर्यते। न चात्र तात्पर्यभेदेन सहस्रशब्दार्थ पुनरुक्तिसद्भावाल्लाटानुप्रास इति भ्रमितव्यम्- नाम्नो वा पदस्य वा तात्पर्यभेदेनावृत्तावेव तदवतारात्- अत्र तु पद्मसहस्रं सहस्र पत्रमिवेत्येकत्र पदस्यापरत्र नाम्नश्च श्रवणेनान्यतरपुनरुक्त्ययोगात्- तथाच तल्लक्षण मुद्भटेनोक्तम्- ''स्वरूपार्थाविशेषेऽपि पुनरुक्तिः फलान्तरात्। शब्दानां प्रकृतीनां वा लाटानुप्रास इष्यत'' इति- काव्यदर्पणेऽप्युक्तम् ''तात्पर्यमात्रभेदे या शब्दार्थपुनरुक्तता। स एव लाटानुप्रासश्शाब्दो विद्वद्भिरुच्यते। वाक्यावृत्तौ पदावृत्तौ नामावृत्तौ च सा त्रिधे''ति- श्लोकद्वयमपि गीतिवृत्तम्। ''आर्या प्रथमदळोक्तं यदि कथमपि लक्षणं भवेदुभयोः। दळयोः कृतयतिशोभां तां गीतिं गीतवान्भुजङ्गेश'' इति लक्षणात्।

यत्त्वमुं श्लोकं ''रसिकाळिभिरास्वाद्यं श्रीकरविलसदलंकरणम्। विलसतु सूर्यालोकात्पद्मावासे सहस्र पत्रमिवे''ति पठन्नमून्येव पदानि विवृण्वन्नमीषां विशेषणानां स्तोत्रमिति विशेष्यसमर्पक पदमध्याहृत्य व्याख्यातवांश्च पाश्चात्यः-तदयुक्तं- सगुरुसप्त-गणात्मकेऽत्र पूर्वार्धे एकगण न्यूनत्वेन भग्नच्छन्दोरूपकाव्यदोषापत्तेः-न च मूले रम्यमिति पदालेखनं प्रामादिकं- तदव्याख्यानं च सुगमत्वादिति वाच्यम्। ''सुगमानां दुर्गमाणां पदानामपि सर्वशः- व्याख्यानं लिख्यतेत्वेतद्यावद्बुद्धिबलोदय''मिति त्वत्प्रतिज्ञाभङ्गापत्तेः। प्रतिश्लोकमपि त्वया तथैव व्याख्याततत्वाच्च। उत्तरार्धे तु पद्मसहस्रमिति पदमनादृत्य पद्मावासे इति पदोपादानं चायुक्तम्- आस्वाद्यमित्यादि विशेषणानामुपमानभूत विशेष्यसमर्पक सहस्रपत्र पदस्येवोपमेयभूत विशेष्य समर्पकपद्मसहस्र पदस्याभावे ''नोक्तं स्याद्यत्र वक्तव्यं तदाहुर्वाच्य-वर्जित''मित्युक्तवाच्यवर्जितदोषापत्तेः-अनध्याहारसोपपत्तिकपाठे सार्वलौकिके साध्या-हारानुपपत्तिकपाठकल्पनस्यायुक्तत्वाच्च-न च त्वत्पाठे लक्ष्मीसंबोधकपदाभावेन तदध्याहारस्य आवश्यकत्वात् ''यश्चोभयोस्समो दोषः परिहारोऽपि तत्सम'' इतिन्यायेन दोषतत्परिहारयोः तौल्यमेवेति वाच्यम्। उपमेयभूत विशेष्यसमर्पकपदानध्याहार इव लक्ष्मीसंबोधकपदध्याहाराभावेऽपि पदान्तरनैराकाङ्क्ष्येण वाक्यार्थपूर्तेरसंदेहेन सिद्धेरुक्तदोष पदन्यासानवकाशात्- नाप्यस्मिन्प्रबन्धे प्रतिपद्यमपि लक्ष्मीसंबोधकपदसद्भावनैयत्यादत्रापि

पदावश्यंभावनिर्धारक युष्मच्छब्ददर्शनेऽपि तददर्शनेन क्वचिन्नियमव्यभिचारात् इह तदावश्यकतानियामकयुष्मद्भवदन्यतरशब्दादर्शनाच्च- तत्राध्याहारेण निरुह्यत इतिचे दिहापि तथैव किं न निरुह्येत- वस्तुतस्तु तत्राध्याहारावश्यकत्वेऽपीह तदभावे न किंचिदवहीयत इत्यत्रैवावोचाम। तस्माद्यथोक्त एव पाठो विश्वजनीन इति ध्येयम्। एतेन फणिशैलपतिप्रिये सहस्रपत्रमिवेति पाठोऽपि निरस्त इति वेदितव्यम्- अत्र स्वप्रबन्ध विशेषण प्रदानेन युक्त्या निजोत्कर्षाविष्कारात्कवेः प्रौढत्वं सूचितम्। तथाचोच्यते। ''कवयस्तु प्रबन्धारस्ते भवेयुश्चतुर्विधाः। उदात्त उद्धतः प्रौढो विनीत इति भेदतः। अन्तर्गूढाभिमानोक्तिः उदात्त इति गीयते। परापवादात्स्वोत्कर्षवादी तूद्धत उच्यते। यथोचित निजोत्कर्षवादी प्रौढ इतीर्यते। युक्त्या निजोत्कर्षवादी प्रौढ इत्यपरे जगुः। विनीतो विनयं जल्पन्स्वापकर्ष प्रकाशक'' इति। एवं सुचारुमधुवीचिकेत्यादिश्लोकेष्वपि प्रौढत्वं सूचितम्। किंच- शय्याशब्दगणानुशासनचणेत्यादिषु विनीतत्वं, गर्वदुर्वसुधापतीत्यादावुदात्तत्वं चेत्ये- कस्मिन्नेवावस्थाभेदाद्वैविध्यं सूचितमिति द्रष्टव्यम्॥29॥

अथ कविः स्वाचार्यादिस्मरण पुरस्सरं प्रबन्धनाम निर्दिशंस्तत्र स्तबकं परिसमापयति। इतीति- इतिरत्र समाप्तौ- प्रकारे वा- ''इति हेतुप्रकरणप्रकारादिसमाप्तिष्वि''त्यमरः। श्रीमदित्येतद्दीक्षितविशेषणम्- श्रीमत्त्वं चात्र भगवत्कैंकर्योद्यतत्वं- ''स तु नागवरश्श्रीमान्- अन्तरिक्षगतश्श्रीमा''नित्यादौ भगवत्सेवोद्यतेषु श्रीमच्छब्दप्रयोगात्- अत्रेरपत्यमात्रेयः- अत्रि शब्दादपत्येऽर्थे ''इतश्चानिञ्'' इति ऋष्यणोऽपवादो ढक्-ढस्य एयादेशश्च। य आत्रेयगोत्रो यो रघुनाथ इति दीक्षितो यज्वा- स चासौ गुरुश्च-तस्य चरणारविन्दयोरनुसंधानेन ध्यानेन- संपादितमार्जितं सारस्वतं येन-तथोक्तस्य-सरस्वत्या इदं सारस्वतं विद्यावैभवम्- ''यत्सारस्वत वैभवं गुरुकृपापीयूषपानोद्भव''मित्यादिप्रयोगात्- आत्रेयग्रहणेन भगवद्भाष्यकारमाहानसिक प्रणतार्तिहृद्गुरुवंश्यत्वं सूच्यते- तथाचानेनैवोक्तं वरदाभ्युदये ''प्रख्यातः प्रणतार्ति हृद्गुरुरिति श्रीभाष्यकर्तुर्मुनेर्यो माहानसिकस्तदुक्तिरसिकश्श्रीमान् स यत्राभवत्। वंशे तत्र हि वादिहंस जलदाचार्यादिभिर्भूषिते यज्वाऽभूद्रघुनाथदेशिक इति श्रीश्रीनिवासेष्टिन'' इति। आचार्यैरप्येवमेव ''यो माहानसिको महान्यतिपतेर्नीतश्च तत्पौत्रजानाचार्यानिति रङ्गधुर्य मयि ते स्वल्पावशिष्टो भर'' इति स्वाचार्या व्यपदिश्यन्ते।

भाव्यं च महाकुलीनेनैव कविना- यथोच्यते- ''सत्कुलीनश्शुचिर्दक्षश्छन्दो व्याकरणादिवित्- प्रशान्त स्सुभगाकारो दैवज्ञश्च कविर्भवे''दिति। दीक्षितशब्देन कर्मनिष्ठता- गुरुवर शब्देन ब्रह्मनिष्ठता च- तस्मादेवात्मनो ब्रह्मविद्यालाभश्चेत्येतेर्था-

यज्वात्मजेनेति- अथ ''वसिष्ठव्यपदेशिन'' इत्युक्तरीत्या स्ववर्गीण कूटस्थाचार्यवर्येणात्मानं व्यपदिशन्नाह। श्रीमद्वेदान्तेति- श्रीमतो वेदान्तदेशिकस्य- श्रीमच्छब्देन ज्ञानवैराग्यादि गुणसंपत्समृद्धिस्सूचिता- वेदान्तदेशिकशब्देन ब्रह्मविद्या प्रतिष्ठापन धौरंधर्यं सूचितम्- तस्य पदाम्बुरुहे एव कुलदैवतं यस्य- तथोक्तस्य- कुलदैवत शब्देनानतिलङ्घनीयत्वमयत्न लब्धत्वमविश्रान्तमवश्यमाराध्यत्वमनिष्टनिरासकत्वमभीप्सितनिर्वर्तकत्वं प्राप्यान्तर-वैतृष्ण्यावहत्वमित्यादि व्यज्यते। अथ ''एकान्ती व्यपदेष्टव्यो नैव ग्रामकुलादिभिः। विष्णुना व्यपदेष्टव्यस्तस्य सर्वं स एव ही''त्युक्तरीत्या स्वस्यैकान्त्यानुगुणं व्यपदेशं प्रदर्शयन्नाह। श्रीनिवासेति। श्रीनिवासस्य श्रीवेङ्कटनाथस्य पदकमलयोः दास्यं कैंकर्यमेकं धनं यस्येति बहुपदबहुव्रीहिः- दास्यमेव धनं यस्येत्यस्वपदविग्रहो वा- मयूरव्यंसकादेराकृति गणत्वात्साधुः- श्रीनिवासशब्देन तस्य विभूतिद्वितय वितरण धुरीणत्वं सूचितम्- पदयोः कमलत्वरूपणेन सौकुमार्यभोग्यत्वलक्ष्मीकरग्राह्यत्वमङ्गळत्वादीनि व्यज्यन्ते- दास्यैकधनस्येत्यनेन ''तत्पादभक्तिज्ञानाभ्यां फलमन्यत्कदाचन। न याचेत्पुरुषो विष्णुं याचनान्नश्यति ध्रुव''मित्युक्तरीत्या प्रयोजनान्तरनैस्पृह्यं द्योत्यते- स्वस्य श्रीविषयक स्तुतिप्रवृत्त्यौचित्यं च व्यज्यते- श्रीवेङ्कटार्यदीक्षितस्येति कविनाम- दीक्षित शब्दप्रयोगात्स्ववंशस्योदितोदितत्वं ज्ञाप्यते- किंचात्र विशेषणत्रयेण ''अस्मद्गुरु समारम्भा'' मित्युक्तप्रक्रियया स्वाचार्यप्रभृति प्रथमाचार्य भगवत्पर्यन्त गुरुपरंपराप्यनुसंहितेति सूच्यते। तेन स्तबकान्ते मङ्गळमपि कृतमिति ध्येयम्।

क्रियन्त इति कृतयः प्रबन्धाः- कर्मणि क्तिन्- तासु मध्ये- बहुवचनात्कृतीनामानन्त्यं सूचितम्- प्रसिद्धा ह्येतत्प्रणीता विश्वगुणादर्श वरदाभ्युदय श्रवणानन्द प्रद्युम्नानन्दादयोऽशीति प्रबन्धाः- लक्ष्मीसहस्रे- इति प्रबन्धनाम- लक्ष्मीविषयकं सहस्रं लक्ष्मीसहस्रं- सहस्रशब्दः पद्यसहस्र परः-तस्मिन्-प्रारम्भस्तबकः-उपोद्घातवर्णन रूपः स्तबकः। स्तबकत्वेनाध्यवसितो विच्छेद इति यावत्- प्रबन्धभागविशेष-रूप विच्छेदाः स्तबकादिसंज्ञाभिर्व्यवहार्याः-तथा चोक्तं शम्भुरहस्ये''नत्वा च देवताचार्यान्पद्यैरादौ ततः परम्। स्ववंशवर्णनं कुर्यात्कविरिष्टानु-रूपतः। सत्कविस्तवनं कुर्यात्कुर्यात्कुकवि निन्दनम्। कीर्तयेद्ग्रन्थनामाथ कथारम्भं समाचरेत्। सर्गाश्वासोल्लास गुच्छस्तबकाख्यान् पदे पदे। विच्छेदान्कल्पयेत्काव्ये पञ्च सप्त नवापि वा। दश द्वादश वाऽदीर्घान्यावदिष्टमथापि वा। एवं काव्यं क्रमात्कृत्वा मङ्गळान्तं समापयेत्'' इति। सर्वोऽप्ययं क्रमः प्रायशोऽत्र प्रबन्धे प्रतिष्ठित इति ध्येयम्। स च स्तबकः कतिथ इत्यत्राह- प्रथम इति- आद्य इत्यर्थः- इति समाप्त इत्यर्थः- इति शब्दस्य प्रकारार्थकत्वे

निर्निरोधत्वात्- येन विना यन्न निष्पद्यते तत्तस्याङ्गं भवितुमर्हति। श्रीनिवास पदकमलदास्यैक धनस्येत्यादावप्येवमेव। स्तबक इत्यत्र रूपकातिशयोक्तिः- विच्छेदस्य विषयस्य स्वशब्देनोल्लेखनं विनापि स्तबक इति विषयिवाचकशब्देन ग्रहणाद्विषयनिगरणं तत्पूर्वकं विषयस्य ''रूपकादिशयोक्तिस्स्यान्निगीर्याध्यवसानत'' इति। सर्वेषामेषां संसृष्टिः- एवमुत्तरत्रापि द्रष्टव्यमिति सर्वमनवद्यम्।

श्लो - संभृत जगदारम्भान्सरसिजनयनोपभोग्यकुचकुम्भान्।
कलयानि जलधि-डिम्भान्कांश्चन शृङ्गारसारसंरम्भान्।

**श्रीवास ब्रह्मतन्त्रादिम पदकलिजिद्देशिकेन्द्रानघाङ्घ्रि**
**द्वंद्वाब्जानुग्रहात्त प्रतिपद विविध ग्रन्थनिर्माण शक्तिः ।।**
**श्रीमल्लक्ष्मीसहस्रे व्यतनुत सरसे नूत्नदुर्गाधिवासी**
**श्रीमान् प्रारम्भसंज्ञ स्तबक विवरणं कृष्णनामा कवीन्द्रः ।।**

इति श्रीमत्सर्वतन्त्र पारावारपारीणसारप्रकाशिकाकृच्छ्रीशैल घनगिर्यप्पलाचार्य गुरुवर्य कुलकलश पयोराशि राकासुधाकरायमाण श्रीमत्प्रत्यग्रदुर्गनिलय श्रीनिवासतातार्यवर्य द्वैतीयीक तनुजन्मनः श्रीकृष्णाम्बागर्भ शुक्तिमुक्ताफलस्य श्रीमच्छ्रीनिवास ब्रह्मतन्त्र परकालदेशिकेन्द्र करुणाकटाक्षसमधिगत ब्रह्मविद्यावैशद्यस्य श्रीवेङ्कटार्यानुजन्मनः श्रीकृष्णकविसार्वभौमस्य कृतिषु

**श्री लक्ष्मीसहस्र रत्नप्रकाशिकाख्यायां लक्ष्मीसहस्र व्याख्यायां प्रारम्भस्तबकः प्रथमः**

श्री हयवदन परब्रह्मणे नमः
अस्मद्गुरुपरंपरायै नमः
श्रीरस्तु

# प्रादुर्भावस्तबकः - द्वितीयः

## (वेङ्कटाध्वरिकृतिः - सव्याख्यानम्)

मू. भजे दुग्धाम्बुधिं यत्र परिष्कर्तुं हरेरुरः।
कठिनं सुकुमारं च रत्नं प्रादुरभूद्द्विधा॥ 1

स्फीतं वक्षोरुहद्वंद्वे गीतं धाम सुरासुरैः।
ध्यातं पुनातु नः प्रादुर्भूतं धुग्धपयोनिधौ॥

एवं पूर्वस्मिन् स्तबके लक्ष्मीनाथप्रभृति स्वाचार्यपर्यन्तगुरुपरंपरामनुसंधाय श्रीवैभवप्रकाशनेन परमोपकारकान्प्राचेतसादींश्च प्रणम्य लक्ष्मीस्तोत्ररचनां प्रतिज्ञाय स्तोत्रस्य महत्परिग्रहश्च प्रार्थितः। अथेदानीं स्तोत्रस्य गुणिनिष्ठगुणाभिधानरूपत्वेन- विवक्षितानां सौन्दर्यादिगुणानां च निरालम्बनत्वे प्रतिष्ठितत्वायोगादालम्बनस्य दिव्यमंगळविग्रहस्य च यया कयाचन विधया प्रादुर्भावमन्तरेणासिद्धेराचार्यैश्श्रीस्तुत्यारम्भे ''आविर्भावः कलशजलधा''वित्यनुगृहीतमेव पन्थानमनुरुध्य लक्ष्मीदिव्यमंगळविग्रहप्रादुर्भावमस्मिन् स्तबके वर्णयिष्यन् ''अर्थतश्शब्दतो वापि मनाक्काव्यार्थसूचने''त्युक्तनान्दी पद्यन्यायेन विवक्षितं श्रीप्रादुर्भावं संक्षेपतस्सूचयन् ''प्रचुरबहुमतिस्तद्वस्तु वास्त्वादिकेऽपी''त्युक्त प्रक्रियया- लक्ष्मीप्रादुर्भावभूमित्वेन बहुमाननीयं दुग्धाम्बुनिधिमधिकृत्य प्रथमं मंगळमाचरति। भज इति। दुग्धाम्बुधिं- भजे-सेवे-यत्र-अमृतकल्पतरुकामधेनु चिन्तारत्न सुधाकरादिभिस्स्वसंभवैर्जगदुज्जीवकत्वेन प्रसिद्धे दुग्धाम्बुधौ- हरेः श्रीनिवासस्य- हरेरित्यनेन- ''रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिण''मित्युक्तरीत्या भगवतो निखिलभुवन- मनोनयनहारि रामणीयकं विवक्षितम्। तेन वक्ष्यमाणरत्नयोरेतदुरःपरिष्कारानुरूप शोभादिमत्त्वं द्योत्यते। उरः वक्षः- परिष्कर्तुम्- ''संपरिभ्यां करोतौ भूषणे'' इति परिपूर्वस्य करोतेस्सुडागमः- ''परिष्कारो विभूषण''मित्यमरः। कठिनं कठोरं- सुकुमारं सौकुमार्यविशिष्टं चेति- द्विधा द्विप्रकारं-रत्नं-प्रादुरभूत्-आविरभवत्-कौस्तुभमणिः-रत्नत्वेनाध्यवसिता लक्ष्मीरप्याविर्बभूवेति भावः। सौकुमार्यं च कोमलवस्तुनोऽपि स्पर्शासहत्वं- तथाचोक्तं भूपालेन-''या स्पर्शासहताऽङ्गेषु कोमलस्यापि वस्तुनः-तत्सौकुमार्यं त्रेधा स्यान्मुख्यमध्याधम

विषयकरतिभावस्य तद्गत दुग्धाम्बुनिधिविषयकरतिभावं प्रत्यङ्गत्वात्प्रेयोनामापराङ्गव्यङ्ग्यम्- अयमेव प्रेयोऽलंकार इत्यालंकारिकाः- किञ्च- दुग्धाम्बुधिनाऽलम्बनविभावेन तदीयलोक-विलक्षण सुकुमाररत्नप्रादुर्भावहेतुत्वादिभिरुद्दीपनविभावैः-तत्स्मरणजनित नेत्रविकासादिभिः अनुभावैः- तदनुमितैर्हर्षादिभिर्व्यभिचारिभिश्च विस्मयाख्यस्थायिनः परिपोषणादद्भुतरसो व्यज्यते। तस्य च कविगत दुग्धाम्बुनिधिविषयकरतिभावं प्रत्यङ्गत्वाद्रसवन्नामापराङ्गव्यङ्ग्यं च। अयमेव रसवदलंकार इत्याचक्षते। अनयोरेकव्यञ्जकानुप्रवेशसंकरः। लक्षणं तूक्तमसकृत्- दुग्धाब्धिभजनरूपवाक्यार्थस्य तदीयकौस्तुभलक्ष्मीप्रादुर्भावनिदानता वर्णनात्मकोत्तर वाक्यार्थेन समर्थितत्वात्काव्यलिङ्गभेदः। वर्ण्ययोर्मणिलक्ष्म्योः प्रादुर्भावरूप धर्मैक्यात्तुल्ययोगितालंकारः। कृत्स्नस्य प्रबन्धस्य लक्ष्मीविषयप्रवृत्ततया लक्ष्म्या एव प्रस्तुतत्वेऽपि कौस्तुभादेरपि तन्नान्तरीयकतया प्रकृतत्वमेवेति लक्षणसंगतिः- ''वर्ण्यानां इतरेषां वा धर्मैक्यं तुल्ययोगिते''ति लक्षणात् - प्रकृतार्थपरेण प्रादुरभूदिति पदेन स्तबक विवक्षितप्रादुर्भावसूचनान्मुद्रालंकारः। ''सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदै''रिति लक्षणात्। किञ्च। लक्ष्मीरूपं विषयं स्वशब्देनानुल्लिख्य विषयवाचकरत्नशब्देनैव ग्रहणं विषयनिगरणं- तत्पूर्वकं विषयस्य विषयिरूपतयाऽध्यवसानाद्रूपकातिशयोक्तिः- ''रूपकातिशयोक्तिस्स्यान्निगीर्याध्यवसानत'' इति लक्षणात्- सा च सुकुमारमिति विशेषणात् रत्नान्तरापेक्षयाऽस्य रत्नस्याधिक्यप्रतीतेः ''अनाकाशे कोऽयं गलितहरिणश्शीतकिरण'' इत्यादाविव विषयाधिक्य पर्यवसायिनी- अस्यामतिशयोक्तौ रूपकविशेषणाद्रूपकगत भेदा अपि संभवन्तीति कुवलयानन्दादौ स्पष्टम्- लक्ष्मीरिति वक्तव्ये सुकुमारं रत्नमिति भङ्ग्यन्तरेण कथनात्पर्यायोक्तं च- तच्चोक्तरूपकातिशयोक्त्युत्तम्भितमित्यनयोरङ्गाङ्गिभावसंकरः- प्रेयोरसवतोः- काव्यलिङ्गतुल्ययोगिताहेतुमुद्राणामतिशयोक्त्युत्तम्भित पर्यायोक्तस्य चैकवाचकानुप्रवेश संकरः- वाचकशब्दस्य व्यञ्जकसाधारण्यादिति दीक्षितोक्तेः- किञ्च- लक्ष्म्यां सुकुमाररत्नत्वाध्यवसानरूपातिशयोक्त्या लोकोत्तर लावण्यमांगल्यमान्यत्व भोग्यत्वमानदत्व प्रकाशकत्वादिप्रतीतेरलंकारेण वस्तुध्वनिः- वृत्तमानुष्टुभं पथ्यावक्त्रम्। लक्षणं तु प्रागेवोक्तम्॥1॥

**मू. चतुर्मुखादीन्जगदम्ब डिम्भान् दुग्धैर्बहून्वर्द्धयितुं समृद्धैः।**
**पयः पयोधौ भवती दयाळुस्सत्यं प्रजज्ञे सह कामधेन्वा॥ 2**

भूतपोषणाय चेतनगुणवृत्त्याद्युत्कर्षानकर्षकक्ष्याविभागकार्पण्यव्यतिकरगन्धवैधुर्य च व्यज्यते। चतुर्मुखाः आदयो येषां ते सहस्रमुखपर्यन्ताः तान्- तेऽपि- किं परिच्छिन्नसंख्याका इत्यत्राह। बहूनिति। असंख्याकानित्यर्थः- डिम्भान् स्तनंधयान्- "स्यादुत्तानशयो डिम्भस्स्तन पाश्च स्तनंधय" इत्यमरः- अनेन स्वरक्षणे शक्त्यत्यन्ताभावस्सूचितः- चतुर्मुखादीनित्यनेन- एकैकमुखास्तावत्सन्तु नाम- अनेकमुखा एव सन्त्यसंख्याका इति व्यज्यते। तेन पेयक्षीर पौष्कल्यं वक्ष्यमाणमवश्यंभावि- सकल जगत्स्रष्टृत्वेन प्रथितस्य चतुर्मुखस्यैव त्वया वर्धनीयत्वे तदितरेषां किमुतेति च व्यज्यते- अत एव- समृद्धैः पुष्कलैः- दुग्धैः क्षीरैः- समृद्धशब्देन बहुवचनेन च कादाचित्कोपि पौष्कल्यसंकोचसंभवो व्युदस्यते- "दुग्धं क्षीरं पयस्समे" इत्यमरः- वर्धयितुं वृद्धिं प्रापयितुं- सत्यमित्युत्प्रेक्षाव्यञ्जकश्शब्दः- "मन्येशङ्के ध्रुवं प्रायोनूनमित्येवमादाय" इत्यत्रादिशब्देन सत्यमित्यादिशब्दानां ग्रहणात्- मन्य इत्यादयस्सर्वेऽपि शब्दा अव्ययरूपाः- भवती- दयाळुः दयमाना सती- "स्पृहिगृहिपति दयिनिद्रातन्द्राश्रद्धाभ्य आळुच्" इति दयतेः कर्तर्याळुच् प्रत्ययः-अनेन जन्मनिमित्तं दयाळुत्वमेव- न तु कर्मेति व्यञ्जितम्। "समस्ताश्शक्तयश्चैता नृप यत्रप्रतिष्ठिताः। तद्विश्वरूप वैरूप्यं रूपमन्यद्धरेर्महत्। समस्तशक्तिरूपाणि तत्करोति जनेश्वर। देवतिर्यङ्मनुष्यादि चेष्टावन्ति स्वलीलया। जगतामुपकाराय न सा कर्मनिमित्तजा। चेष्टा तस्याप्रमेयस्य व्यापिन्य-व्याहतात्मिके"ति विष्णुपुराणोक्तरीत्या भगवत इव- "नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी"ति भगवदनपायित्वेन नित्यत्वेन च प्रथितायाश्श्रियोऽप्यवतारोऽकर्मनिमित्तको लोकोपकाराय स्वेच्छयैव कृत इति ध्येयम्- पयःपयोधौ दुग्धजलधौ- अनेन तत्कार्यभूतायां कामधेनौ पयःपौष्कल्यं द्योत्यते। काम्यन्त इति कामा ईप्सितार्थाः- कामप्रदा धेनुः कामधेनुरिति मध्यमपदलोपी समासः- तया सह "सहयुक्तेऽप्रधान" इति तृतीया- प्रजज्ञे प्रादुर्बभूव- "जनीप्रादुर्भावे" अस्माद्दैवादिकाद्भूतानद्यतन परोक्षे लिट्- "लिटस्तझयोरेशिरे" जित्येशादेशे "असंयोगाल्लिट्किदि"ति लिटः कित्त्वे "गमहनजनखनघसां लोपःक्ङित्यवङी"त्युपधा लोपः श्चुत्वं च। भवच्छब्दप्रयोगात्र मध्यम पुरुषः- "युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यम" इति तिङ्वाच्यकारक वाचिनि युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने च मध्यमपुरुषानुशासनात्- सत्यपि पयःपयोधिजनिमत्त्वा-विशेषादात्मनोऽपि पयःपौष्कल्ये कामधेन्वा सह प्रादुर्भावाच्चतुर्मुखादिडिम्भाभिवर्धने तावन्मात्रेणापर्याप्तता व्यज्यते- स्मर्यते हि "माता पुत्रस्य भूयांसि कर्माण्यारभत" इति- "पुत्रवृद्धौ मनो मातुर्न तृप्येदल्पसाधनै"रित्याभाणकश्च- तेनोक्त दयाळुताया इयत्ता वैधुर्यं

काख्यमधसम, आख्यानिकी ता जगुरू गआज जतावनाज जगुरू गुरुश्चत्। जता जगा
गो विषमे समे स्यात्तौज्गौग एषा विपरीत पूर्वे''ति लक्षणात्। अत्राख्यानिकेत्यनुवृत्ति प्रदर्शनार्थं पूर्वार्धोपादानमिति ध्येयम्। इदमुपजातावन्तर्भावितं कैश्चित्- तच्चाग्रिमश्लोके वक्ष्यते- उपेन्द्रवज्रावृत्तमिति प्रतीचीनोक्तिस्तु प्रामादिकी ॥2॥

**मू.** त्वयोज्वलद्दुग्धपयोधिमध्ये महोद्वयं देवि सहोदियाय।
हरेरुरोभूषणमेकमासीदन्यच्छिरोभूषणमष्टमूर्तेः ॥ 3

अथ श्रीप्रादुर्भावं प्रस्तुत्य ''उच्चैश्रवा हरिश्रेष्ठो मणिरत्नं च कौस्तुभम्। उदतिष्ठन्नर श्रेष्ठे''ति रामायणे ''कौस्तुभश्च मणिर्दिव्य उत्पन्नो घृतसंभवः। मरीचिविकचश्श्रीमान् नारायण उरोगत'' इत्यादिपर्वणि। ''ततश्शीतांशुरभवज्जगृहे तं महेश्वर'' इति श्रीविष्णुपुराणे चोक्तप्रकारेण कौस्तुभ चन्द्रमः प्रादुर्भावसाहित्यं तस्याह। त्वयेति। हे देवि। दीव्यतेर्द्युत्यर्थकात्पचादित्वादच्- तत्र देवडिति पाठेन टित्त्वा ''ट्टिढाणञि''त्यादिना ङीप्- अनेन वक्ष्यमाणमहोद्वय सोदरत्वानुगुणद्युतिमत्त्वं सूचितम्। प्रसिद्धं हि सोदर्याणां अन्योन्यच्छायासादृश्यम्- वक्ष्यति चास्मिन्नेव स्तबके ''भ्रातृश्रियं सहभुवः परिबिभ्रतीति'' दुग्धपयोधिमध्ये- त्वया सह उज्ज्वलत् देदीप्यमानं- उज्ज्वलमिति पाठेप्ययमेवार्थः- द्वै अवयवावस्य द्वयम्- संख्याया अवयवार्थे विहितस्य तयपो ''द्वित्रिभ्यां तयस्यायज्वे''ति विकल्पेनायजादेशः- महसोः तेजसोः-कौस्तुभचन्द्रयोरिति भावः। द्वयं ''महस्तूत्सवतेजसो''रित्यमरः- उदियाय उद्बभूव- उत्पूर्वकादिणगतावित्यस्मादादादिकात्कर्तरि लिट्यभ्यासे तिपो णलादेशे ''अचोञ्णिती''ति वृद्धावायादेशे ''अभ्यासस्यासवर्णे'' इती यङ्।

त्वयेत्यत्र ''सहयुक्तेऽप्रधाने'' इति तृतीया। सहार्थश्च समभिव्याहृतपदार्थ- समानकालिकत्वरूपं साहित्यं- तत्समनियतमखण्डोपाधिरूपं वा- तृतीयार्थश्च क्रियासमभिव्याहारे सहार्थबलात् प्रतीयमान तत्क्रियाकर्तृत्वादिकमेवऽद्रव्यगुणसमभिव्याहारे सहार्थबलात्प्रतीयमानस्तत्तत्पदार्थ संबन्ध एव- एवं च पुत्रेण सहागतः- पुत्रेण सह पितुर्गौः- पुत्रेण सहस्थूल- इत्यादौ- पुत्र कर्तृकागमन समानकालिकागमनवान्- पुत्र स्वामिकत्व- समानकालिक पितृस्वामिकत्ववती गौः- पुत्रवृत्तिस्थौल्यसमानकालिकस्थौल्यवानित्यादिः क्रमेण बोधः- क्वचित्समान देशत्वरूपं तत्समनियतं वा तदर्थः। अत एव माषवापोत्तरं

पूर्वश्लोकेऽपि- यद्यप्यत्रादिपमात्रापादितृत्वेन लक्ष्मीशब्दात्तृतीया सिद्धा- न च तिङाऽभिहितत्वान्न तृतीयेति वाच्यम्। इतरसमभिव्याहारं विना प्रतीयमानप्रकृत्यर्थ-क्रियाकर्तुरेव तेनाभिधानात्- तथाऽपि पुत्रेण सहस्थूल इत्याद्यर्थं सूत्रमिहापि सहशब्दयोगमात्रादुपन्यस्तमिति ध्येयम्। गुणक्रियाद्रव्यैर्गुणप्रधानभावेन द्वयोस्संबन्धे सहशब्दप्रयोगो भवति- तत्राप्राधान्यं नाम शाब्दगुणाद्यन्वयित्वाभावः- उक्तेष्वागमनादिभिः पितुश्शाब्दः- पुत्रस्य सहार्थ बलात्प्रतीयमानैस्तैस्संबन्धादार्थः- इतर संबन्धं विना प्रतीयमानत्वं चार्थस्य शाब्दत्वं- एतेन प्रधानत्वं मुख्यत्वं- अत्र नगरेऽयं प्रधानमित्यादिवत्- तदभावरूपमप्रधानत्वं तृतीयावाच्यमित्युक्तिः परास्ता- राज्ञा सह सेना गच्छतीत्यादौ तृतीयानापत्तेरिति भाष्यकैयटमंजूषादौ विस्तरः- एवं चात्र प्रबन्ध मुख्यप्रतिपाद्यतया प्रधानीभूताया लक्ष्म्याश्शाब्दाप्राधान्येऽपि नार्थाप्राधान्यमिति ध्येयम्- नह्यत्र शाब्दाप्राधान्यं दोषः- तस्येष्टत्वात्- वास्तवाप्रधान्यस्य चाप्रसक्तेः- अत एव ''सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते''त्यत्र- ''अस्तु वा भोक्तृसाहित्ये तृतीया- न चाप्राधान्य प्रसंगः- राज्ञा सह भृत्यो भोगान्भुङ्क्ते इत्यत्रेव शाब्दाप्राधान्यस्येष्टत्वात्- वास्तवा प्राधान्यस्य चाप्रसक्तिः- वस्तुस्वभावायत्तस्य तत्प्राधान्यस्य चापरित्यागा''दिति ज्ञानरत्नप्रकाशिकाग्रन्थश्च संगच्छते- इत्यलं प्रसक्तानुप्रसक्तिकया।

प्रकृतमनुसरामः- तस्मिन्नित्यध्याहार्यं- तस्मिन्महोदधे- एकं महः कौस्तुभ इति भावः- हरेः निखिलभुवन मनोहरस्य श्रीनिवासस्य- अनेन भूष्यभूषणयोरानुरूप्यं द्योत्यते- भूष्यतेऽनेनेति भूषणं- ''करणाधिकरणयोश्चे''ति ल्युट्-यद्वा- ''क्रुधमण्डार्थेभ्यस्चे''ति कर्तरि युच्- ''कर्तृकर्मणोः कृती''ति षष्ठी- ततः ''कृद्योगा च षष्ठी समस्यत'' इति समासः- उरोभूषयतीत्युरो भूषणं- शिरो भूषयतीति शिरोभूषणमिति विग्रह प्रदर्शनं तु मन्दं- कर्मण्युपपदे ल्युटो युचो वा विधानाभावात्- न च जनार्दन मधुसूदनशब्दयोरिवास्यापि नन्द्यादित्वं कल्प्यं- अर्दिसूदिभ्यां कर्मण्यणि प्राप्त एव तयोर्नन्द्यादिषु पाठस्य क्लुप्तत्वादिह च तथा कल्पने मानाभावादनुपपत्तिदिरहाच्च- आसीत् अभूत्- असभुवि- अस्मादादादिकाल्लङ् ''अस्ति सिचोऽपृक्त'' इतीट्- अनेन कौस्तुभस्य लक्ष्मीसोदर्यत्वेन ''उरसा मानयन् लक्ष्मीसोदरीं तुलसीं विभुः'' इत्युक्तरीत्या भगवताऽपि माननीयत्वं द्योत्यते-अन्यन्महः-चन्द्र इति भावः- अष्टौ मूर्तयस्सूर्यादयो यस्य सः अष्टमूर्तिः-तस्य रुद्रस्येत्यर्थः-''भवं शर्वमथेशानं तथा पशुपतिं द्विज- भीममुग्रं महादेवमुवाच स पितामहः। चक्रेनामान्यथैतानि स्थानान्येषां चकार सः।

भूषण" मित्यमरः- आसीदित्यनुषज्यते। अनेन चन्द्रमसो जगन्मातृ समानोदयत्वेन "तदम्बु परया भक्त्या दधार शिरसा हर" इत्युक्तरीत्या भगवत्संबन्धाद्गंगाया इव महादेवेनापि शिरसा माननीयत्वं द्योतितम्।

नन्वत्र चन्द्रमसोऽब्धिसंजातत्वे "चन्द्रमा मनसो जात" इति श्रुति विरोध इति चेदत्र विष्णुचित्तगुरवः- "आदौभगवन्मनसो जातस्य चन्द्रस्य द्वौ देहौ- तत्रैकोऽब्धिजश्शिव शिरोभूषणं- अन्यस्त्वत्रिनेत्रजो लोकयात्रानियुक्त" इति- एतच्च श्री विष्णुपुराण प्रथमांश नवमाध्याय व्याख्यायां स्पष्टम्- यत्तु आसीत् आविरासीत् प्रकटीबभवेति पाश्चिम-व्याख्यानम्- तन्न- अन्तरेण प्रादुरादि शब्दसमभिव्याहारमस्तेस्तादृशार्थ प्रत्यायकत्वस्य क्लेशलभ्यत्वात्। प्रकृतासंगतेश्च। अत्रगम्ययोः कौस्तुभचन्द्रमसोर्भ्यङ्ग्यन्तरेण कथनात्पर्यायोक्तम्- सहोदितत्वेनोभयोस्साम्येऽपि हर्युरोभूषणत्वहरशिरोभूषणत्व विशेष सत्भावाद्व्यतिरेकालंकारस्तदुत्तम्भितः- "व्यतिरेको विशेषश्चेदुपमानोपमेययो"रिति लक्षणात्- अनुप्रासस्य चाप्यभ्युच्चयः- न चास्मिन् पूर्वस्मिंश्च श्लोके- त्वयासह- कामधेन्वा सहेति सह भावोक्तिमात्रेण सहोक्त्लंकार इति भ्रमितव्यं- जनरञ्जनत्वाभावात्- "सहोक्तिस्सहभावश्चेद्भासते जनरञ्जन" इति हि स लक्ष्यते- अत एव "अनेन सार्धं विहराम्बुराशे"रित्यादौ न सहोक्ति रिति कुवलयानन्दोक्तं संगच्छते- वृत्तं त्रैष्टुभमिन्द्रमालाख्य मुपजातिः- आद्यपादत्रये- उपेन्द्रवज्रायाश्चरमपादे इन्द्रवज्रायाश्च लक्षणस्य दर्शनात्- "स्यादिन्द्रवज्रा यदि तौ जगौ गः- उपेन्द्रवज्रा जतजास्ततो गौ"- इतीन्द्रवज्रोपेन्द्र वज्रे लक्षयित्वा "अनन्तरोदीरित लक्ष्मभाजः पादा यदीया उपजातयस्ता" इति लक्षितत्वात्- छन्दश्शास्त्रेऽप्युक्तमिन्द्रवज्रोपेन्द्रवज्रानिरूपणावसरे- पादेन पादत्रितयेन चाष्टावर्धार्धयोगेन षडेव भेदाः। इतीन्द्रमालाः किल पूर्वमिश्राः प्रमाणतष्षोडशभेदभिन्ना" इति। पूर्वमिश्राः पूर्वाभ्यामिन्द्रवज्रोपेन्द्रवज्राभ्यां मिश्रा इत्यर्थः। एवमस्य श्लोकस्योपजातित्वेऽप्युपेन्द्र वज्रावृत्तमिति लिखन् बम्भ्रमीति स्म प्रतीचीन इति ध्येयम्॥3॥

**मू. जीवं जीवं प्रत्युदारां समृद्धिं कर्तुं हर्तुं कंजधामे! तमांसि।**
**सर्वं त्रातुं सत्कदम्बं पुराऽब्धेश्चान्द्री मूर्तिर्जायते तावकी च॥ 4**

अथोक्त चन्द्राविर्भावानुवादपूर्वकमस्या अवतारस्य प्रयोजनमाह। जीवं जीवमिति। कंजं पद्मं धाम स्थानं यस्यास्सा। यद्वा कंजस्य धामेव धाम द्युतिः यस्यास्सा कंजधामा-तस्यास्संबुद्धिः हे कंजधामे- "...

सर्वदेशकोशेषु दृश्यते- कंजवासे इति पाश्चात्यपाठकल्पनं तु डाप्प्रत्ययानालोचन मूलकापशब्दभ्रमविजृम्भितं स्यात्- तुल्येऽपि पाठद्वय्यामर्थे यथोक्तदाक्षिणात्यपाठ एव श्रेयान्- सौशब्द्याख्य गुणलक्षण परमलाभसद्भावात्- जीवं जीवः कुक्षिंभरिः पक्षिविशेषः- तं प्रति ''अभितःपरितस्समयानिकषाहाप्रतियोगेऽपी''ति द्वितीया- अत्र ''तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः. तित्तिरिः कुकुभो लावे जीवंजीवश्चकोरकः- कोयष्टिकष्टिट्टिभको वर्तको वर्तिकादय'' इत्यमरोक्तेर्हारीतादीनामिव पक्षिविशेषवाचि शब्दमध्यपाठाज्जीवंजीव चकोरशब्दयोरपि पृथक्पक्षि विशेष वाचित्वमेव नतु पर्यायत्वमिति केचित्- जीवंजीव चकोरशब्दौ पर्यायावित्यन्ये इति टीकासर्वस्वकृत्- वस्तुतस्तु द्वितीयपक्ष एव युक्तः- कोशान्तरे पर्यायत्वस्याप्युक्तेः- तथाच हेमः- ''जीवंजीवः खगान्तरे। द्रुमभेदे चकोरे चे''ति। ''जीवंजीवश्चकोरेस्याद्द्रुमरभेदेपि पुंस्यय''मिति मेदिनी च- अमर सिंहैनैकैक शब्देन पक्षिविशेषनामकथनावसर एव पर्यायशब्दस्यापि पठनं तु लाघवार्थम्- यद्वा- धार्तराष्ट्रमल्लिकाक्षयोर्हंसावान्तर विशेषवज्जीवंजीवस्यापि चकोरावान्तर विशेषत्वेन किंचिद्भेदमादाय पार्थक्येन परिगणनमिति ज्ञेयम्- दृश्यतेहि जीवंजीवस्यापि चन्द्रकरोदरं भरित्वं तत्र तत्र कविभिर्वर्ण्यमानम्- अथामरसिंहस्य जीवंजीवशब्दे चकोरातिरिक्त विलक्षण पक्षिविशेषवाचिताभिसंधावपि न नः किंचिच्छिन्नं- उदाहृत कोशान्तरेण तत्पर्यायताया निष्प्रत्यूहत्वात्।

उदारां महतीं ''उदारोदातृमहतो''रित्यमरः- समृद्धिं तृप्तिमिति यावत्- कर्तुं विधातुं- चकोराणां चन्द्रिकाभिस्तृषं प्रशमय्य सौहित्यं संपादयितुमिति भावः। तमांसि तिमिराणि- हर्तुं निराकर्तुं- सर्वं-सतां नक्षत्राणां कदम्बं निकुरुम्बम्- ''भं नक्षत्रं तारकंस''दिति शेषः- त्रातुं रक्षितुं च- चन्द्रमसस्तदीशत्वादिति भावः- चन्द्रस्येयं चान्द्री- अणन्तत्वान्ङीप्- मूर्तिस्तनुः- तवेयं तावकी- ''युष्मदस्मदोरन्यतरस्यां खञ्चे''त्यत्र चकारेणानुकृष्टो युष्मच्छब्दाच्छैषिकोऽण्- ''तवकममकावेकवचन'' इति युष्मच्छब्दस्य तवकादेशः- अणन्तलक्षणो ङीप्- मूर्तिश्च- पुरा जायते- अजायतेत्यर्थः- पुराशब्दयोगेन ''पुरिलुङ्चास्मे'' इति भूतानद्यतने लट्- लक्ष्मीमूर्तिपक्षे त्वेवमर्थः- जीवशब्दस्य वीप्सायां द्विर्वचनं- जीवंजीवं प्रति- प्रतिजीवं प्रतिचेतनमित्यर्थः- ''लक्षणेत्थंभूताख्यान भागवीप्सासु प्रतिपर्यनव'' इति प्रतिशब्दस्य कर्मप्रवचनीय संज्ञायां ''कर्मप्रवचनीययुक्ते द्वितीये''ति द्वितीया- न चात्र ''व्ययं विभक्तीत्यादिना वीप्सारूपे यथार्थेऽव्ययीभाव समासस्य

सिध्यतीति तत्वम्- वृत्तौद्विर्वचनं तु न- समासेन वीप्साया द्योतितत्वादिति हयवरट् सूत्रे कैयटः- प्रतिना तस्या उक्तत्वादिति तु तत्वम्- द्विरुक्तजीवशब्दोऽत्र सत्कदम्बमिति सच्छब्द पृथगुक्तेर्गोबलीवर्दन्यायेन तद्व्यतिरिक्तजीवपरः- सामान्यवाचकपदस्य प्रयुक्तपदान्तार वैयर्थ्यपरिहाराय तद्व्यतिरिक्त परत्वकल्पनं गोबलीवर्दन्यायः- गामानय बलीवर्दमानयेत्युक्ते बलीवर्दस्यापि गोत्वजात्याक्रान्ततया गोशब्देनैव लाभे बलीवर्दपदवैयर्थ्यं स्यात्तद्वारणाय गोपदस्य बलीवर्दान्यगोपरत्वमिति तदभिप्रायः- ते च जीवाज्ञानिपर्यायसच्छब्द पृथङ्निर्देशाल्लिङ्गात् ''चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन।आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ॥ तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते। प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः॥ उदारास्सर्व एवैते ज्ञानी त्वात्मैव मे मतम्॥ आस्थितस्स हि युक्तात्मा मामेवानुत्तमां गतिम्। बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते। वासुदेवस्सर्वमिति स महात्मा सुदुर्लभ''इति गीतोक्त चतुर्विध सुकृतिमध्ये उदारतयाऽभिमता आर्तार्थार्थि जिज्ञासव एवौचित्यात् ग्राह्याः- न त्वेतदतिरिक्ता अपि चेतनाः- अनुपासकानामपि समृद्धिप्रदानेऽति प्रसङ्गापत्तेः- जीवंजीवं प्रति उक्तरीत्या उदारतया निर्दिष्टान्सर्वांश्चेतनान् प्रतीत्यर्थः- उदारां महतीं- तदुदारत्वानुगुणा-मिति भावः- समृद्धि- यथा क्रमं तदपेक्षितां भ्रष्टैश्वर्य पुनःप्राप्तिरूपां- अपूर्वैश्वर्य लाभरूपां- प्रकृतिवियुक्त ब्रह्मात्मकस्वात्मस्वरूपावाप्तिरूपां च संपदं- तदेतदभाषि सप्तमाध्याय गीताभाष्ये-चतुर्विधा इति श्लोक विवरणावसरे-''आर्तः प्रतिष्ठाहीनो भ्रष्टैश्वर्यः पुनस्तत्प्राप्ति-कामः- अर्थार्थी अप्राप्तैश्वर्यतया ऐश्वर्यकामः- तयोर्मुखभेदमात्रं- ऐश्वर्यविषयतयैक्यादेक एवाधिकारः- जिज्ञासुः प्रकृतिवियुक्तात्मस्वरूपावाप्तीच्छुः- ज्ञानमेवास्य स्वरूपमिति जिज्ञासुरित्युक्तं-ज्ञानी च-इतस्त्वन्यां प्रकृतिं विद्धि मे परामित्यादिनाऽभिहित भगवच्छेषतैक-रसात्मस्वरूपवित् प्रकृति वियुक्त केवलात्मन्यपर्यवस्यन् भगवन्तं प्रेप्सुर्भगवन्तमेव परमप्राप्यं मन्वान'' इति।

नन्वत्र जिज्ञासोः प्रकृतिवियुक्त ब्रह्मात्मकस्वात्मस्वरूपावाप्तिरूपां समृद्धिमिति व्याख्यानमयुक्तम् - ''जिज्ञासुः प्रकृतिवियुक्तात्मस्वरूपावाप्तीच्छु''रिति भाषणादस्या ब्रह्मात्मक प्रकृतिवियुक्तकेवलात्मस्वरूपावाप्तीच्छा सद्भावस्यैव व्यक्तत्वादिति चेन्न- अष्टमाध्याये ''यत्र काले त्वि''ति श्लोकविवरणावसरे ''आत्मयाथात्म्यविदः परमपुरुषनिष्ठस्य च ''स एनान्ब्रह्म गमय''तीति ब्रह्मप्राप्तिवचनादचिद्वियुक्तमात्मवस्तु ब्रह्मात्मकतया ब्रह्मशेषतैकरसमित्यनुसंधेयम्- तत्कृतुन्यायाच्च- परशेषतैकरसत्वं यस्यात्म

विदः परमात्मशरीरभूत स्वात्मोपासकाः- ज्ञानिनस्तु स्वात्मशरीरक परमात्मोपासनपरा'' इति तत्रस्थ तात्पर्यचन्द्रिकाश्रीसूक्तेश्च विरोधस्स्यात् - न चाक्षर यथात्म्यविदो जिज्ञासुरन्य एवेति भ्रमितव्यम्- तदैक्यस्यैव तत्र व्यवस्थापितत्वात्- तथा च तत्रैवं तात्पर्यचन्द्रिका ग्रन्थः- ''न चात्र जिज्ञासोरन्य एवात्मयथात्म्यविदिति भाष्यते- जिज्ञासुवेद्यतयोक्तस्वभाव विसर्गयोरत्र च पञ्चाग्नि विद्योदाहरणात्- मध्ये च कैवल्यार्थिन एव मूर्धन्य नाड्या निष्क्रमण मनावृत्तेश्चोक्ता- आत्मयथात्म्याक्षरयथात्म्यशब्दयोश्चात्र न भिन्नार्थत्व''मिति। न हि केवल प्रकृतिवियुक्तस्वात्मोपासकस्य मूर्धन्यनाड्या निष्क्रमणमर्चिरादिगत्या ब्रह्मप्राप्तिः पुनरावृत्तिश्च संभवति। इदमपि तत्रैव तात्पर्यचन्द्रिकायां व्यक्तमन्वग्राहि- ''अर्चिरादि-निषेधस्तु ब्रह्मात्मकस्वात्मानुसंधानरहितस्वात्मोपासनविषयः- इदमपि भाष्यादिषु व्यक्तमेवोक्तम्- तस्मादचिन्मिश्रं केवलं वाऽचिद्वस्तु ब्रह्मदृष्ट्या तद्वियोगेन च य उपासते- न तान्नयति- अपितु परं ब्रह्मोपासीनानात्मानं च प्रकृति वियुक्तं ब्रह्मात्मक मुपासीनानाति-वाहिको गणो न यतीत्यादिभि''रिति। एतेन प्रकृति वियुक्त केवलात्मोपासकस्यार्चिरादि गतिरस्ति ब्रह्मानुभवस्तु नास्ति- तस्य रमणत्यक्तपत्नीवत् क्वचित्कोणेऽवस्थानमिति केषांचित्कल्पनं परास्तम्- उदाहृत भाष्यादिग्रन्थ विरोधात्- किञ्च- केवलात्मोपासकस्य अर्चिरादिगतिमभ्युपगच्छन् किं तस्य निश्शेषकर्मक्षयमभ्युपैति-उत कर्मैकदेशसंबन्धं- नाद्यः- निश्शेषकर्मक्षये स्वाभाविकरूपाविर्भावेन ब्रह्मानुभवस्यावश्यंभावित्वात्- न द्वितीयः- कर्मशेषयोगे संसारप्रसङ्गात्- तदेतदन्वग्राहि रहस्यरक्षायां स्तोत्राधिकारे श्रीमदाचार्यैः- ''सर्वकर्मविनिर्मोक्षे मुक्तिभेदः कथं भवेत्। कर्मैकदेशयोगे तु न मुक्तिर्भुक्ति भेदवत्। न च कैवल्यवाङ्मात्रान्मुक्तिरेषेति युज्यते। स्वमात्रभुक्तितात्पर्यात्तत्र तस्य प्रयोगत'' इति। जरामरणादि हेतुभूत सर्वकर्म विनाशादसंसारः-तावन्मात्रेण च मुक्तत्व व्यपदेशः- ब्रह्मानुभव प्रतिबन्धक कर्मणस्त्वविनाशात्तदनुभावाभाव इति चेदस्त्वेवमेतत्कर्म परस्तादपि न नङ्क्ष्यतीत्यत्र न नियामक मस्तीति दिक्।

तदेतत्सर्वं विस्तरतो निरूप्य तात्पर्यचन्द्रिकाया-मनुगृहीता इमे संग्रहश्लोकाः। ''परप्राप्त्यादि रहित नित्यकैवल्यकल्पना। सूत्रभाष्य श्रुतिस्मृत्यादीनां बाधान्न सिद्ध्यति। अतोऽधिकारिभेदेन व्यवस्थाभेदमाश्रिताः। अन्यामपि गतिं प्राञ्चः प्रतीचीं प्रत्यपादयन्। तत्रावृत्तिपरप्राप्तिवैरूप्यादेरयोगतः। अस्मदुक्तं श्रुतिस्मृत्योरनपायं रसायन''मितीत्यास्तां तावत्। सर्वं समस्तम्-सतां ''अस्तिब्रह्मेतिचेद्वेद सन्तमेनं ततो विदु''रिति निरुक्तप्रकाराणां

त्रिविधजनापेक्षया विलक्षणतया [illegible]

चेतनानां- कदम्बं-त्रातुं भक्तियोगोत्पत्ति प्रतिबन्ध निरसनपूर्वकं स्वविशिष्ट भगवत्प्राप्तिपर्यन्त निरवधिकैश्वर्य दानादिना रक्षितुम्- तमांसि "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्- ददामि बुद्धियोगं तं येन मामुपयान्ति ते। तेषामेवानुकम्पार्थ महमज्ञानजं तमः। नाशयाम्यात्म भावस्थो ज्ञानदीपेन भास्वते"ति गीतोक्त प्रकारेण सत्कदम्बस्य प्राचीन कर्मरूपाज्ञानजन्यानि स्वविशिष्ट भगवद्व्यतिरिक्तविषयप्रावण्यरूपाणि पूर्वाभ्यस्तानि तमांसि- हर्तुं नाशयितुं च- अत्र श्रीमद्गीताभाष्यम्- "तेषां सततयुक्तानां सतत योगमाशंसमानानां मां भजमानानामहं तमेव बुद्धियोगं विपाकदशापन्नं प्रीतिपूर्वकं ददामि- येन ते मामुपयान्ति- किंच- तेषामेवानुग्रहार्थं महमात्मभावस्थस्तेषां मनोवृत्तौ विषयतयाऽवस्थितो मदीयान्कल्याणगुणांश्चाविष्कुर्वन्म-द्विषयज्ञानाख्येन भास्वता दीपेन ज्ञानविरोधि प्राचीनकर्मरूपाज्ञानजं मद्व्यतिरिक्त विषयप्रावण्यरूपं पूर्वाभ्यस्तं तमो नाशयामी"ति- ज्ञानविरोधीत्यादेरेवं भावस्तात्पर्य चन्द्रिकायामन्वग्राहि- "हेतुकार्यभावेन व्यपदेशादज्ञानतमश्शब्दयोरत्रार्थान्तरं वाच्यम्- कर्मणि च ज्ञानविरोधित्वेनाज्ञान शब्दः- यथोक्त "मविद्याकर्मसंज्ञाऽन्ये"ति। कर्मजन्यं भगवत्साक्षात्काररूपप्रकाशप्रतिबन्धकं च तमोऽर्थस्वभावाद्विषयान्तरप्रावण्यमेव। निरतिशयभोग्य भगवत्ज्ञानस्य भोग्यान्तरप्रावण्यनिवर्तकत्वं युक्तम्- स्थितेऽरविन्द इति न्यायात्- तदभिप्रेत्योक्तं ज्ञानविरोधीत्यादि- यद्यपि विषयप्रावण्य निवृत्तिपूर्वकं भजनं- तथापि संस्कार विशेषादनुवृत्तं प्रावण्यमिह भजनविनाश्यतयोक्तमिति नान्योऽन्याश्रय" इति। एवं चाज्ञानजं तम इत्यस्य "प्रमोदमोहौ तमसो भवतोऽज्ञानमेव चे"त्यनेनोक्तकार्यकारणभाव वैपरीत्याभिधायिना न विरोधः- गुणत्रय विभागाध्यायस्थे तत्र श्लोके तमोऽज्ञानशब्दयोस्तमो-गुणज्ञानाभावरूपार्थकत्वात्तथैव भाषणाच्चेत्यास्तां तावत्।

तावकी- मूर्तिः अप्राकृत दिव्यमङ्गळ विग्रहः- पुरा जायते- प्रादुरभूदित्यर्थः- नन्वत्र भगवत्कर्तृकस्य चतुर्विधभक्तेप्सितदानस्य लक्ष्मीकर्तृकतावाचोयुक्तिः कथमिति चेत्- सर्वेषामपि कर्मणामविशेषेण उभयकर्तृकत्वस्य प्रमाणसिद्धत्वादित्यवधेहि- तथा च लक्ष्मीतन्त्रैकादशाध्याये "विष्णुर्नारायणश्श्रीमान्परमात्मा सनातनः। षाड्गुण्यविग्रहो नित्यं परंब्रह्माक्षरं परम्। तस्य मां परमां शक्तिं नित्यं तद्धर्मधर्मिणीम्। सर्वभावानुगां विद्धि निर्दोषामनपायिनीम्। सर्वकार्यकरी साहं विष्णोरव्ययरूपिणः-शुद्धाशुद्धमयैर्भावैर्विततत्या-त्मानमात्मना। परव्यूहादिसंभेदं व्यूहयन्ती हरेस्सदा। शुद्धषाड्गुण्यमादाय कल्पयन्ती तथा तथा। [illegible]

व्याचख्युश्च। "ऐश्वर्यमक्षरगतिं परमंपदं वा कस्मैचिदञ्जलिभरं वहते वितीर्य- अस्मै न किंचिदुचितं कृतमित्यथाम्ब त्वं लज्जसे कथय कोऽयमुदारभाव" इत्यभियुक्ताः। व्यतिरेकमुखेन चैतत् स्थिरीकृतं चतुश्श्लोक्याम्। "श्रेयो नह्यरविन्दलोचनमनःकान्ता प्रसादादृते संसृत्यक्षर वेष्णवाध्वसु नृणां संभाव्यते कर्हि"चिदिति। यद्वा। जीवंजीवं प्रतीत्यनेनार्तार्थार्थिनोरुभयोरेव ग्रहणं-ऐश्वर्यार्थित्वेनोभयोरप्यैक राश्यात्-सत्कदम्बमित्यनेन ज्ञानिनः कैवल्यार्थिनश्च ग्रहणं- उभयोरपि मुखभेदेन परिपूर्ण ब्रह्मोपासकत्वात्- अत एव वेदान्तसारे "उभयेऽपि हि परिपूर्णं ब्रह्मोपासते-मुखभेदेन स्वात्मशरीरकं ब्रह्म केचन-ब्रह्मात्मक स्वात्मानमितर" इति भाषितम्- न चात्म याथात्म्यविदोऽपि परिपूर्ण ब्रह्मोपासकत्वे तस्य ब्रह्मप्राप्त्यवश्यं भावाद्गीतायामुदार कोटि निवेशनं विरुध्यत इति भ्रमितव्यं-तस्य किंचित्कालं प्रकृतिवियुक्तात्मानु-भवोत्कण्ठितत्वेन परब्रह्मप्राप्तेर्विलम्बितत्वादेवोदारकोटि-प्रवेशनं-न पुनस्सर्वात्मना ब्रह्मप्राप्तिर्नास्त्येवेति। "अतएव सप्तमे प्रक्रान्तो जिज्ञासुः परमात्म-प्राप्तिकाम-ज्ञानिव्यतिरिक्तत्वात् ब्रह्मात्मकस्वात्मानुसंधायीति न भ्रमितव्यम्- तस्य चोदारकोटिमात्रे निवेशस्त्वात्मानुभवविलम्बविमुखज्ञानिव्यतिरेका"दिति तात्पर्य-चन्द्रिकायामनुगृहीतं संगच्छते। यत्पुनरुच्यते "येतु निष्ठास्त्रयो भक्ताः फलकामा हि ते मताः। सर्वे च्यवणधर्माण" इति तत्राप्यात्ममात्रानुभवसुखस्यास्थिरत्वादेव च्यवनधर्मत्वमुच्यते। न तावता तस्य पुनस्संसारप्रसङ्गः- "इन्द्रलोकात्परिभ्रष्टो मम लोकपरायणः। प्रमुक्तस्सर्वसंसारैर्मम लोकं च गच्छति। प्रच्युतो वा एषोऽस्माल्लोकादागतो देवलोक"मित्यादाविवोत्तरोत्तरातिशयित पदप्राप्तावपि पूर्वपदभ्रंशमात्राच्च्यवनधर्मत्व-वाचोयुक्तेरविरोधात्- परिमितसुखानुभव विलम्बेन तदानीं निरतिशयसुखाननुभवात् भ्रष्टत्वेनापि निन्दोपपत्तेश्च- उपासन दशायामनुभूते परमात्मनि फलदशायां किंचित्कालमनुभव विच्छेदाद्वा प्राप्तपदभ्रंश लक्षण च्यवनधर्मत्वम् "प्रतिबुद्धस्तु मोक्षभागि"ति चाव्यरहित मोक्षभाक्त्वं प्रतिबुद्धस्योच्यते- न तावताऽन्यस्य मोक्षाभावः- "भुक्त्वा च भोगान्विपुलांस्त्वमन्ते मत्प्रसादतः। ममानुस्मरणं प्राप्य मम लोकमवाप्स्यसी"ति वदविरोधात्- यथा च मुमुक्षोरेव कस्य चिन्मध्ये ब्रह्मकाय निषेवण सुखमुच्यते- तथाऽत्रापि स्थानविशेषे स्वात्मानुभव विलम्ब" इति तात्पर्यचन्द्रिकायां विस्तरः।

नन्वेवमात्म याथात्म्यवेदिनो ब्रह्मप्राप्ति विलम्बमात्रेणोदारकोटिप्रवेशने मधुविद्यानिष्ठस्याप्युदार कोटावेव स्यात्प्रवेशः- तस्यापि ब्रह्मप्राप्तेर्वस्वादि पदप्राप्ति पूर्वकत्वेन

आत्मयथात्म्यविदस्तु ब्रह्मात्मक स्वात्मोपासकत्वमित्यस्ति महद्वैलक्षण्यमिति चेत्- अस्तु नाम नैतत्प्रयोजकमात्मयाथात्म्यविद उदारकोटिनिवेशने- किं तु ब्रह्मप्राप्तिविलम्ब एव- तस्मिंश्चोभयोरप्यविशिष्टे मधुविद्या निष्ठस्याप्युदारकोटि प्रवेशं को नु नाम निरुन्ध्यात्। एवं ब्रह्मकाय निषेवकादीनामपि- वस्तुतस्तु मधुविद्यानिष्ठस्योदारकोटि प्रवेशा प्रवेशौ यथोचितं भवताम्- उक्तं तावदुपपन्नमित्यलं प्रसक्तानुप्रसक्तिकाकुतूहलेन- यद्वा। अनेन श्लोकेन ''यदा यदा हि धर्मस्य ग्लानिर्भवति भारते''त्युपक्रम्य ''परित्राणाय साधूनां विनाशाय च दुष्कृताम्। धर्मसंस्थापनार्थाय संभवामि युगे युगे''इत्युक्त प्रकारेण भगवत इवास्या अप्यवतार प्रयोजनं विवक्षितम्- अत्रोदाहृत प्रमाणानुरोधेन जीवंजीवमिति वाक्यत्रयस्य व्युत्क्रमेण योजना-सर्वं-सतां साधूनां ''न चलति निजवर्णधर्मतो यस्सममतिरात्मसुहृद्विपक्षपक्षे। न हरति न च हन्ति किंचिदुच्चैः पुरुषवरं तमवेहि विष्णुभक्त''मित्याद्युक्त लक्षणानां भागवतानां- कदम्बं-त्रातुं-एते मत्समाश्रयणे प्रवृत्ता मन्नामकर्मस्वरूपाणां वाङ्मनसागोचरतया मद्दर्शनादृते स्वात्मधारणपोषणादिकमलभमानाः क्षणमात्रकालं कल्पसहस्रं मन्वानाः प्रशिथिल सर्वगात्रा भवेयुरिति स्वस्वरूपचेष्टितावलोकनालापादिदानेन रक्षितुं- न ह्यपवर्गसुखादि वदवतारमन्तरेण स्वसंकल्पमात्रेणैवैतच्छक्यमिति भावः- तमांसि ''तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्- असाधारण्येन हि व्यपदेशा भवन्ती''ति च न्यायात्तमः प्रचुरान्पूर्वोक्त विपरीतान् दुष्कृतः- हर्तुं विनाशयितुं- अस्य ''विनाशाय च दुष्कृता''मित्येतदर्थानुवादकत्वेन तत्रेवात्र चकाराश्रवणाच्चकारोऽध्याहर्तव्यः- अन्यथा वाच्यवर्जितदोषापत्तिश्च- कंजधामे तमश्चेति पाठेतु नाध्याहार क्लेशः- स च चशब्दो न समुच्चयार्थः कित्वन्वाचयार्थः- समुच्चयस्समप्रधानयोः। अन्वाचयः प्रधानानुषङ्गिकयोः।

इदमप्युक्तमन्तरादित्याधिकरण श्रीमद्भाष्ये- ''साधवो ह्युपासकाः- तेषां परित्राणमेवोद्देश्यं- आनुषङ्गिकस्तु दुष्कृतां विनाशः- संकल्पमात्रेणापि तदुपपत्ते''रिति। अत्र ''इत्थं यदा यदा बाधा दानवोत्था भविष्यति। तदा तदाऽवतीर्याहं हनिष्यामि महासुरानि''ति लक्ष्मीतन्त्रे साक्षाल्लक्ष्म्युक्तमनुसंधेयम्। इदमपि वात्सल्यनिधेरस्याजगन्मातुर्दुष्कृद्विनाशनं नात्यन्त विनाशनम्। किं तु वैपरीत्यहेतुभूत राक्षस प्रकृतिशरीरग्रन्थ्यादिविनिवर्तनम्- तन्निवृत्तौ च तेषामपि धार्मिकत्वं संभवेदिति तदपि धर्मसंस्थापन एव पर्यवस्यतीति ध्येयम्। जीवंजीवं प्रति प्रतिचेतनमित्यर्थः- यद्वा। ''धर्ममूलास्समृद्धय'' इत्युक्तेर्द्धर्मसंस्थापनेन श्रेयस्विनीं संपदमित्यर्थः। कर्तुं च-अनुष्ठान मुखेनोपदेशमुखेन च धर्मप्रवर्तनं व्यासादिद्वाराऽपि

गोऽब्धिलोकै''रिति लक्षणात् ॥4 ॥

मू. विश्वासेचनकं मुखं तव पयस्सिन्धोरुदञ्चत्तदा
शङ्कित्वा विगळत्कलङ्कमपरं चन्द्राङ्कुरं शङ्करः ।
न्यस्तं मस्तपदे विधुं प्रथमतो नूनं भृशं न्यून इ
त्यम्ब भ्रंशयितुं स्तुवन्निव शिरःकम्पं रमे निर्ममे ॥ 5

अथ लक्ष्मीप्रादुर्भाव कालिकं रुद्रस्य श्लाघाशिरःकम्पमाह। विश्वेति। हे अम्ब- रमे- शङ्करश्शिवः- तदा मथनावसरे- पयस्सिन्धोर्दुग्धजलधेः- उदञ्चत् उदयमानं- न तूदितमिति भावः- अनेन फालमात्रोदितत्वं द्योतयता वक्ष्यमाण चन्द्राङ्कुर भ्रमः परिपोष्यते- विश्वस्याखिलप्रपञ्चस्य- आसेचनकं शश्वद्दृश्यमानमप्यपूर्ववद्दर्शनाशामपरिच्छिन्द- दित्यर्थः। तदुक्तममरसिंहेन- ''तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शना''दिति- आसिच्यते आपूर्यते दृगादिकमनेनेत्यासेचनकमिति व्याख्यातारः- अनेन ''क्षणेक्षणे यन्नवतामुपैति तदेवरूपं रमणीयताया'' इत्युक्तलक्षणरामणीयकातिशयो व्यज्यते। अत एव- तव मुखं अपरं पूर्वं स्वशिरसि धृतादन्यम्- विगळन् कळङ्को यस्मात्तं तथोक्तम्- चन्द्रः अङ्कुर इव चन्द्राङ्कुरः-तं- अभिनवोद्भिद्यमानं चन्द्रमित्यर्थः। ''अङ्कुरोऽभिनवोद्भिदी''त्यमरः- शङ्कित्वा- उदयमानं तव मुखं विगत्कळङ्क चन्द्राङ्कुरान्तरत्वेन भ्रान्त्वेत्यर्थः। यत्तु पयस्सिन्धोः यदा- उदञ्चत् उदयं प्राप्नुवत्- तदेति प्रतीच्यस्य यदा शब्दाध्याहारेण व्याख्यानं- तन्मन्दम्- आसीदित्यध्याहारान्तरस्यापि प्रसक्तेः- संभवन्त्यामनध्याहारेणैव स्वारसिकोपपत्तौ अध्याहार वैशसस्यायुक्तत्वाच्च। अत एव प्रथमतः लक्ष्मीवदनाविर्भावात्पूर्वं ''आद्यादिभ्य उपसंख्यान''मिति तसिः। मस्तमेव पदं श्रेष्ठस्थानं- तस्मिन्- ''पदस्थः पिहितं द्वारं परलोकस्य पश्यती''त्यादौ पदशब्दस्योन्नतराज्यादि स्थानपरत्वप्रसिद्धेः- ''पदं व्यवसितत्राणास्थान लक्ष्माङ्घ्रिवस्तुष्वि''त्यमरः- न्यस्तं निहितं- विधुं चन्द्रं- कळामात्रमिति यावत्- भृशमत्यन्तं-न्यून इति-पूर्वमाविर्भूतमात्रं चन्द्रमसमेतदुत्कर्षस्सातिशयस्स्याद्वा न वेत्यनालोच्य ''चिरकारी प्रशस्यत'' इति भारतनीतिमप्युलंघ्य सहसा शिरस्पदमध्यारोप्य पश्चादुदयमाने लक्ष्मीवदने लोकोत्तर विकलङ्क चन्द्रबुद्ध्या स्वेनादौ धृतश्चन्द्रस्सर्वथाऽपि सर्वैर्गुणैरस्मा- न्निहीन इत्यालोच्येति भावः। स्तुवन्निव श्लाघमान इव- इव शब्दश्श्लाघाया व्याजमात्रतां द्योतयति। भ्रंशयितुं नूनं अधःपातयितुमिव- शिरःकम्पं उत्तमाङ्गान्दोळनं श्लाघानुभावरूपं-

गृहीतग्राहितया मौर्ख्याभिव्यञ्जकः "गृहीतमेव गृह्णीयादविविच्य गुणागुणान्- यस्स मूर्खतमः प्राज्ञैर्नियतं परिहास्यते। उत्तमानामलाभे तु स्थाने स्याद्धीनसंग्रहः। मौर्ख्यं हीनापरित्यागो लब्धेप्युत्तमवस्तुनी"ति नीतिसंग्रहोक्तेः- तस्मात् "उपायैस्तत्समीकुर्यात् प्रमाणैश्च गुणी भवेत्। इदं नीतिमतां कृत्यमनुपायस्तु सीदती"त्युक्तरीत्या तस्य भ्रंशनं नीतिमतां कृत्यमिति श्लाघाव्याजेन भ्रंशयितुमिव शिरः कम्पमकार्षीदिति भावः। यत्तु न्यूनमित्यम्ब भ्रंशयितुमिति द्वितीयान्ततया न्यूनशब्दं पठंस्तथैव न्यूनमिति भ्रंशयितुमिति व्याचख्यौ प्रतीचीनः। तन्न-इतीति निपातेन कर्मणोऽभिहितत्वाद्द्वितीयाया अयोगात्- अनभिहित एव कर्मणि द्वितीयानुशासनादभिहिते तु प्रातिपदिकार्थमात्रे प्रथमाया एव प्रवृत्तेश्च- यद्यप्यनभिहित इत्यत्र "अभिधानं च प्रायेण तिङ्कृत्तद्धित समासै"रिति परिगण्यते- तथापि प्रायग्रहणात्क्वचिन्निपातेनाप्यभिधानमभ्युपगतं प्राचीनैः- तथा च सूत्रितं वामनेन- "निपातेनाप्यभिहिते न कर्मविभक्तिः परिगणनमस्य प्रायिकत्वा"दिति- उदाहृतं चैतत्सूत्रवृत्तौ "विषवृक्षोऽपि संवर्ध्य स्वयंच्छेतुमसांप्रतम्"- "पण्डितं मूर्ख इति मन्यत"इति। अतः प्रथमान्तपाठ एव साधीयान्-नन्वस्तूदयमाने लक्ष्मीवदने रुद्रस्य विकळङ्क चन्द्रकळाभ्रमः- तावतैव कथं स्वशिरोधृतचन्द्रकळान्यूनतानिश्चयः- कथंतरां तद्भ्रंशनोद्योगश्च- निष्कलङ्कत्वस्योभयसाधारण्यात्-न हि द्वयोर्वस्तुनोर्गुणसाम्ये एकत्रैव निकर्षो वा उत्कर्षो वा ज्ञातुं शक्यः-न च शिवशिरस्थचन्द्रकळानिष्कळंकतायां विवदितव्यम् "एकयाऽपि कलया विशुद्धया योऽपि कोऽपि भजते गिरीशता"मित्याचार्यश्रीसूक्तेः- "जयति परिमुषित- लक्ष्मा भयादनुत्सर्पतेव हरिणेन। इह केसरिकरजाङ्कुरकुटिला हरमौळिशशिरेखे"त्यादि मुरारि मिश्राद्युक्तेश्च तस्या निर्विवादत्वादिति चेत्- इदं हि सर्वरात्रं रामायणं श्रुतवतः पुरुषस्य प्रातस्सीतारामयोस्संबन्धप्रश्नवदपहास्यम्- किमु वयं चन्द्रकळाभ्रमविषयलक्ष्मीवदन निष्कळंकतामेव शिवशिरोधृत चन्द्रकळान्यूनतानिश्चये हेतुमवादिष्म-येनैवं शङ्कसे-अपितु तस्य आब्रह्मकीटमखिललोकासेचनकत्वमेव। तच्च शिवशिरस्थचन्द्रकळायां न कदाऽपि संभवतीति नोक्तशङ्कावकाशः-एतेनैव पयोनिधिमथनावसरप्रादुर्भूतश्चन्द्रमाः कळामात्र- तनुरेवेत्यपि सिद्धम्- "ततश्शीतांशुरभवज्जगृहे तं महेश्वर" इति विष्णुपुराणे तच्छब्देन रुद्रकर्तृकग्रहणकर्मतया जलधिप्रादुर्भूतस्यैव परामर्शदर्शनाद्विना प्रमाणं तस्य प्रादुर्भाव

सगच्छति। न च शिवशिरोधृतस्यापि तस्य पूर्णत्वमेव कुतो न स्यादिति भ्रमितव्यम्- उदाहृताचार्यश्रीसूक्तेः "बालेन्दुमकुटं पाण्डु" मित्यानुशासनिकोक्तेः- "चन्द्ररेखां च बिभ्रत मिति चतुर्थस्कन्धोक्तेः "मकुटावतंसकलिकां वन्दे कळामैन्दवीम् - शिरसि शशिरेखा न कुसुमं- केयं कन्यास्थितात शिरसि शशिकले" त्यादि परस्सहस्र महाकवि मूर्धन्योक्तेश्चा संगत्यापत्तेः-एतेन "ततश्शतसहस्रांशुर्मथ्यमाने पयोनिधौ। प्रसन्नात्मा समुत्पन्नस्सोमश्शीतांशुः उज्ज्वल" इत्यादिपर्वोक्तमपि न विप्रतिपद्यत इति ध्येयम्। वस्तुतस्त्वाविर्भावावसरे शशिनस्संपूर्णत्वं वा एककळामात्रत्वं वा यथा प्रमाणं भवतु- शिवमूर्धनि विधृतस्यैक कलामात्रत्वे न काचन विप्रतिपत्तिरिति दिक्।

अत्र लक्ष्मीवदन प्रादुर्भावसमये शंकरकर्तृक स्वशिरस्थापितचन्द्रकला- भ्रंशनमसदेव शिरःकम्पफलत्वेनोत्प्रेक्ष्यत इत्यसिद्धविषया फलोत्प्रेक्षा- श्लाघाव्याजेन शिरस्पदन्यस्त चन्द्रकळाभ्रंशनरूपेष्ट साधनात्पर्यायोक्त विशेषश्च- "पर्यायोक्तं तदप्याहुर्यद्व्याजेनेष्टसाधन" मिति लक्षणात्। लक्ष्मीवदने चन्द्राङ्कुरान्तरभ्रान्तेः भ्रान्तिमदलंकारः- तेन चेत्थाप्यमाना उक्तोत्प्रेक्षा- उक्तपर्यायोक्त गर्भैवोत्थाप्यत इत्युक्तभ्रान्तिमदलंकार उभयोरप्युपकारकः- तत उत्प्रेक्षापर्यायोक्तयोः एककालिकत्वाद्विनिगमनाविरहेण परस्परापेक्षया चारुतोन्मेषतौल्याच्च समप्राधान्य संकरः- उक्तानामलंकाराणां यथायथ मनुप्रासैस्संसृष्टिरेकवाचकानुप्रदेश संकरश्च। यत्तु नूनमित्यसिद्ध विषया हेतूत्प्रेक्षेति पाश्चत्यः- तत्तु अनिरूपणविजृम्भितम्- "प्रायोऽब्जं त्वत्पदेनैक्यं प्राप्तुं तोये तपस्यती" त्यादावैक्यप्राप्तिलक्षणफलस्येवात्रापि भ्रंशनरूपफलस्यैवोत्प्रेक्षणात्- भ्रंशनोद्देशेन शिरःकम्पस्य प्रवृत्तत्वेन तस्य फलत्वात्- क्रियाप्रवृत्त्युद्देश्यं हि फलम्- "तुमुण्ण्वुलौ क्रियार्थायां क्रियाया" मिति तुमुनोऽनुशासनाद्भ्रंशयितुमित्यनेन भ्रंशनस्य स्फुटमेव फलत्वमवगम्यते। क्रिया अर्थः प्रयोजनं यस्यास्सा क्रियार्था- तस्यां क्रिया मुपपदे भविष्यदर्थे धातोरेतौ स्त इति तदर्थः- दृश्यते ह्यर्थफलशब्दयोस्समानार्थकत्वं- "सार्थं जन्म ममाधुना- सफलं जन्म मेऽधुने" त्यादौ- विधुकर्मक भविष्यद्भ्रंशन प्रयोजनकशिरः कम्प इति बोधः- न ह्यत्र भ्रंशनहेतुभूतशिरःकम्पस्य संभावनं, येन हेतूत्प्रेक्षैवेति साध्येत। किंतूक्तरीत्या भ्रंशनस्यैव- तस्मादसिद्धविषयां हेतूत्प्रेक्षामत्र ब्रुवन्पाश्चात्यो भ्रान्त एवेत्यनादरणीयः। अत्र न्यस्तं मस्तपदे विधुं प्रथमत इति लक्ष्म्यवतारात्प्रागेव चन्द्राविर्भावोक्तिः- "ततश्शीतांशुरभव" दित्यारभ्य विषधन्वन्तर्याविर्भावमभिधाय

पाद्मोत्तरखण्ड तु "उत्पन्ना श्रीमहालक्ष्मीस्सर्वलोकेश्वरी शिवे" त्यादिना लक्ष्म्याविर्भावमभिधाय "अनन्तरं शीतरश्मिरुदभूत् क्षीरसागरे" इति चन्द्राविर्भावो लक्ष्म्यवतारानंतरमुच्यते- एवमेव कामधेन्वादीनामुत्पत्तिक्रमस्तत्र तत्र भिन्नभिन्न एव दृश्यते- तथाहि। श्रीरामायणे बालकाण्डे धन्वन्तर्यप्सरोगणवारुण्युच्चैश्रवःकौस्तुभामृतानां षण्णामेवोत्पत्तिः क्रमेण कथिता- महाभारते आदिपर्वणि "शीतांशुलक्ष्मी-वारुण्युच्चैश्रवःकौस्तुभ धन्त्वन्तर्यमृत कमण्डुलैरावत कालकूटानामष्टानां- विष्णुपुराणे सुरभिवारुणीपारिजाताप्सरोगण शीतांशु विषधन्वन्तर्यमृत कलश लक्ष्मीणामष्टानाम्- श्रीभागवते कालकूटहविर्धान्युच्चैश्रव ऐरावतपरिजाताप्सरोगण लक्ष्मीवारुणी धन्वन्तर्यमृतकलशानां नवानां- पाद्मे तु कालकूटज्येष्ठावारुणीतन्द्राप्सरोगणगन्धर्व निवहैरावतोच्चैश्रवो धन्वन्तरि पारिजात लक्ष्मीचन्द्र तुलसीनां त्रयोदशानां- एव मन्येष्वपि पुराणेष्वेतेषामुत्पत्तिक्रमो भिन्नभिन्न एव दृश्यते- तदिह परस्परविरोधे सर्वेषामप्याप्तत्वा-विशेषात्कल्पभेदेन विरोधः परिहरणीयः- तथाचान्वग्राहि रहस्यरक्षायां स्तोत्राधिकारे श्रीमदाचार्यपादैः- "आप्तवाचोर्विरोधे स्यात्सृष्टिभेदादियं गतिः। अनिश्चिताप्तभावानां निश्चितैस्स्यादनादर" इति। अस्मिन्प्रबन्धे तूदाहृत रामायणाद्युक्त क्रमेष्वैदंपर्येण न कश्चिदपि क्रमो विवक्षितः- किं तु लक्ष्म्या सहोदितानां केषांचिदेव यथोपयोगं प्रदर्शनमात्रमिति नोक्तग्रन्थैस्सह विरोध इत्यलं शाखाचङ्क्रमेण॥5॥

**मू.** **दातुं त्वां पुरुषोत्तमाय तनयां पद्मे! गृहीतव्रतः।**
**प्रादात्कामगवीं मुदे सुमसां पानीयमप्यम्बुधिः।**
**कंचित्सप्तिमनुत्तमं मघवते कल्पद्रुमं चेष्टदम्।**
**सर्वज्ञाय सितांशुकं धृतजटावर्गाय दिग्वाससे॥** 6

अथ लक्ष्म्या सह प्रादुर्भूतानां पूर्वोक्तानां कामधेन्वादीनामनुक्तानाममृतादीनां च केषांचिद्वस्तूनां "ऐरावतस्ततो जज्ञे तथैवोच्चैश्रवा हयः। धन्वन्तरिः पारिजातस्सुरभिस्सर्व-कामधुक्। एतान्सर्वान्सहस्राक्षो जग्राह प्रीतमानस" इति पाद्मे "ततश्शीतांशुरभवज्जगृहे तं महेश्वर" इति वैष्णवे चोक्तरीत्या देवादिकर्तृकं परिग्रहं वक्ष्यन्नादौ समुद्रकृतमुपयोगविशेषं विच्छित्तिविशेषेणाह। दातुमिति। हे पद्मे। पद्यते सेव्यते सर्वैरिति पद्मेति टीकासर्वस्वकृत्। तस्या संबुद्धिः।पद्‌ल् सेवायामित्यस्मात् "आर्तिस्तुसुहुसृधुक्षिक्षुभायांवापदि यक्षिनीभ्योमन्नि" त्यौणादिको ...

[illegible] उक्तनिर्वचनत्रयेणास्यास्सर्वकल्याणा-
स्पदत्वं सूचितम्- अम्बुधिः दुग्धाम्बुनिधिः- अनेन ''रत्नानामाकरोऽम्बुधि''रित्युक्तरीत्या भूयिष्ठश्रेष्ठवस्तुनिधानत्वं द्योतितम्- तनयां पुत्रीं कन्यामिति यावत् - ''आत्मजस्तनयस्सूनु''रित्यारभ्य- ''स्त्रियां त्वमी। आहुर्दुहितर''मित्यमरः-तनोति विस्तृणाति हर्षमिति तनया- तनोतेः ''वलिमलितनिभ्यः कयन्नि''त्यौणादिकः कयन्प्रत्ययः। अनेनास्याः परमपुरुषोद्देश्यक- दानकर्मीकरिष्यमाणतया ''लोकोत्तरे पुंसि निवेश्यमाना पुत्रीव हर्षं हृदये करोती''त्युक्तरीत्या परमानन्ददायित्वं व्यञ्जितम्- त्वाम्- ''लक्षण्यां स्त्रियमुद्वहेदि''त्युक्तसर्वलक्षणसंपत्ति परिपूर्णामिति भावः। एतच्च पद्मे इति संबोधनबलाल्लभ्यते। लक्षण्यां बाह्याभ्यन्तर लक्षणयुक्तामित्यर्थः। तत्र बाह्यानि लक्षणानि मनुना दर्शितानि। ''अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम्। तनुलोमकेशदशनां मृद्वङ्गीं स्त्रियमुद्वहेदि''ति। आन्तराणि लक्षणानि तु सौशील्यादीनि- तानि च स्मर्यन्ते ''सुशीलां सुभगां स्निग्धां दयमानामचञ्चलाम्। क्षमान्वितां शुभां कन्यामुपयच्छेत्प्रियं वदामि''ति। एतेन ''नोद्वहेत्कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम्। नालोमिकां नातिलोमां न वाचाटां न पिङ्गला''मित्याद्युक्तकन्यादोषगन्ध राहित्यमपि फलितम्। पुरुषोत्तमाय क्षराक्षरशब्दाभिलपनीयबद्धमुक्तोभयावस्थचेतन वर्गोत्कृष्टतमाय भगवत इत्यर्थः। अत्र ''द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते। उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः। यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम'' इति गीतावचनान्यनुसंधेयानि। पुरुषाणामुत्तमः पुरुषोत्तम इति विग्रहः। न हीयं निर्धारणषष्ठी- येन ''न निर्धारणे'' इति समास निषेधश्शङ्क्येत। ''यस्मान्निर्धार्यते यश्चैकदेशो निर्धार्यते यश्च निर्धारणहेतुरेतत्त्रितयसंनिधान एव निर्धारणं भवतीति तत्रैव षष्ठीसमासनिषेधस्संभवती''ति ''द्विवचनविभज्योपपद'' इति सूत्रे कैयटोक्तेरिह च त्रितयसंनिधानाभावान्निर्धारण विभक्त्यसंभवेन समासनिषेधस्याप्यप्रसक्तेः। किं तु संबन्धसामान्ये विहितायाश्शैषिक षष्ठ्यास्समासः। अत एव ''हलादिश्शेष'' इति सूत्रे किमयं हलामादिरिति षष्ठीसमास इति भाष्ये उक्तम्- अत एव च नागानामुत्तमो नागोत्तम इति त्रितयसंनिधानाभावात्संबन्धसामान्ये षष्ठीसमासो भवत्येवे''ति द्विवचन विभज्येति सूत्रे कैयटेनाप्युक्तम्- गुणवचनेन निषेधस्त्वनित्य इति तरप् सूत्रे कैयटः।

केचित्तु पुरुषेषूत्तम इति निर्धारणसप्तम्याः ''संज्ञाया''मित्यनेन समासः- न चैवं ''न निर्धारणे'' इति [illegible]

साधुत्वान्वाख्यानमिति कल्पनमपि संज्ञाविषयकसप्तमीसमासस्थले आरण्यतिलकाः वनेकशेरुका इत्यादौ सर्वत्रालुक एव दर्शनाल्लुग्घटित संज्ञाविषयक प्रयोगाणां सप्तमीसमास निर्बन्धायोगेनान्यथैवोपपत्तेश्चायुक्तम्। नापि ''सप्तमी शौण्डै''रित्यनेन समासः - शौण्डादेः पठितगणत्वेन तत्रोत्तमशब्दापरिगणनात्। नापि सप्तमीति योगविभागेन समासस्सुशुकः- तस्य भाष्यानारुढत्वादिति ''ब्रह्मणो जानपदाख्याया''मिति सूत्रे शेखरकृदुक्तेः- तस्मात् कैयटोक्तमेव समाधानं साधीयः। अत एव रहस्यरक्षायां पुरुषोत्तमः क इत्यत्र ''न च निर्धारणे षष्ठ्यास्समासः। तथा च सप्तमीशौण्डैरित्यत्र योगविभागग्रहणादत्र निर्धारणे सप्तमी समासस्स्यात्। शैषिकषष्ठी वा नीचोत्तमभाव संबन्धावलम्बिनी द्विपदविग्रहप्रदर्शितार्था समस्येत। नागोत्तमादिशब्दाश्च शब्दविद्भिरेवं निर्व्यूढा'' इत्यन्वग्राहि। अत्राचार्याणां सप्तमीति योगविभागो वृत्त्याद्युक्तोऽपि भाष्यानारूढतया अस्वरस इत्यभिसंधिनैव शैषिकषष्ठीसमास परिग्रह इति तत्रैव नैर्भर्यं स्पष्टमेव। ''यस्मात् क्षरमतीतोऽह''मिति गीतानुसारे तु पञ्चमीसमासः प्रस्पष्ट इत्यपि तत्रैवाचार्याः- नचोत्तमादिशब्दयोगे पञ्चमी नानुशिष्टेति शङ्क्यम्- यथा ''यस्मादधिक''मिति सौत्रप्रयोगादननुशिष्टस्यापि परिग्रहः- एवं ''मक्षरादपि चोत्तम'' इत्युक्त गीताप्रयोगबलादेव तत्परिग्रहोपपत्तेः। योगविभागात्पञ्चम्या उत्तमादि शब्दैस्समासः। वस्तुतस्तु ''सुप्सुपे''ति समास एव युक्तः- अत एव ''भोगोपरतवन्येतरादौ तु सुप्सुपेति समास'' इति शब्देन्दुशेखरग्रन्थश्च संगच्छते। यद्वा ''स उत्तमः पुरुष'' इति श्रुतेः ''उत्तमः पुरुषस्त्वन्य'' इति गानाच्चात्र कर्मधारय इति लभ्यते न च ''सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानै''रित्युत्तमशब्दस्य पूर्वनिपातावश्यंभावः- राजदन्तादित्वेन परनिपाताभ्युपगमात्। एतच्च ''न निर्धारण इति सूत्रे शेखरे स्पष्टम् तात्पर्यचन्द्रिकायां तु ''उत्तमः पुरुषस्त्वन्यः- क्षरमतीतोऽहमक्षरादपि चोत्तम इति चार्थकथनमात्रं- न तु तत्समासांशद्वयविवक्षया- एवमेव स उत्तमः पुरुष इति श्रुत्युदाहरणमपीत्यभिधाय- केचित्त्विद्यादिना पञ्चमीसमास एवाचार्यैरुपन्यस्तो न कर्मधारय समासः- एवमस्य सर्वथापि यौगिकत्वेन ''रूढ्या तु कामं पुरुषोत्तमोऽस्त्वि''ति प्रलपत वेदबाह्यानामुक्तिः परस्ता- प्रयुज्यते चायं योग एव ''न च तेन विना निद्रां लभते पुरुषोत्तम' इत्यादिकाव्ये ''कः पुण्डरीकनयनः पुरुषोत्तमः क'' इति स्तोत्रे चेति दिक्।

तां तस्मै कन्यां दद्याद्विचक्षण'' इत्युक्तरीत्या उत्तमदानपात्रत्वेन तस्मा एव दानावश्यकता द्योतिता। अप्राप्तां विवाहसमयमप्राप्तां बालिकामपीत्यर्थः-अस्य च मुख्यदानपात्रत्वं श्रीभागवते सप्तमस्कन्धे कण्ठत एवोक्तम्। ''पात्रं तत्र निरुक्तं वै कविभिः पात्रवित्तमैः। हरिरेवैष उर्वीश यन्मयं सचराचरम्। देवर्ष्यर्हत्सु सत्स्वत्र ब्रह्मब्रह्मात्मजादिषु। राजन्यदग्रपूजायां मतः पात्रतयाऽच्युत'' इति। दातुं वितरीतुम्। अनेन ''कन्यां लक्षणसंपन्नां कनकाभरणैर्युताम्। दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषये''ति यादृशे तादृशे वा यद्बुद्ध्या कन्यादानं निरतिशयश्रेयोनिदानं, तस्मै पुरुषोत्तमायैव कन्यादानोद्योगे सूक्तदान मन्त्रार्थस्यागौणतयाऽस्य दातुर्भाग्यं कियस्त्यादिति द्योत्यते। यद्वा। ''दंपत्योरात्मसंबन्धे विवाहाख्ये पुनः पुनः। श्रीशं सर्वाभ्युदयिके कर्मण्येवं प्रकीर्तये''दित्यभिधाय- एवमादीनि नामानि देवदेवस्य कीर्तयेत्। यं यं काममभिध्यायंस्तं तमाप्नोत्यसंशय''मिति सर्वेप्सितावाप्तिहेतुतया विष्णुधर्मे कन्यादानादौ यन्नामकीर्तनं स्मर्यते- तस्यैव साक्षात्कन्या प्रतिग्रहीतृत्वं नाल्पसुकृत सुलभमिति वक्ष्यमाणसनियमदानानामवश्यकरणीयत्वं द्योतितम्। अत एव हीदृशः प्रशस्यते पुराणेषु ''येन सर्वार्थदो विष्णुर्भक्त्या दत्तं महात्मना। अत्यादरेण गृह्णाति कस्तस्माद्भाग्यवत्तम''इति। गृहीतं-व्रतमुपवासादि नियमो येन स तथोक्तस्सन् ''नियमो व्रतमस्त्री तच्चोपवासादि पुण्यकर्मि'' त्यमरः। ''भुक्तां समुद्वहेत्कन्यां सावित्रीग्रहणं तथा। उपोषितस्स वै दद्यादर्चिताय द्विजातय'' इत्येतदत्रानुसंधेयम्। गृहीतव्रत इत्यनेन ''शौचं शुद्धिर्महाप्रतिरर्थिनां दर्शने तथा। सत्कृतिश्चानसूया च दानश्रद्धेत्युदाहृते''ति देवलोक्तश्रद्धादिमत्त्वमपि द्योतितम्। श्रद्धादीनां नियमान्तःपातित्वात्। तदुक्तमेकादशे भगवता ''अहिंसा सत्यमस्तेय''मित्यादिनियमानुक्त्वा ''शौचं जपस्तपो होमश्रद्धाऽतिथ्यं मदर्चनम्। तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम्। एते यमास्सनियमा उभयोर्द्वादश स्मृताः। पुंसामुपासितास्ते तु यथाकामं दुहन्ति ही''ति। शैचस्य बाह्याभ्यन्तरभेदेन द्वैविध्यान्नियमानां द्वादशसंख्याकत्वम्- श्रद्धादिमत्त्वमेव हि दानस्य वृद्धिश्रेयस्करमिति देवलेन स्मर्यते। ''नाल्पत्वं वा बहुत्वं वा दानस्याभ्युदयावहम्। श्रद्धाभक्ती च दानानां वृद्धिश्रेयस्करे हि ते'' इति। सुमनसां विदुषां- मुदे प्रीतिं संपादयितुमित्यर्थः। ''क्रियार्थे''त्यादिना चतुर्थी। अर्थात्सुमनसामेवोद्देश्यत्वं- सुमनश्शब्देन चित्तशुद्धिरुक्ता- तया च तत्कारणीभूताहारशुद्धिराक्षिप्यते। यच्छ्रूयते

शूद्रान्न यस्य नोदर" इति। शूद्रान्नमित्याद्युपलक्षणमाहारशुद्धेः। सुमनसो देवानामिति
तत्वम्। "सुमनाः पुष्पमालत्योः स्त्रियां ना धीरदेवयो"रिति मेदिनी।

पाद्मे "ऐरावतस्ततो जज्ञ" इत्यादिना कामधेन्वादीनामिन्द्रपरिगृहीतत्वोक्तिस्तु प्राधान्याभिप्रायेण। सुधासुरभिपारिजातादीनां देवतासामान्योपकारकत्वात्। काम्यन्त इति कामा ईप्सितार्थाः-कामदोग्ध्री गौः कामगवीति मध्यमपदलोपी समासः-तां "गोरतद्धितलुकी"ति टचि टित्त्वलक्षणे ङीप्यवादेशः- कामगवीत्यनेन "बलान्विताश्शीलबलोपपन्ना गावः प्रशंसन्ति सुगन्धवत्यः। यथाहि गङ्गासरितां वरिष्ठा तथाऽर्जुनीनां कपिलावरिष्ठा। दत्वा धेनुं सुव्रतां साधुदोहां कल्याणवत्सामपलायिनीं च। यावन्ति रोमाणि भवन्ति चास्यास्तावन्ति वर्षाणि भवन्त्यमुत्र। सर्वकामदुघां धेनुं सर्वकामगुणान्विताम्। ददाति यस्सहस्राक्ष! स्वर्गं यातीह मानव" इत्यानुशासनिकोक्तं गुणवत्त्वं- तद्दानेन महाफलत्वं च द्योतितम्। गोस्सर्वकामदोग्धृत्वं च गोमत्यां विद्यायामुक्तम्- "गावस्सुरभयो नित्यं गावो गुग्गुल गन्धिकाः। गावः प्रतिष्ठा भूतानां गावस्स्वस्त्ययनं महत्। अन्नमेव परं गावो देवानां हविरुत्तमम्। पावनं सर्वभूतानां रक्षन्ति च वहन्ति च। हविषा मन्त्रपूतेन तर्पयन्त्यमरान्दिवि। ऋषीणामग्निहोत्रेषु गावो होमप्रयोजिकाः। सर्वेषामेव भूतानां गावश्शरणमुत्तमम्। गावः पवित्रं परमं गावो मङ्गळमुत्तमम्। गावस्स्वर्गस्य सोपानं गावो धन्यास्सनातना"इति। देया ह्येकापीदृश्येव गौः- "यथाकथंचिद्गां दत्वा धेनुं वाऽधेनुमेव वा। अरोगामपरिक्लिष्टां दाता स्वर्गे महीयत" इति स्मरणात्। अन्यथा बहूनां दानेऽपि न केवलं फलाभावमात्रं प्रत्युत प्रत्यवायश्च कठवल्ल्वां श्रूयते। "पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः। अनन्दा नाम ते लोकास्तान्स गच्छति ता दददि"ति। सुरभिमिति तु तत्वम्। सुमनसामित्यनेनानभिसंहितफलकर्मानुष्ठाननिर्मलान्तःकरणत्वं द्योतयता विद्यातपोवृत्तनिष्ठताक्षेपेण तेषां गोदानमुख्यपात्रत्वं द्योतितम्- तदुक्तमानुशासनिके "स्वाध्यायाढ्यं शुद्धयोनिं प्रशान्तं वैतानस्थं पापभीरुं बहुज्ञम्। गोषु क्षान्तं नातितीक्ष्णं शरण्यं वृत्तिग्लानं तादृशं पात्रमाहु"रिति। याज्ञवल्क्यश्च। "न विद्यया केवलया तपसा वाऽपि पात्रता। यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रचक्षत" इति। कामगवीत्यनेन सर्वकामप्रदा भूरपि विवक्षिता। "स्वर्गेषु पशुवाग्वज्र दिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौ"रित्यमरः। एतद्दानेन सर्वमपि दत्तमेव स्यात्- तदेतदुक्तमानुशासनिके। "सर्वकामसमायुक्तां काश्यपीं यः प्रयच्छति। सर्वभूतानि मन्यन्ते मां ददातीति वासव। सुवर्णं रजतं वस्त्रं मणिमुक्तावसूनि च। सर्वमेतन्महाप्राज्ञ ददाति वसुधां ददत्। सागरान्सरितश्शैलान्काननानि च सर्वशः। सर्वमेतन्नरश्रेष्ठ ददाति वसुधां ददत्।

शालिनीम्। गोऽश्ववाहनसपूर्णां बाहुवीर्यादुपार्जिताम्। निधिगर्तां ददद्भूमिं सर्वरत्न-परिच्छदाम्। अक्षयान् लभते लोकान्भूमिसत्रं हि तस्य तत्। महीं स्फीतां ददद्राजन् नूनं सर्वगुणान्विताम्। राजाधिराजो भवति तद्धि दानमनुत्तम''मिति।

पातुं योग्यं पानीयमुदकमपि। ''अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशाम्बर''मित्यमरः। एत्तद्दानमप्युत्तममेव। तथाचानुशासनिके।''पानीयदानं परमं दानानां मनुरब्रवी''दिति। विष्णुधर्मे च। ''पानीयं परमं लोके पावनं परमं स्मृतम्। पानीयस्य प्रदानेन तृप्तिर्भवति शाश्वती''ति। अमृतमपीति तु तत्त्वम्। प्रादात् व्यतारीत्। दान शब्दार्थश्चैवं व्यासेनोक्तः। ''अर्थानामुचिते पात्रे श्रद्धया प्रतिपादनम्। दानमित्यभिनिर्दिष्टं भुक्तिमुक्ति फलप्रद''मिति। मघो यज्ञोऽस्यास्तीति मघवान्- प्रशंसायां मतुप्- तस्मै यज्वन इत्यर्थः। ''सप्ततन्तुर्मघःक्रतु''रित्यमरः। मख इत्यपि पाठ इति टीकासर्वस्वकृदादयः- अत एव ''मखश्च स्यान्मघश्चापी''ति श्रीहर्ष द्विरूपकोशस्संगच्छते- इन्द्रायेति तु तत्त्वम्- अस्मिन्पक्षे मघशब्दो धनवाचीति वैयाकरणाः। ''मघवा बहुळ''मिति वैकल्पिकस्त्रादेशः- अविद्यमान उत्तमो यस्मात्तं तथोक्तं मुख्यमित्यर्थः- ''क्लीबे प्रधानं प्रमुखप्रवेकानुत्तमोत्तमा'' इत्यमरः- ''द्वावुरस्यौ द्वौ द्वौ द्वौ रन्ध्रोपरन्ध्रयोः-एकः फालेऽप्युदाने च दशावर्ताः प्रकीर्तिताः। वक्षस्थाश्शुक्तयस्तिस्र ऊर्ध्वरोमा जयारहाः। कण्डजो रोचमानश्च स्वामिसौभाग्यवर्धकः। वक्षोभवावर्तचतुष्टय-स्स्यात्कण्ठे भवेद्यस्य तु रोचमानः। श्रीवृक्षकी नाम हयस्स भर्तुः पुत्रप्रपौत्राभिविवृद्धये स्यात्'' इत्याद्युक्तात्युत्तमलक्षणलक्षितमिति भावः। यद्वा।''एकतश्श्यामकर्णानां हयानां चन्द्रवर्चसा''मित्याद्युक्त यज्ञियलक्षणसंपन्नमिति भावः। कदाचित् अपूर्वम्-सप्तिम्-अश्वम्-उच्चैश्रवसमिति तु तत्वम्। ''वाजिवाहार्वगन्धर्वहयसैन्धवसप्तय'' इत्यमरः। इदमुपलक्षणं गजादीनामपि। उच्चैश्रवःपक्षे त्वनुत्तममित्यनेन-''यं तं देवगणास्सर्वे हृष्टरूपमपूजयन्-मथ्यमानेऽमृते जातमश्वरत्नमनुत्तम''मित्यादिपर्वोक्तं प्रत्यभि ज्ञाप्यते। इष्टदं अभीप्सितार्थप्रदं-अत एव-कल्पयति वाञ्छितमिति कल्पः-कल्प इति द्रुमः कल्पद्रुमः-तं च-''सौवर्णान्कारयेद्वृक्षा'' नित्यादिना दानकाण्डोक्तं स्वर्णकल्पवृक्षमित्यर्थः-पक्षे साक्षात्कल्पवृक्षमेवेत्यर्थः-प्रादादित्येतत्सर्वत्राप्यनुषज्यते। ''कर्मणा यमभिप्रैती''ति संप्रदान संज्ञायां चतुर्थी। मघवते इत्यनेन तदुद्देश्यकदानस्यानन्तफलत्वं द्योतितम्। ''श्रोत्रियेचैव साहस्रमाचार्ये द्विगुणं ततः। आत्मज्ञे शतसाहस्र-मनन्तं त्वग्निहोत्रिणी''ति बृहस्पति स्मरणात्-धृतः-जटावर्गो येन तथोक्ताय- अनेन वैघानसाश्रमतपोनिष्ठत्वं द्योतितम्- अन्यथा वृथा जटाधारणस्यानुपदमेव वक्ष्यमाणविष्णुपुराणवचनेन-''ऋते च वानप्रस्थात्तु

विवक्षितं-तथाविधस्य "ततो दिगम्बरो मुण्डो बर्हिपत्रधरो द्विज-मायामोहोऽसुरान्सर्वानिदं वचनमब्रवीदि"त्युपक्रम्य "तस्मात्पाषण्डिभिः पापैरालापस्पर्शनं त्यजेदि"त्यभिधाय "पाषण्डिनो विकर्मस्थान्बैडालव्रतिकाञ् शठान्-हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्। दूरादेतैस्तु संसर्गस्त्याज्यश्चाप्यतिपापिभिः। पाषण्डिभिर्दुराचारैस्तस्मात्तान्परि-वर्जयेत्। एते नग्नास्तवाख्याता दृष्ट्या श्राद्धोपघातुकाः। एषां संभाषणात्पुंसां दिनपुण्यं प्रणश्यति। एते पाषण्डिनः पापा न ह्येतानालपेद्बुधः। पुण्यं नश्यति संभाषादेतेषां तद्दिनोद्भवम्। पुंसां जटाभरण मौण्ड्यभृतां वृथैव मोघाशिनामखिलशौचबहिष्कृतानाम्। तोयप्रदान पितृपिण्ड विवर्जितानां संभाषणादपि नरा नरकं प्रयान्ती"ति नग्नानां पाषण्डिता कथनपूर्वकं वाङ्मात्रेणापि तदर्चनानिषेधं वदता श्रीविष्णुपुराणतृतीयांशान्तिमाध्यायेन, नग्नं वाऽनुपवीतं वा विप्रं स्पृष्ट्वा प्रमादतः। मृद्भिर्द्वादशभिस्स्नात्वा वासोभिस्सह शुध्यती"ति नग्नस्य स्पर्शेऽपि प्रायश्चित्तं वदता दत्तात्रेयवचनेनापि तदपात्रतायास्स्फुटत्वात्तत्र दत्तस्य "नास्तिकस्तेन हिंस्रेभ्यो जाराय पतिताय च। पिशुनभ्रूणहन्तृभ्यः प्रदत्तं दुष्फलं भवे"दिति देवलोक्तरीत्या दुष्फलत्वावगमात्। किंतु- "नग्नो मलिनवस्त्रस्स्यान्नग्नो नीलपटस्तथा। विकच्छोऽनुत्तरीयश्चे"ति स्मृतिरत्नाकर माधवीयाद्युक्तलक्षणमलिनाम्बरत्व रूपनग्नत्वमेव विवक्षितम्- अनुत्तरीयत्वादि रूपं वा- अत एव सितांशुकमिति वक्ष्यमाणमपि संगच्छते। दिग्वासस इत्यनेन सदसत्त्वानादरेण यथाकथंचिच्छीतादिनिवारकाच्छादनमात्र लाभसंतुष्टत्वेन "अपध्वस्तवपुस्सोऽथ मलिनाम्बरधृग्द्विज" इत्युक्तरीत्या भरतस्येवास्यापि नैस्पृह्यातिशयो द्योत्यते। यथोच्यते मोक्षधर्मेषु प्रह्लादं प्रत्यजगरेण। "धारयामि च चीराणि शाणक्षौमाविकानि च। महार्हाणि च वासांसि धारयाम्यहमेकदा। न संनिपतितं धर्म्यमुपभोगं यदृच्छया। प्रत्याचक्षे न चाप्येन मनुरुन्ध्ये सुदुर्लभ"मिति। "येन केनचिदाच्छन्नो येन केनचिदाशितः। यत्र क्वचन शायी स्यात्तं देवा ब्राह्मणं विदु"रित्युक्तमुत्तम ब्राह्मणत्वमप्यस्यास्तीत्यनुसंधेयम्- अत्र "न शब्दशास्त्राभिरतस्य मोक्षो नचैव रम्यावसथ प्रियस्य। न भोजनाच्छादनतत्परस्य न लोकचित्तग्रहणे रतस्य। एकान्तशीलस्य दृढव्रतस्य पञ्चेन्द्रिय प्रीतिनिवर्तकस्य। अध्यात्म विद्यारतमानसस्य मोक्षो ध्रुवो नित्यमहिंसकस्ये"त्युक्त-मपि स्मर्तव्यम्। सर्वं जानातीति सर्वज्ञस्तस्मै "यस्मिन्विज्ञाते सर्वमिदं विज्ञातं भवती"ति श्रुत्युक्तरीत्या कारणभूतब्रह्मज्ञानेन कार्यभूतसकलप्रपञ्चज्ञानवते इति भावः- धृतजटावगायि दिग्वासस इत्याभ्यां तपोनिष्ठता- सर्वज्ञायेत्यनेन विद्यानिष्ठता च व्यञ्जिता- तेनस्यात्युत्तम

"मान्त्रश्च ब्राह्मणश्चैव श्रोत्रियश्च ततःपरम्। अनूचानस्तथा भ्रूण ऋषिकल्पऋषिर्मुनिः। इत्येतेऽष्टौ समुद्दिष्टा ब्राह्मणाः प्रथमं श्रुतौ। तेषां परः परःश्रेष्ठो विद्यावृत्तविशेषत"इति दानपात्र-निरूपणावसरे देवलोक्तेष्वष्टसु पात्रेष्वस्य ऋषिरूपपात्रत्वम्- सर्वज्ञायेत्यनेन मुनिरूपपात्रत्वं च द्योतितम्-तल्लक्षणं तेनैवोक्तं-"ऊर्ध्वरेतास्तपस्व्यग्र्यो नियताशनसंश्रयः। शापानुग्रहयो-श्शक्तस्सत्यसंधो भवेदृषिः। विवृत्तस्सर्वतत्त्वज्ञः कामक्रोधविवर्जितः। ध्यानस्थो निष्क्रियो दान्तस्तुल्यमृत्काञ्चनो मुनि"रिति।

यद्वा। सर्वज्ञायेत्यनेन "उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम्। वेत्ति विद्यामविद्यां च स भवेद्वेदपारग" इति देवलोक्तलक्षणवेदपारगत्वरूपपात्रत्वं विवक्षितम्। यत्र दत्तमल्पमप्यनन्तं फलति। तथा च स्मरति भगवान्मनुः "सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे। प्राधीते शतसाहस्रमनन्तं वेदपारग" इति। रुद्रायेति तु तत्वम्। सितं च तदंशुकं च सितांशुकं शुक्लवस्त्रं- शुक्लोत्तरीयमिति वा- श्लक्ष्णत्वादिकमपीह भाव्यम्- "उत्तरीये वस्त्रमात्रे सूक्ष्मवस्त्रेऽपिचांशुक"मिति नानार्थरत्नमाला। प्रादात्- पूर्ववच्चतुर्थी- सिताः अंशवः किरणाः यस्य स सितांशुः- अल्पस्सितांशुस्सितांशुकः- "अल्पे" इत्यल्पार्थे कन्- बालचन्द्रमिति वेदितव्यम्। बालचन्द्रस्यैव रुद्राय दत्तत्वात्। कथंचित्प्रत्ययस्य स्वार्थिकत्वाभ्युपगमेऽपि कप्रत्यय इत्यक्तिरयुक्ता अत्यन्तस्वार्थे कस्य कपो वा विधानाभावात्- "नसामिवचन" इत्यनेन कन एव ज्ञापितत्वात्तत्र "स्थूलादिभ्यः प्रकारवचने क"न्नित्यतः कन एवानुवृत्तेः। अत्र मघवतेऽश्वस्य दिग्वाससे सितांशुकस्य च दानकथनेन "यस्योपयोगि यद्द्रव्यं देयं तस्यैव तद्भवे"दिति विष्णुधर्मोक्तरीत्या तत्तदुपयुक्त वस्तुदानेन दानचातुर्यं व्यञ्जितम्- किंच- उत्तमपात्रविवेचन पूर्वकदानेन दातुरपि प्राज्ञतमत्वं द्योत्यते। दातृप्रतिग्रहीत्रोरुभयोरपि प्राज्ञतमत्व एव फलेग्रहि स्याद्दानम्- अन्यथा विपरीत फलकमेव स्यात्- तथा च मनुः- "यथा प्लवेनौपलेन निमज्जत्युदके तरन्- तथा निमज्जतोऽधस्तादज्ञौ दातृप्रतीच्छका"विति। किंच दानसंप्रदानीभूतानां सुमन आदिशब्दैरुपादानात्तेषां तपोवैदुष्यादि सूचनात्प्रतिग्रहसामर्थ्यं च द्योतितम्। अविद्वत्तायां तु न केवलं प्रतिग्रहवैफल्य मात्रं अपितु तस्य महती हानिरपि। तदाह मनुः।"हिरण्यं भूमिमश्वं गामन्नं वासस्तिलान्घृतम्। अविद्वान्प्रतिगृह्णानो भस्मीभवति काष्ठव"दिति। प्रतिग्रहीतुस्तपोविद्यावैधुर्ये न केवलं तस्यैव हानिः किंतु प्रदातुरप्यनर्थस्स्यादिति स्मरति स एव। "अतपास्त्वनधीयानः प्रतिग्रहरुचिर्द्विजः। अम्भस्यश्मप्लवेनेव सह तेनैव मज्जती"ति। याज्ञवल्क्योप्याह।

अन्नविद्याविधू- वस्त्रगोभूरुक्माश्वहस्तिनाम्। दानान्युत्तमदानानि उत्तमद्रव्यदानत इत्यलमति विस्तरेण।

अत्र श्रीकन्यादानोद्देश्यकव्रतग्रहणस्य गगनारविन्दायमानस्य कामगव्यादिदानहेतुत्वोत्प्रेक्षणादसिद्धविषया हेतूत्प्रेक्षा व्यञ्जकाप्रयोगादगम्या- "मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः। उद्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः। एतेषामप्रयोगे तु गम्योत्प्रेक्षा निगद्यत" इत्युक्तेः- पुरुषोत्तमायेति विशेष्यस्य वरगुणसमृद्धिमत्ताभिप्रायगर्भत्वादेकः परिकराङ्कुरः- सुमनोमघवत्सर्वज्ञशब्दानां विशेष्यभूतानामुत्तमपात्रताभिप्रायगर्भत्वादन्यत परिकराङ्कुरालंकारत्रयम्- धृतजटावर्गाय दिग्वासस इति विशेषणयोरपि तथाविधाभिप्राय गर्भत्वात्परिकरालंकारश्चेति विच्छित्तिविशेषः- कामगवीपानीयसप्तिकल्पद्रुम सितांशुक शब्दानां विशेष्यभूतानां षण्णामुत्तमविवक्षितार्थद्वयश्लेषभित्तिकाभेदाध्यवसायमूलकातिशयोक्त्यनुप्राणितैरुक्तोत्प्रेक्षोज्जीव्यत इति संकरः- परिकरपरिकराङ्कुराणामन्योन्यं संसृष्टिः- किं च- कामगव्यादीनां प्रस्तुतानामेव दानक्रियारूपैकधर्मान्वयात्तुल्ययोगिता- तल्लक्षणं च काव्यप्रकाशिकायाम्। "नियतानां सकृद्धर्मस्सा पुनस्तुल्ययोगिते"ति। "नियतानां प्राकरणिकानामेव वा अप्राकरणिकानामेव वे"ति तत्रैव तदर्थः-कुवलयानन्देऽपि- "वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिते"ति। प्रस्तुतानामप्रस्तुतानां वा गुणक्रियारूपैकधर्मान्वयस्तुल्ययोगिता- प्रस्तुतानामप्रस्तुतानां चैकधर्मान्वयो दीपकमिति नियममनादृत्य दीपकं लक्षयतां दण्ड्यादीनां मते तु दीपकमेव। तच्च प्राथमिक वाक्यस्थस्य प्रादादित्यस्योत्तर वाक्येष्वप्यन्वयादादिदीपकम्। तथा च तल्लक्षणं लक्ष्यं च काव्यादर्शे। "जातिक्रियागुणद्रव्य वाचिनैकत्र वर्तिना। सर्ववाक्योपचारश्चेत्तमाहुर्दीपकं यथा। पवनो दक्षिणः पर्णं जीर्णं हरति वीरुधाम्। स एवावनताङ्गीनां मानभङ्गाय कल्पते। चरन्ति चतुरम्भोधिवेलोद्यानेषु दन्तिनः। चक्रवाळाद्रिकुंजेषु कुन्दभासो गुणाश्च ते"। इत्यारभ्य "इत्यादिदीपकान्युक्तान्येवं मध्यान्तयोरपि। वाक्ययोर्दर्शयिष्यामः कानिचित्तानि तद्यथे"त्यादि। एवं दीपकं लक्षयता दण्डिना तुल्ययोगिता लक्षणं तु पृथगेवाभिहितम्। "विवक्षितगुणोत्कृष्टैर्यत्समीकृत्य कस्यचित्। कीर्तितं स्तुतिनिन्दार्थं सा मता तुल्ययोगिते"ति। किंचाम्बुधिसंबन्ध्याशय विभूतिमहत्त्ववर्णनादुदात्तालंकारः। "आशयस्य विभूतेर्वा यन्महत्त्वमनुत्तमम्। उदात्तं नाम तं प्राहुरलंकारं मनीषिण" इति काव्यादर्श लक्षणात्। सर्वेषामेषामेकवाचकानुप्रवेश संकरः। यत्तु गूढा सिद्धविषयाफलोत्प्रेक्षेति पाश्चात्यः। तत्तु फलोत्प्रेक्षास्थले हेतूत्प्रेक्षां हेतुत्प्रेक्षास्थले

मू. हर्षादब्धेरमृतकलशीमाददे देवसंघः
श्रीमानुच्चैश्रवसममरक्ष्मापतिश्चन्द्रमीशः।
तेषामेकं न किल जगृहे त्वां शुभामेव शार्ङ्गी
पद्मे! सारग्रहणनिपुणः पारिशेष्याद् ग्रहीतुम्॥ 7

एवं देवादिभ्यस्समुद्रकर्तृकं सुधादिदानमुक्त्वा देवादिकर्तृकं तत्परिग्रहं वदन्भगवतस्तदपरिग्रहे हेतुं च संभावयन्नाह। **हर्षादिति**। हे पद्मे। अनेन पूर्वश्लोक व्याख्यानोक्तरीत्याऽस्यास्सर्वकल्याणास्पदत्वमुक्तम्। अत एव वक्ष्यति शुभामिति। देवसंघः निर्जरसमुदयः- देवशब्देन तेषां दैत्य विजिगीषा सूचिता- "दिवुक्रीडा विजिगीषाव्यवहारे" त्यादिना दीव्यतिर्विजिगीषार्थकत्वेनापि पठ्यते- दैत्यविजिगीषयैव हि तेषाममृतप्राशनम्- तदुक्तं श्रीवैष्णवे- "ततः पपुस्सुरगणाश्शक्राद्यास्तत्तदाऽमृतम्। उद्यतायुधनिस्त्रिंशा दैत्यां स्तांश्च समभ्ययु"रिति। अब्धेस्सकाशात्- हर्षात् उत्कण्ठमूलकात्प्रमोदात्- न तु तदभिलाष वैधुर्येऽपि हठात्काराद्दाक्षिण्याद्वेति भावः- अमृतकलशीं सुधाकुम्भम्- अनेन "अमृतापूर्ण कलश"मिति भाकवतोक्तं प्रत्यभिज्ञाप्यते-न मृता भवन्त्यनेनेति व्युत्पत्त्या तस्यामरत्व वितरण सामर्थ्यं प्रकाशितम्- तेनामरत्वलिप्सयापि तेषां तद्ग्रहणमिति द्योत्यते। तदर्थमेव हि तेषामब्धिमथने प्रवृत्तिरित्युच्यते श्रीरामायणे "पुरा कृतयुगे राम दितेः पुत्राः महाबलाः। अदितेश्च महाभागा वीर्यवन्तस्सुधार्मिकाः। ततस्तेषां नरश्रेष्ठ! बुद्धिरासीन्महात्मनाम्। अमरा विज्वराश्चैव कथं स्याम निरामयाः। तेषां चिन्तयतां राम! बुद्धिरासीन्महात्मनाम्। क्षीरोदमथनं कृत्वा रसं प्राप्स्याम तत्र वै" इति। आददे स्वीचक्रे। सत्स्वप्यमृतादपि भोग्यतमेषु वस्त्वन्तरेषु देवैरमृतकलशस्यैवादानेन तेषाममृतमेव भोग्यमिति तत्रैव पुरुषार्थता बुद्धिरिति व्यञ्जितम्। सर्वेषां हि स्वात्माभिमानानुगुणा भोग्यव्यवस्था तद्विपर्ययव्यवस्था च। तथैव हि पुरुष-पश्वादिषु दृश्यते। अमृतकलशं त्वितिपाठोऽपि दृश्यते। तदा-तु शब्दो भिन्नक्रमश्शार्ङ्गीत्यत्रा न्वेति- देवाद्यपेक्षया तद्वैलक्षण्यव्यञ्जनस्यावश्यकत्वात्। यथाश्रुतमन्वये तु नातीव स्वारस्यम्- श्रीरस्यास्तीति श्रीमान् - भूम्न्यतिशायने संसर्गे वा मतुप्। अनुपदमेव लक्ष्मीकटाक्षवशाद्भाविनीं त्रैलोक्यसंपदं सिद्धवत्कृत्वा श्रीमानिति निर्देशः- अन्यथा दुर्वासश्शापपरिभ्रष्ट सकलसंपदोऽस्य भवेत्का हि नाम श्रीः- यया श्रीमानिति निर्दिश्यते- अत एव हि वैष्णवे दुर्वासश्शापानन्तरं "ततः प्रभृति निश्श्रीकं सशक्रं भुवनत्रय"मिति- लक्ष्म्याविर्भावानन्तरं "शक्रश्च त्रिदशश्रेष्ठः पनश्श्रीमानजायते"ति चोच्यते। अमरक्ष्मापतिः

शुभावतीदिलक्षणः। समुन्नतश्रवा वाजी राजाहो भाग्यवर्धनः" इत्यश्वशास्त्रोक्तेः। अत एव ह्येतत्परिग्रहीता श्रीमानिति विशेष्यते। न हि भाग्यविधुराणामीदृशाश्वलाभः कथंचिदपि भवेदिति भावः। (इदमुपलक्षणमैरावतादि ग्रहणस्यापि) ईशः ईश्वरः- चन्द्रमिन्दुम्- अनेन सर्वलोकाह्लादकत्वमुक्तम्- हर्षादाददे। अनेनेशस्य युक्तकारित्वं व्यञ्जितम्- "ईश्वैरस्सततं ग्राह्याश्चेतसो ह्लादनक्षमाः। प्रियंवदास्सौम्यरूपा नोग्रा नाप्यप्रियंवदा" इत्युक्तेः- सारस्य स्थिरांशस्य श्रेष्ठवस्तुनो वा "सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिष्वि"त्यमरः। ग्रहणे परिग्रहे- निपुणः प्रवीणः-"प्रवीणे निपुणाभिज्ञ विज्ञ निष्णात शिक्षिता" इत्यमरः। इदं च हेतुगर्भं विशेषणम्। अनेन "यत्सारभूतं तदुपाददीत। सर्वतस्सारमादद्यादश्मभ्य इव काञ्चन" मित्याद्युक्तरीत्या सारग्रहणैकतानत्वमुक्तम्- प्रसिद्धमेव ह्यस्येदृशस्वभावत्वम् "सारग्राही महासारं प्रतिजग्राह तद्वच" इति श्रीरामायणोक्तेः। शृङ्गस्य विकारश्शाङ्र्गं धनुः तदस्यास्तीति शाङ्र्गी भगवांस्तु- अनेन "एष सर्वेश्वरश्शाङ्र्गी लक्ष्मीप्रियसखो हरिः। नैतस्य सदृशं भूतं किंचित्पश्याम्यहं मुने" इत्युक्तरीत्या सर्वेश्वरत्व लक्ष्मीप्रियसखत्वादीनि व्यज्यन्ते- तेन च वक्ष्यमाणलक्ष्मीपरिग्रह एवास्यानुरूप इति ध्वन्यते। परितश्शेषः परिशेषः। सर्वस्मादपि शेषभूत इत्यर्थः। तस्य भावः पारिशेष्यम्। तस्मात्- "गुणवचन ब्राह्मणादिभ्यश्चे"ति भावार्थे ष्यञ्- असारेषु वस्तुषु यथायथं सारानभिज्ञैस्सत्वरं गृहीतेषु सारतया तवैवावशिष्टत्वादिति भावः। शुभां "न तस्य प्राकृता मुर्तिर्मांसमेदोऽस्थिसंभवे" त्याद्युक्तरीत्या अप्राकृतत्वेन सर्वमङ्गळास्पददिव्यविग्रहां सर्वकल्याणगुणपरिपूर्णां सारभूत चेति भावः- शुभामित्यनौपाधिकनिर्देशेन तच्छुभस्यासंकुचितत्वं द्योत्यते। यदाहुः "अनौपाधिकनिर्देशे ह्यसंकोचो मनीषिभिः। सिद्धे शब्दार्थसंबन्ध इति न्यायेन कथ्यत" इति। अत एवहीयं मङ्गळदेवतेत्याख्यायते। असाधारण्येन हि व्यपदेशा भवन्ति। अत ए वक्ष्यति "मनीषिणो यदेवाहुर्मङ्गळानां च मङ्गळ"मिति। अनेन पूर्वोक्तदेवादिपरिगृही वस्तुराशेर्लक्ष्म्यपेक्षया असारत्वं तत्कल्याणत्वस्य सोपाधिकत्वं परिमितत्वमित्यादिकं द्योत्यते। अत्र "अङ्गं ते मृदुशीतमुग्धमधुरोदारैर्गुणैर्गुम्भतः क्षीराब्धेः किमृजीषतामुपगत मन्ये महार्घास्ततः। इन्दुः कल्पलता सुधामधुमुखा इत्याविलां वर्णनां श्रीरङ्गेश्वरि शान्तकृत्रिम कथं दिव्यं वपुर्नार्हती"त्येतदनुसंधेयम्। त्वामेव उक्त कल्याणगुणास्पदं भवतीमेव। अन्ययो व्यवच्छेदकेनैवकारेण भगवतस्सुधाकलशादिजिघृक्षापि नास्ति किमु तद्ग्रहणमिति व्यज्यते ग्रहीतुं उपादातुं- किलेत्युत्प्रेक्षायां- "ग्रहउपादाने" इत्यस्मात्तुमुन्- "आर्धधातुकस्येड्वलादे रितीटि "ग्रहोऽलिटी"त्येकाचो ग्रहेर्विहितस्येटो दीर्घः। गृहीतमिति ससंप्रसार

पारिशेष्यात्सारभूतां त्वामेव ग्रहीतुमिवेति भावः। तेषाममृतकलशादीनां मध्ये-एकमपि-न जगृहे न जग्राह। यत्तु-शाङ्गी-तेषां मध्ये-एकमपि न जगृहे-किंतु सारो मुख्यांशः अराभिर्धाराभिस्सहितं सारं चक्रं च।तस्य ग्रहणे निपुणः-पारिशेषादशेषत्वेन परित्र वर्जनार्थः। शुभां त्वामेव जगृह इति प्रतीचीनस्तदसंगतम्। ग्रहीतुमित्यस्यानन्वयात्। अत एवहि मया व्याख्यानावसरे ग्रहीतुमिति पदमेव न गृहीतमिति चेदहो ते व्याख्यानकौशलम्। यदिहान्वया-परिज्ञानेन स्वेच्छयाऽन्वयं प्रदर्श्य मूलस्थं पदमेवानन्वितमिति त्यज्यते। सारग्रहणनिपुण इत्यत्र सारशब्द क्लेशकल्पनं चासारमहृदयंगममनुपयुक्तं च- श्लेषाविवक्षायामपि वाक्यार्थस्य परिपोषितत्वात्। पारिशेषादिति पाठकल्पनम्- पारिशेषादशेषत्वेनेत्यर्थः- परित्र वर्जनार्थ इति विवरणमप्यसत्। परिशेषशब्दाद्भावार्थ विवक्षायां "गुणवचने"त्यादिना ष्यञः इवा ञोऽणो वा विधानाभावात्। न चोद्गात्रादौ युवादौ वा परिशेष शब्दपाठश्शक्यं कल्पयितुम्। येन सेत्स्यति त्वदभीप्सितं- तयोः पठितगणत्वात्। परिशेषशब्दस्य सर्वतोऽवशिष्टवस्तु बोधकताया एव प्रसिद्धत्वात्तेन त्वदुक्तार्थानवगतेर्लक्ष्म्यास्सावशेषग्रहणस्य कदाप्ययोगात्तत् वैयर्थ्यापत्तेश्चेति दिक्।

अत्र वर्ण्यानां देवसंघादीनां ग्रहणक्रियारूपैकधर्मान्वयात्पूर्वश्लोकवत्काव्य-प्रकाशादिमते तुल्ययोगिता। दण्डिरुद्रटादिमतेत्वादिदीपकम्। पूर्वस्मिन् श्लोके कर्मणां क्रियारूपैकधर्मान्वयः। अत्र तु कर्तृणामितीयान्विशेषः। भगवत्कर्तृकामृत कलशाद्यपरिग्रह लक्ष्मीपरिग्रहयोरुभयोरपि सारग्रहणनिपुणत्वस्यैकस्यैव हेतुत्वात्काव्यलिङ्गभेदः। अनयोरन्योन्यनैरपेक्ष्यात्संसृष्टिः। किंच। भगवत्कर्तृकं लक्ष्मीग्रहणं वस्तु सदेवामृत कलशाद्यग्रहणाफलमपि तत्फलत्वेन संभाव्यत इति सिद्धविषया फलोत्प्रेक्षा- उक्तकाव्य-लिङ्गोत्तम्भितेत्यनयोरङ्गाङ्गिभावसंकरः। यत्तु सारग्रहणनिपुण इति स्वभाववर्णनात् स्वभावोक्तिरलंकार इति प्रतीच्यः। तदप्यस्यालंकारविचारजनुषान्धतामेव ध्वनयति- उपपादितेष्वलंकारेषु सत्स्वपि जागरूकेषु तानविज्ञाय "मुखमस्तीति वक्तव्य"मित्युक्तरीत्या स्वेच्छया प्रलपितत्वात्। तथाहि। "नानावस्थं पदार्थानां रूपं साक्षाद्विवृण्वती। स्वभावोक्तिश्च जातिश्चेत्याद्या सालंकृतिर्यथे"ति सा दण्डिना लक्ष्यते। पदार्थानां जाति गुणक्रियाद्रव्याणां "जातिक्रियागुणद्रव्य स्वाभाव्याख्यानमीदृश"मिति तेनैवोक्तत्वात्। "स्वभावोक्तिस्स्वभावस्य जात्यादिस्थस्य वर्णन"मिति लक्षण संग्रहकृदुक्तेश्च। नानावस्थं नैकविधदशापन्नम्। रूपं प्रकारम्- साक्षात्प्रत्यक्षमिव विवण्वती प्रदर्शयन्ती- स्वभावोक्तिश्च

अन्यथा "शुष्को वृक्षस्तिष्ठत्यग्रे" इत्यादावपि स्वभावोक्त्यलंकार एव स्यात्। नानावस्थ स्वरूपवर्णनमित्यनेनैक रूपावस्थावर्णनेनायमलंकार इति ध्येयम्। अत एव "अम्भोदमुदितं दृष्ट्वा मुदा नृत्यन्ति बर्हिण" इत्यत्र वस्तुस्वभाववर्णनेऽपि नालंकारतेत्याहुः। इह साग्रहणनिपुण इत्यत्र स्वभावोक्त्यलंकारं वदन् किं जातेस्स्वभाववर्णनमभिप्रैति। आहोस्विद् गुणस्य- उत क्रियया:- अथवा द्रव्यस्य- न तावदाद्यः। "तुण्डैराताम्रकुटिलैः पक्षैर्हरितकोमलैः। त्रिवर्णराजिभिः कण्ठैरेते मञ्जुगिरश्शुका" इत्यादाविव सहृदय हृदयाह्लादितया नानावस्थ जातिस्वभाववर्णनाभावादजातित्वाच्च शाङ्गिर्णः- न द्वितीयः- "बध्नन्नङ्गेषु रोमाञ्चं कुर्वन्मनसि निर्वृतिम्। नेत्रे चामीलयन्नेष प्रियास्पर्शः प्रवर्तत" इत्यत्रेवोक्त रीत्या गुणस्वभाववर्णनवैधुर्यात्। न च तृतीयः। "कलक्कणितगर्भेण कण्ठेनाघूर्णितेक्षणः। पारावतः परिभ्रम्य रिरंसुश्चुम्बति प्रिया"मित्यत्रेव क्रिया स्वभाववर्णनविरहात्। नापि तुरीयः। "कण्ठेकालः करस्थेन कपालेनेन्दुशेखरः। जटाभिस्स्निग्धताम्राभिराविरासीत् वृषध्वज" इत्यादाविव द्रव्यस्वभावस्याप्यवर्णितत्वात्। तस्मादस्मदुक्तरीत्यैवालंकारनिरूपणं स्वारसिकमिति विदांकुर्वन्तु सहृदयाः। वृत्तम् मन्दाक्रान्ता। "मन्दाक्रान्ता जलधि षडगैम्भौं नतौ ताद्गुरू चे"दिति लक्षणात्॥7॥

मू. छाया मुखे जननि चान्द्रमसी तवासी
त्काल्पद्रुपल्लवरुचिः करयोः पदोश्च।
सौधारसी वचसि संपदतो न मित्थ्या
भ्रातृश्रियं सहभूवः परिबिभ्रतीति॥ 8

अथ पूर्वश्लोके शुभामित्यनेनोपक्षिप्तं लक्ष्म्याश्शुभाश्रयदिव्यमङ्गळविग्रहं प्रकृतानुगुण्येन किंचिद्वर्णयति। छायेति। हे जननि! तव चन्द्रादिसहोदर्या इति भावः। मुखे वदने- चन्द्रमस इयं चान्द्रमसी- अण्णन्तलक्षणो ङीप्। छाया कान्तिः "छाया सूर्यप्रिया कान्त्यो"रित्यमरः- तत्सदृशीति यावत्- एवमुत्तरत्रापि- आसीत् उदभूत्- करयोर्हस्तयोः- पदोः पादयोश्च "पद्दन्नित्यादिना पादशब्दस्य पद्भावः- कल्पद्रुपल्लवानां कल्पतरुकिसलयानामियं काल्पद्रुपल्लवी- सा चासौ रुचिश्च- अण्णन्त लक्षण ङीपि "पुंवत्कर्मधारयेत्यादिना पुंवद्भावः। अयमेव पाठस्स्वच्छः- "कल्पद्रुपल्लवरुचि"रिति पाठस्तु चान्द्रमसी सौधारसीति पूर्वोत्तर वाक्यगताण्णन्तपदवैरूप्यादुपेक्ष्यः- यद्यपि काल्पद्रुपल्लवरुचिरिति पाठेऽप्युपक्रमोप

श्रियं छायां- परिबिभ्रति परितो दधति- इति एवंप्रकारकः प्रवाद इति यावत्। न मित्थ्या न मृषा ''मृषामित्थ्या च वितथ'' इत्यमरः- ''भजन्ति भ्रातरो लोके परस्पर सरूपता''मित्यादिक मिहानुसंधेयम्- यत्त्वत्र ''च्छायामुखे जननि चान्द्रमसी तवास्मि''न्निति पठन्नस्मिन्मुखे इति व्याचख्यौ प्रतीच्यः- तन्न सुन्दरम्- अस्मिन्निति विशेषणस्य प्रकृते मन्दप्रयोजनत्वात्क्रिया पदाध्याहार प्रसङ्गादप्रयुज्यमानस्याप्यस्तेस्सत्त्वाभ्युपगमेऽपि श्रौतस्य तस्याङ्गीकृतेरेवौचित्या च्छ्रुत परित्यागे कारणाभावात्सकारानुप्रासभङ्गाच्च- यदपि सौधारसो वचसि तद्वचनं न मित्थ्येति तस्य पाठकल्पनं- तदपि च्छायामुख इत्यादि प्रक्रमगतस्त्रीलिङ्गपदविरूपतया भग्नक्रमरूप दोषापातात्सकारवृत्त्यनुप्रास नियमभङ्गात्पादान्तरेष्वनुप्रास नियमदर्शनाच्चोदासितव्यम्- एवं प्रक्रान्तशैल्यपरित्यागेन इमामेव च्छायामनुसृत्य लक्ष्मीशतकेऽप्युक्तं बुक्कपत्तन वेंकटार्यैः।
''मुखे चान्द्रीं शार्ङ्गीं गळभुवि च मैनीं नयनयो रुचिं सौधीं वाचि त्रिवळिषु च वैचीं प्रपदयोः।
पदोः कौर्मीं पाद्मीं नखततिषु मौक्तीं च दधती व्यनक्ति श्रीर्भ्रातृश्रियमनुवहन्ति स्त्रिय इती''ति।

अत्र चन्द्रकल्पद्रु पल्लव सुधारस संबन्धिनां छायारुचिसंपत्पदार्थानां लक्ष्मीवदन करचरण वचनेष्वारोपात्पदार्थवृत्ति निदर्शनात्रयमन्योन्य संसृष्टम्। छायादीनां वर्ण्यानामेवासी-दित्येक धर्मान्वयात्तुल्ययोगिताचोक्तनिदर्शनाभिरेकवाचकानुप्रविष्टा। काव्यालंकारकृदादिमते तु- आदौ विद्यमानस्यासीदिति क्रियापदस्य वाक्यान्तरेष्वप्यन्वयादादिक्रियादीपकम्। एतत्प्रपंचस्तु पूर्वस्मिन् स्तबके चक्षुष्मन्त इति श्लोकव्याख्यायां द्रष्टव्यः- किंच लक्ष्मीमुखादीनां चन्द्रादिच्छायापत्तिरूपार्थे भ्रातृश्रियं सहभुवः परिबिभ्रतीति शब्द प्रमाणमुपन्यस्तमिति शब्दप्रमाणालंकारः- लक्ष्म्यास्तत्तदवयवावच्छेदेन सहजात चन्द्रादि संपद्दर्शनेन सहभुवां भ्रातृश्रीमत्त्वप्रवादसत्यतानुमानादनुमानालंकारश्च। प्रयोगस्तु- सहभुवस्सत्यभूतसोदर श्रीमत्त्वप्रमाद विषयाः- सोदर श्रीमत्त्वनियतत्वात्। यो यन्नियतस्स सत्यभूत तत्प्रवादविषय इत्यादिः- अनयोरेकवाचकानुप्रवेशः- उक्तनिदर्शनाभिः क्रमाल्लक्ष्मी वदने लावण्य जगदाह्लादकत्वादि। करयोश्चरणयोश्चाताम्रत्व सुकुमारत्वादि- वचसि माधुर्य जगदुज्जीवकत्वादि च व्यज्यत इत्यलंकारैर्वस्तुध्वनिः- शाक्वरं वसन्ततिलकावृत्तम्- ''उक्ता वसन्ततिलका तभजा जगौ ग''इति लक्षणात्। एतेन पाश्चिमस्येन्द्रवज्रावृत्तमित्युक्तिः परास्ता। तल्लक्षणगन्धस्याप्यत्राभावात्- न च वसन्ततिलकाया एव नामान्तर मिदमिति वाच्यम्। ''सिंहोन्नतेयमुदिता मुनिकाश्यपेन। उद्धर्षणीति गदिता मुनिसैन्धवेन। भोगावळीति कथिता भुजगाधिपेने''ति यत्क्वापि तथाव्यवहारादर्शनात् ॥४॥

वक्ष्यमाणमुदधेः प्रशस्तापत्यवत्त्वमुत्तम्भितम्- सुधा- आदिर्येषाम् ते सुधादयः- सन्तु तिष्ठन्तु नाम - नैते जलधेरपत्यवत्ताप्रथाहेतव इति भावः - कामचारानुज्ञार्थक लोटा त्तेष्वैदासीन्यं द्योत्यते। तथाऽपि सुधादिसद्भावेऽपि- तोयधिर्दुग्धाम्बुधिः- भवत्यैव न त्वितरैः- अपत्यवान् प्रशस्तापत्यः- प्रशंसायां मतुप्। "आत्मजस्तनयस्सूनु"रित्यारभ्य "स्त्रियांत्वमी आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोस्समे" इत्यमरः- ध्रुवं- नेयमतिशयोक्तिरित्यभिप्रायः। त्वदवतारवैधुर्ये सुधादिप्रादुर्भावेऽपि न कदाचिदपि जलनिधेः प्रशस्तापत्यवत्तानिबन्धनं प्रथेत यश इति भावः- अत्र दृष्टान्तमाह। गुणा इति। विक्रमादयः शौर्यमुखाः- आदिशब्देन वीर्यधैर्यादीनां ग्रहणम्- गुणाः- जाग्रतु निर्निद्रा भवन्तु नाम- "जागृ निद्राक्षय" इत्यादादिकः- अस्माल्लोट्प्रथमपुरुष बहुवचनम्- "जक्षित्यादय" इत्यभ्यस्तसंज्ञायां "अदभ्यस्ता"दिति झस्यादादेशः "एरु"रितीकारस्योत्वं च - लोटा पूर्ववदौदासीन्यं द्योत्यते- भूपतिः राजा- उदारस्य भाव उदारता विश्राणनताच्छील्यम् "यद्विश्राणनताच्छील्यमौदार्यं तन्निगद्यत" इति लक्षणात्। महती च सा उदारता च महोदारता- तयैव- न त्वन्यैर्गुणैरिति भावः- कर्मधारये पुंवद्भावे- "आन्महत"दित्यादिना महच्छब्दस्यात्वं- उदारताया महत्त्वविशेषणेन पात्रलाघव प्रदेय गौरवाद्यवधीरणेनात्मपर्यन्त सर्वस्वदातृत्वं विवक्षितम्- गुणी प्रशस्तगुणः प्रशंसायां मत्वर्थीय इनिः- यथा औदार्यमेव महीपतेर्गुणित्व प्रथाहेतुर्न तथा विक्रमादय इति भावः- यच्छ्रूयते। "दानं यज्ञानां दक्षिणावरूथं दातारं सर्वभूतान्युपजीवन्ति दानेनारातीनपानुदन्त दानेन द्विषन्तो मित्रा भवन्ति दाने सर्वं प्रतिष्ठितं तस्माद्दानं परमं वदन्ती"ति। आनुशासनिके चोक्तम् "शूरा वीराश्च शतशस्सन्ति लोके युधिष्ठिर। तेषां संख्यायमानानां दानशूरो विशिष्यत" इति। भूपतिरित्यनेन यस्य कस्यचिच्चेद्यथासंभवं गुणान्तरसद्भावेऽपि स्याद्वा गुणवत्त्वप्रथा- महीपतेस्तु महोदारतयैवेति सूच्यते। "अन्येषामस्तु वा मा वा भूपतेस्तु वदान्यता। अवश्यं भाविनी यस्मादुपजीवन्ति तं प्रजाः। संश्रयन्ति प्रजास्सर्वा वदान्यमवनीपतिम्। यथा सुशीतलच्छायं विहगाः फलितं तरुम्। अदातारं महीपालं न प्रजा बहुमन्वते। औदार्यं खलु भूपानां महान्गुण शिरोमणिः। न लोभात्परमो दोषो नौदार्यात्परमो गुणः। नोपकारात्परं पुण्यं नापकारादघं परम्। अपि सत्सु गुणेष्वन्येष्वौदार्यविधुरो नृपः। न रञ्जयेन्नृणां चेतो यथा पुष्पमसौरभ" मित्याभिरन्वयव्यतिरेकाभ्यां महौदार्यवत एव राज्ञस्सकलजगदुपजीव्यत्वोक्तेः। अत्र वाक्यद्वये

वंशस्थवृत्तम्। "जतौ तु वंशस्थमुदीरितं जरा" विति लक्षणात्॥9॥

मू. श्राम्यत्पन्नगवक्त्रकोटरमरुन्नुन्नोर्मिसंघट्टना
झाडित्योर्ध्वविसारिदुग्धकणिकानिष्पन्नपुष्पांजलिः।
सिन्धुर्मन्थवसुंधराभृदुदयद्धुंधुंध्वनिच्छद्मना
स्तुत्वा माधव मद्भुतामलभत त्वामम्ब कन्यामणिम्॥ 10

अथेदानीं कलशजलनिधेरीदृशापत्यलाभो भगवत्सुतिरूपोत्कृष्ट धर्मानुष्ठान निबन्धन एवेति संभावयति। श्राम्यदिति। हे अम्ब सर्वलोकजननि सिन्धुः दुग्धाम्बुधिः- श्राम्यतः मथनार्थैकीभवदौर्बलदेवासुरकुलकरतल निपीडनामन्दमन्दरगिरिविषमदृषत्संघ संघर्षणाभ्यां खिद्यमानस्य, "श्रमुतपसि खेदे चे" ति दैवादिकात्कर्तरि शता- "शमामष्टानां दीर्घश्श्यनी" ति दीर्घः- श्राम्यदिति पन्नग विशेषणेन वक्ष्यमाणानां निश्वास मरुतामाभीक्ष्ण्येन प्रवृत्तत्वम्- तेन तन्नुन्नाना मूर्मीणामुत्तरोत्तरमविश्रान्त विजृम्भमाणत्वं च द्योत्यते। पन्नगस्य मन्दराद्रिमन्थयोक्त्रीकृतस्य वासुकेः- कोटराणि निष्कुहाः- वक्त्राणि कोटराणीवेत्युपमिति समासः- "निष्कुहः कोटरं वा ने" त्यमरः। तेषां मरुता मारुतेन- नुन्नानां प्रेरितानां- "नुदप्रेरण" इत्यस्मात्तौदादिकात्कर्मणि क्तः- "रदाभ्यां निष्ठातो नः पूर्वस्य च द" इति तकार तत्पूर्वदकारयोर्नत्वम्- नुदतेरनुदात्तोपदेशत्वेन "आर्धधातुकस्येड्वलादे" रिति प्राप्तस्येटः "एकाच उपदेशेऽनुदात्ता" दिति निषेधः। ऊर्मीणां तरङ्गाणां- संघट्टना अन्योन्योपमर्दः- संपूर्वाद्घट्टतेः "घट्टिवन्दिविदिभ्यश्चेति वाच्य" मिति वार्तिकेण युच्- युचस्त्र्यधिकार वर्तित्वात् "स्त्रीभावादावनिक्तिण्वुलणङ्ण्वुच्क्यब्युजञो ञिशा" इति नामलिङ्गानुशासनोक्तेश्च स्त्रीत्वम्- तस्याः यत् झाडित्यं झडितिभावश्शैघ्र्यं- तेन- ऊर्ध्वं विसारिण्यः प्रसरणशीलाः- दुग्धस्य क्षीरस्य- अल्पाः कणाः कणिकाः- अल्पार्थे कनि लोकात् स्त्रीत्वे "प्रत्ययस्था" दितीत्वं-ताभिः-निष्पन्नः निर्वृत्तः "सिद्धे निर्वृत्तनिष्पन्ना" वित्यमरः। निष्पूर्वकात्पद्यतेः कर्तरि निष्ठानत्वं च। अनुदात्तत्वेनेण्णिषेधः पूर्ववत्- पुष्पाञ्जलिः यस्य तथोक्तस्सन्-अत्राञ्जलि शब्देन यथा "अञ्जलिना सक्तून्प्रदाव्ये जुहुया" दित्यत्राञ्जलि शब्देन गुरुदेवताप्रसादनार्थ निश्छिद्र हस्तद्वयसंयोगरूपाञ्जलिपरत्वे सक्तूनामवकाशालाभेन सामर्थ्यात्संयुक्तप्रसृतिद्वयात्मकमध्यगतावकाशोपेताञ्जलिरेव

कुट्मलिताञ्जलिपरत्वे पुष्पाणामवकाशायोगाद्व्याकोचाञ्जलिरेव गृह्यते। एतादृशोय-मञ्जलिशब्दोत्र ''द्वाभ्यामञ्जलिभ्यां क्रीत'' इत्यत्रेवाञ्जलिपरिमितपरः- अञ्जलिः पुष्पाणि पुष्पाञ्जलिरिति समासः। राजदन्तादित्वात्परनिपातः- अञ्जलिपरिमितकुसुम विकिरणोपचार इति यावत्। यद्वा पतञ्जलिरित्यत्रेवाञ्जलेः पुष्पं पुष्पाञ्जलिरिति मयूर व्यंसकादित्वात्समासः- पतञ्जलिरिति तु अञ्जलेः पतित इति विग्रहे मयूरव्यंसकादित्वात् समासे तत्रैव निपातनादित शब्दलोपे पृषोदरादित्वाद्वा तल्लोपे साधुरित्युक्तम् शकन्ध्वादि वार्तिक शब्देन्दुशेखरे। अञ्जलि संबन्धि कुसुम विकिरणोपचार इति यावत्। अत एव न्यायप्रसूनाञ्जलिरित्यत्राञ्जलेः प्रसूनमिति व्याख्यानं च संगच्छते। अथवा। अञ्जलि शब्दोऽञ्जलि करणविकिरणे लाक्षणिकः। पुष्पाणामञ्जलिरिति समासः। पुष्पसंबन्ध्यञ्जलि करणविकिरणोपचार इति यावत्। अनेन श्रीरूपकन्यार्थित्वानुगुणोपायानुष्ठातृत्वं द्योतितम्। ''पुष्पैरभ्यर्चयन्विष्णुं परमां श्रियमश्नुते- कन्यार्थी कुसुमैरर्चेत्पुत्रार्थी तुलसीदळै''रित्युक्तेः।

मन्थो मन्थानदण्डः- ''वैशाखमन्थमन्थानमन्थानोमन्थ दण्डक'' इत्यमरः। तद्रूपो वसुंधरा भृन्महीधरः- मन्दर इति यावत्- ''मन्थानं मन्दरं कृत्वा योक्त्रं कृत्वा च वासुकि''मिति वैष्णवोक्तेः- अत्र मुग्धवसुंधराभृदिति पठता पाश्चात्येन स्वमुग्धतैव प्रकाशिता- मुग्धत्वस्य मन्दराद्रि विशेषणत्वे निष्प्रयोजनत्वेन ''हन्त वर्तामहे वज्रघट्टनात्प्राक्चलात्मस्वि''त्यादाविव ''तदप्रयोजकं यत्स्यादविशेषविधायक''मित्युक्ताप्रयोजकाख्यदोषापत्तेः- धुंधुंध्वनि विशेषणत्वेन कथंचित्सप्रयोजनत्वनिर्वाहेऽपि केवलवसुंधराभृच्छब्देन मन्दररूपार्थस्य प्रसिद्धपाठापेक्षया झडित्यनुपस्थितेरनुप्रास सौन्दर्यभङ्गस्य स्फुटत्वाच्च- मन्थ वसुन्धराभृतः परिवर्त्यमानमन्दराद्रिविक्षोभणादिति यावत्- उदयन्तः आविर्भवन्तः- उत्पूर्वकस्य ''इटकिटकिटीगता''वित्यत्र प्रश्लिष्टस्य इधातोः कर्तरि शता- ये- धुंधुमिति ध्वनयः- तेषां-छद्मना च्छलेन ''कपटोऽस्त्रीव्याजदम्भोपधयश्छद्मकैतव'' इत्यमरः- धुग्धुग्ध्वनीति केचित्-धुङ् धुङ् ध्वनीत्यन्ये- यद्यप्यनुकरण शब्दत्वाद्यथा तथावा सर्वमप्युपपद्यत एव- तथाऽपि धुंधुमिति पाठ एव स्वरसः- अनुप्राससौन्दर्याधिक्यलाभात्- माधवं लक्ष्मीपतिं- अनेन ''नित्यैवेषा जगन्माता विष्णोश्श्रीरनपायिनी''त्युक्तरीत्या लक्ष्म्या भगवदनपायित्वं सूचितम्-तेनास्यास्सिन्धुकन्यात्व प्राप्तिरपि तत्कृतस्तुतिपारवश्यजनितया तदनुजिघृक्षयैव-न तु कर्मणेति व्यज्यते- अत एव वक्ष्यमाणमस्या अद्भुतत्वं चोत्तम्यते- अलक्ष्मीकस्य यस्य कस्य चित् स्तुत्या वक्ष्यमाण लक्ष्मीरूपकन्यारत्न लाभमहाभाग्यं कथमिव घटेत-न हि स्वयं निर्धनोऽन्येषां

मुक्तादिकेऽपि चे''ति मणिशब्दस्य स्त्रीत्व- कन्याया मणित्वेन रूपणान्मानदत्व मान्यत्व महार्घत्व मङ्गळत्व स्थिरत्व भोग्यत्व प्रकाशकत्वभगवदुरःपरिष्कारयोग्यत्वादि ''मुक्ताफलेषु च्छायायास्तरळत्वमिवान्तरा। प्रतिभाति यदङ्गेषु लावण्यं तदिहोच्यत'' इत्युक्त लक्षणं लावण्यं च द्योत्यते- अद्भुतत्वं चास्याः स्वाविर्भूत रत्नान्तरापेक्षया लोकोत्तर सुकुारत्व निर्दोषत्वचेतनत्वादिवैलक्षण्यात्- जगज्जनन्या भगवन्नित्यानपायिन्या अप्येतद्रूपेणा- वतीर्णत्वाद्वा- अलभत अविन्दत- स्तवरूपमाराधनमन्तरा ईदृशलोकोत्तर कन्यामणि लाभो दुर्घट इति भावः- अनेन स्तवरूपाराधनस्यैव सर्वधर्मापेक्षया ज्यायस्त्वं द्योतितम्- अत एवेदं सकलधर्मविदग्रेसरत्वेन भगवतोऽपि सम्मतेन शान्तनवेनाप्यधिकतम धर्मतया सम्मन्यते अनुशासनपर्वणि ''एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः। यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरस्सदे''ति। निपुणनिरूपणतोऽपि न हीदृशं भगवतः प्रसादनं किंचिदन्यन्नाम संभाव्यते। यदेतत्प्रशस्यते नारदीये हरिभक्ति सुधोदये- ''स्तुवन्नमेयमहात्म्यं भक्ति ग्रथितरम्यवाक्। भवेद्ब्रह्मादिदुष्प्रापप्रभुकारुण्यभाजन''मिति। यद्वा स्तुतिरूप सुकरोपायेनैव त्वादृशकन्यामणिमलभत- न तु बह्वायाससाध्य गुरुतरोपायैरहो अस्य भागदेयमिति व्यज्यते। अथवा। स्तवश्रवणपरवशो भगवान्किंकं न दद्यात्- य एषोऽभिधीयते स्तवप्रिय इति नामसहस्रे- श्रूयते चात्मपर्यन्त सर्वस्वदातृतया ''य आत्मदा बलदा'' इति- यद्वा- स्तुत्या प्रसन्ने भगवति किन्नु नाम भवेद्दुर्लभं स्तोतॄणां मिति व्यज्यते- यदुच्यते श्रीभागवते ''किमलभ्यं भगवति प्रसन्न श्रीनिकेतन''इति- ''सकलफलप्रदो हि विष्णुः- रत्नपर्वतमारुह्य यथा रत्नं नरो मुने। सत्वानुरूपमादत्ते तथा कृष्णान्मनोरथान्।'' इत्यादिकमिह भाव्यम्- यद्वा- माधस्तवेनैव कन्यामणिमलभत जलनिधिः- न तु मथनादिना प्रयत्नेन महीयसा स इव कौस्तुभमणिं स्वस्मादिति व्यज्यते।

अत्र दुग्धकणिकासु पुष्पाञ्जलि-त्वारोपणाद्रूपकालंकारः- धुंधुं ध्वनौ तद्धर्मस्य स्तोत्रत्वारोपफलकतया छद्मपदेन निह्नवात्कैतवापह्नुतिः ''कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुतेः पदै''रिति लक्षणात्। कन्यामणि लाभं प्रति माधवोद्देश्यकपुष्पाञ्जलिसमर्पण स्तुतिकरणयोरहेतुत्वेऽपि हेतुत्वेन संभावनाद्धेतूत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या- पूर्वोक्त रूपकापह्नुतिभ्यामुज्जीव्यत इति संकरः- कन्यामणिमित्यत्र ''हृदि मनसिजः प्रेमलतिका''मित्यादाविव केवलनिरवयवरूपकं तच्च- अद्भुतामिति विशेषणादधिक ताद्रूप्यरूपं- प्रागुक्तालंकार संसृष्टमिति संक्षेपः- कन्यामणिमिति रूपकेण जलनिधिः-

गम्यमानत्वात्परिवृत्त्यलंकारो व्यज्यत इत्यलंकारेणालंकार ध्वनिः- "समन्यू-नाधिकानां तु यदा विनिमयो भवेत्। साकं समाधिकन्यूनैः परिवृत्तिरसौ मते" ति तल्लक्षणम्- ओज आदिगुणाश्च यथोचितमनुसंधेया बुद्धिमत्तमैः। वृत्तम् शार्दूल विक्रीडितम् ॥10॥

मू. सिन्धुक्रोडस्थपुटविलुठन्मन्थलब्धावतारै
धुंधुंकारैस्त्वदुदयमहे दुन्दुभिश्रीमति श्रीः।
प्राञ्चो झंझानिलपटुनटोन्नाटितप्रौढवीची-
वल्लीहल्लीसकमकलयन्नन्तरुल्लीढहर्षाः ॥ 11

अथ तादात्विकं जलनिधि तरङ्गरिङ्खणं लक्ष्म्याविर्भावोत्सवनृत्तविशेषत्वेन रूपयति। सिन्ध्विति। हे श्रीः "नेयङुवङ्स्थानावस्त्री" ति नदीसंज्ञानिषेधेन न "अम्बार्थनद्यो" रिति ह्रस्वः- सिन्धोस्समुद्रस्य- क्रोडं हृदयं मध्यभाग इति यावत्- "न ना क्रोडं भुजान्तर" मिति भुजाभ्यन्तर वाची क्रोडशब्दोऽत्र मध्यमात्रे लाक्षणिकः - तस्मिन्- स्थपुटं विषमं निम्नोन्नतं यथा स्यात्तथा "विषमे स्थपुटं विदु" रिति हारावळ्यां- "स्थपुटं विपमोन्नत" मिति वैजयन्त्यां च- विलुठन् परिवर्तमान इत्यर्थः- यो मन्थः मन्थदण्डभूतो मन्दराद्रिरिति यावत्- तस्मात् तद्विलोडनादिति यावत्- लब्धः प्राप्तः - अवतार आविर्भावो यैस्ते- तथोक्तैः- धुंधुंकारैः धुंधुमित्याकारक शब्दैः- अत्रापि पूर्वश्लोक इव धुंधुंकारैरिति पाठ एवानुप्रास सौष्ठवोत्तम्भ- कत्वादादरणीयः- दुन्दुभिश्रीमति भेरीध्वनिसंपत्संपन्न इति यावत्- त्वदुदयस्य त्वदवतारस्य मह उत्सवः- तस्मिन् "मह उद्धव उत्सव" इत्यमरः- महशब्द उद्धवादिशब्द साहचर्यात्पुल्लिङ्गः- अत एवादन्तश्च- प्राञ्चः तदानींतना जनाः- अन्तः चेतसीत्यर्थः- उल्लीढः उत्कर्षेणास्वादितः- हर्षः प्रमोदो यैस्ते तथोक्ताः हर्षातिरेकमत्तास्सन्त इति यावत्- उल्लीढ इत्यत्र- उत्पूर्वका "लिह आस्वादन" इत्यस्माद्धातोः कर्मणि क्तः- धत्वढत्वष्टुत्व ढलोप दीर्घाः- झंझानिलः सवृष्टिमारुतः "प्रकम्पनश्चातिबलो झंझावातस्सवृष्टिक" इत्यमरः- "तेनैव मुखनिश्वासवायुनास्तबलाहकैः। पुच्छदेशे प्रवर्षद्भि स्तथा चाप्यायितास्सुरा" इति श्रीविष्णुपुराणोक्तेर्मथन समये झंझामारुत सद्भावोऽवगम्यते-पटुः नर्तन चतुरः "दक्षे तु चतुर पेशल पटव" इत्यमरः-स चासौ-नटः नाट्याचार्यः-झंझानिल एव पटुनटः-तेन-उन्नाटिताः उन्नर्तिताः- प्रौढाः उद्दामानः नृत्तविद्यानिस्सीमकौशले इति यावत्- "प्रादूहोढे" त्यादिना वृद्धिः- याः- वीच्यः- ऊर्मयः- वल्ल्यः लता इव वीचीवल्ल्यः- स्त्रीलिङ्गस्वारस्येन मारुते

सुभगसगानललनाजनमण्डलाकारनृत्तविशेष इति केचित्- यथा तथावा नर्तनं विशेष वाचित्वे न काप्यनुपपत्तिः। आकलयन् अपश्यन्- "कलविक्षेपे" इत्यस्मा "त्कलगति संख्यानयो"रित्यस्माद्वा चौरादिकाल्लङ्। यद्यप्यस्य दर्शनार्थकत्वं नानुशिष्टम्- तथाऽप्यत्र तदर्थकत्वं ग्राह्यम्- "कवीनां कलिः कामधेनु"रिति ह्याभाणकः- केचित्त्वत्र प्रौढवीचीवल्लीर्हल्लीसकमिति पठित्वा- प्राञ्चोब्रह्मादयः- प्रौढवीचीवल्लीः हल्लीसकं नृत्तविशेषम्- अकलयन् अकारयन्नित्यर्थं वर्णयन्ति- तदा द्विकर्मकत्वं दुर्घटम्- यत्तु- सिन्धुक्रोडस्स्थपुटेति पाठमनादृत्य- सिन्धोरोधस्स्थपुटेति पठन् रोधस्स्थपुटे तीर मध्ये इति व्याख्यातवान्प्रतीचीनः- तदसुन्दरं- सिन्धोरिति व्यस्तत्वे एकदेशान्वयदोषात्- चैत्रस्य दास- भार्येत्यादाविवैकदेशान्वयस्यादोषत्वेऽपि प्रसिद्धपाठवत्सहृदयहृदयाह्लादकवक्ष्यमाण गुणपरिपोषवैधुर्यापातात् स्थपुटशब्दस्य मध्यवाचितायाः क्वाप्यप्रसिद्धेः- अमृतार्थिनां सिन्धोर्मध्य इव तत्तीरमध्ये मन्दरपरिवर्तनस्य जलताडनादिव निष्प्रयोजनत्वा त्तेन च पयोमध्य परिवर्तनेनेव धुंधुंकारोदयायोगाद्धुंधुमित्यस्य च द्रवद्रव्यमथनजन्यशब्दानुकरण एव प्रसिद्धेर्मध्य एव तत्परिवर्तनस्येतिहास पुराणप्रसिद्धत्वाच्चेत्यलमतिक्षुल्लकव्याख्याकौशल निरासकुतूहलेन।

अत्र धुंधुकारादौ दुन्दुभिश्रीत्वाद्यारोपणाद्रूपकम्- तत्र धुंधुंकारैर्दुंदुभिश्रीमतीत्यत्र "नद्या शेखरिणे दृशा तिलकिने नारायणेनास्त्रिणे नागैः कङ्कणिने नगेन गृहिणे नाथाय सेयं नति"रित्यादाविव वैयधिकरण्येनारोपः। धुंधुंकार लक्षण विषयवाचिशब्दगत विभक्तेरारोप्यमाणदुन्दुभिश्रीशब्देऽदर्शनात्- झंझानिले पटुनटत्वारोपस्तु सामानाधिकरण्ये नैव। किंच। झंझानिलस्य पटुनटत्वेन रूपणाद्वीचीवल्लीनां नर्तकीत्वं गम्यत इति "प्रौढमौक्तिकरुचः पयोमुचां बिन्दवः कुटजपुष्पबन्धवः। विद्युतां नभसि नाट्यमण्डपे कुर्वते स्म कुसुमाञ्जलिश्रिय"मित्यत्रेवैकदेशविवर्तीदं रूपकमिति ध्येयम्। वीचीवल्लीरिङ्खण रूपं विषयं निगीर्य हल्लीसकत्वाध्यवसानाद्रूपकातिशयोक्तिश्च "रूपकातिशयोक्तिः स्यात् निगीर्याध्यवसानत" इति लक्षणात्। सा च पूर्वोक्तरूपक प्रसादासादित वैभवेति तयोरङ्गाङ्गि भावसंकरः। समृद्धिमद्वस्तुवर्णनादुदात्तालंकारः "उदात्तमृद्धेश्चरित"मिति लक्षणात्। वृत्त्यनुप्रासश्चेत्येतेषामेकवाचकानुप्रवेशलक्षणस्संकरः। पादचतुष्टयेऽप्यवैषम्येण भणनात्समताख्यो गुणः। "अवैषम्येण भणनं समता सा निगद्यत" इति लक्षणात्। विकटाक्षरबन्धत्त्वादौदार्यं नाम गुणः। "विकटाक्षरबन्धत्वमार्यैरौदार्यमिष्यते" इति लक्षणात्।

तत्कालधा...

राजीवाक्षप्रणयिनि भृशं रज्जुतामभ्यनैषुः ॥ 

एवं लक्ष्म्या आविर्भावमभिवर्ण्य सिंहावलोकनन्येन प्राथमकालिकं चिकुराविर्भावं स्मरन्नाह। बर्हमिति। हे राजीवाक्षप्रणयिनि- राजीवे इव अक्षिणी यस्य स राजीवाक्षः- ''बहुव्रीहौ सक्थ्यक्ष्णो''रिति समासान्तषच्- ''तस्य यथा कप्यासं पुण्डरीक मेवमक्षिणी- रामो राजीवलोचन'' इत्यादिकमिह स्मर्तव्यम्- प्रणयोऽस्या अस्तीति प्रणयिनी- मत्वर्थीय इनिः- नान्तलक्षणो ङीप्। राजीवाक्षस्य प्रणयिनी- तस्या स्संबुद्धिः- सुरैः देवैः- मन्थक्षितिभृति मन्दरगिरौ बद्धाः नद्धाः - पन्नगाः फणिनः- यद्यपि ''योक्त्रं कृत्वा च वासुकि''मिति वासुकेरेकस्यैव योक्त्रतया मन्दराद्रौ नहनं प्रसिद्ध्यतीतिहासपुराणेषु- न तु बहूनां पन्नगानाम्। तथापि ''वर्णितं व्यासपुत्रैः। यत्तत्सेनेश्वरार्यैरगणि वकुळभूत्किंकरौ रङ्गयकारि व्यासार्यै र्न्यासि च द्विश्श्रुतमतिविशदं विष्णुचित्तै र्विवव्रे'' इत्यादाविवैकस्मिन्नेव नागराजे पूज्यत्वेन बहुवचनोपपत्तिः। पूज्यत्वं चास्य लक्ष्म्याविर्भावपरमसाधनत्वेनेति ध्येयम्। अथ वा ''तत्पुरुषो मानव एत्य ब्रह्मलोकान् गमयती''त्यत्र लोकशब्द इवार्थस्यैकत्वे निश्चिते बहुवचनं पाशाधिकरणन्यायेनावयवगतं बहुत्वमादायोपपद्यते।

तथाहि तदधिकरणशरीरं कर्ममीमांसायां नवमाध्यायतृतीयपादे रत्नमालायामेवं वर्णितम्। ''उत्क्रष्टव्यो न वा मन्त्रो बह्वर्थोऽसंगतत्वतः। उत्कर्षो न विकल्प्योसौ गुणेत्वन्याय्यकल्पना। योऽयं पूर्वोदाहृतः ''अदितिः पाशान्प्रमुमोक्तु इति बहुवचनान्तः पाशमन्त्रः- तस्य प्रकरणादुत्कर्षो बहुपाशयुक्तेषु पशुगणेषु कर्तव्यः। कुतः। एकस्मिन्पशौ प्रकृते तस्यानन्वितत्वादिति चेत्। नासावुत्क्रष्टव्यः- किंतु ''अदितिः पाशं प्रमुमोक्त्वि''त्येकवचनान्तेन मन्त्रेण सह विकल्पनीयः। न हि पाशानित्यत्र प्रधानांशस्यानन्वितत्वमस्ति- प्रातिपदिक विभक्त्योः प्रातिपदिकं प्रधानं- धर्मिवाचकत्वात्- विभक्तिस्तु कर्मत्वकरणत्वादि धर्मवाचकत्वाद्गुणभूता। तथा विभक्तिवचनयो र्विभक्तेस्तु कर्मादिकारकवाचित्वात्प्राधान्यं- वचनस्य कारकसंख्याभिधायित्वाद्गुणत्वं- तथा सति बहुवचनान्ते पाशशब्दे प्रातिपदिकं कर्मकारक विभक्तिश्चैकस्मिन्नेव पाशे संगच्छेते- गुणभूते तु बहुवचने लक्षणावृत्तिः कल्पनीया। पाशावयवगतं बहुत्वं लक्ष्यत इति। तस्माद्गुणभूतवचनमात्रमनुसृत्य कृत्स्नस्य मन्त्रस्य प्रकरणपाठो न बाधनीयः। किंतु प्रधानानुसारेण मन्त्रयो स्समानबलत्वाद्विकल्पः कर्तव्य इती''ति।

प्रसिद्धत्वेऽपि "अथ प्रयत्नोन्नमितानमत्फणै धृते कथंचित्फणिनां गणैरधः। न्यधायिषातामभिदेवकीसुतं सुतेन धातुश्चरणौ भुवस्थले" इति शिशुपालवधश्लोके "चलति जगतां जैत्रे यत्र स्वभोगिचमूभटैर्वलयित महादेहस्तम्भो बिभर्ति भुवस्तलम्"। इत्यनर्घराघवश्लोके च - फणिगण विधृततया- स्वभोगि चमूभटवलयित- देहस्तम्भ-नागराजविधृततया चोक्तिरतिशयोक्त्यैव निर्वाह्या- तथात्रापि मन्थानाचलस्य बहुपन्नग निबद्धत्वं निर्वोढव्यम्- यद्यपि न तत्र व्याख्यातृभिस्तथा निर्वाहः कृतः। तथाऽपि गत्यन्तर विरहादियमेव गतिः- अन्यथा इतिहासपुराणविरोधादागमविरोधाख्यकाव्यदोष आपतेत्। तल्लक्षणं तूक्तं सरस्वती कण्ठाभरणे। धर्मार्थकामशास्त्रादिविरोधः कोऽपि यो भवेत्। तमागम विरोधाख्यं दोषमाचक्षते बुधा" इति। अत्र पन्नगा इत्यत्र "जात्याख्यायामेकस्मि न्बहुवचन मन्यतरस्या"मिति पाक्षिकं बहुवचन"मिति व्याचख्यौ पाश्चात्यः- यद्यपि पन्नगा इत्यस्य जातिवाचित्वेन जात्याख्यायामिति सूत्रेणैकस्मिन्नर्थेऽपि बहुवचनोपपत्तिर्भवत्येव- तथापि- "आ[illegible]ो वा बहुवद्भाव" इत्युपक्रम्य "तद्यदा द्रव्याभिधानं तदा बहुवचनं भविष्यति- यदा सामान्याभिधानं तदैकवचनं भविष्यती"त्युभयपदार्थपक्षाश्रयणेनैतत्सूत्रस्य भाष्ये प्रत्याख्यातत्वात्- तथा तत्रैव सूत्रे- "एवं च यथोत्तरं मुनीनां प्रामाण्यात्सूत्रोक्तार्थे प्रयोगाणामसाधुत्वमेव। एतेन यत्र वने एक एवाम्रवृक्षस्तत्र जातिपरत्वे आम्रास्संतीति प्रयोगसाधुत्वार्थ मिदमित्यपास्त"मिति शब्देन्दुशेखरोक्तेश्च- योक्त्रतया निबद्धवासुकिपर-पन्नगशब्दस्य उक्तरीत्या बहुवचनान्तत्वमसाध्वेवेति- तदनादरः। गूढार्थविवरणकृतस्तु बहुवचनोपपत्तये- "योक्त्रभूतवासुकिदार्ढ्यापादनाय मध्ये मध्ये सुरैर्ग्रथिताः पन्नगा" इति व्याचक्षते- तदप्यतिशयोक्त्यैव कथंचिन्निर्वाह्यं- अन्यथा- पूर्वोक्तागमविरोधाख्य दोषतादवस्थ्यादित्यलं शाखाचंक्रमेण।

उदकानि धीयन्तेऽस्मि न्नित्युदधिः-"उदकस्योद स्संज्ञाया"मित्युदक शब्दस्योदादेशः- तस्मात् क्षीराब्धेरिति यावत्- उद्भवन्त्याः आविर्भवन्त्याः- उत्पूर्वकस्य भवतेश्शतरि उगितश्चेति ङीपि "शप्श्यनोर्नित्य"मिति नित्यं नुम्"- एतेन उद्भवत्या भवत्या इति पाठश्च्युतसंस्काररूपकाव्यदोषापत्ते रुपेक्ष्य इति ध्येयम्। वर्तमाननिर्देशेन तदानीमेव शीर्षोदयारम्भ इति द्योत्यते। अत एव वक्ष्यमाण बर्हभ्रान्तेरपि परिपोषः- लक्ष्म्याः पूर्णोदितत्वे क्वचिद्भ्रान्ति र्निवर्तेतापि- चिकुरं केशपाशमिति यावत्- "चिकुरः कुन्तलो वाल" इत्यमरः- बर्हं भ्रान्त्वा पिञ्छमिति ज्ञात्वा- ज्ञानविशेषवाचिना तत्सामान्यलक्षणात्- एवमेव "कार्यं

श्चलनमेवार्थः- तथापि तदभाववद्विशेष्यक तत्प्रकारकज्ञानं च तदर्थ इत्यभ्युपेत्यम्- शुक्तिं पश्यन्रजतमिति भ्रमतीत्यादि प्रयोगदर्शनात्- प्रसिद्धं हि धातूनामनेकार्थत्वं च- त्रासतः भयात् ''दरत्रासौ भीतिर्भीः स्साध्वसं भय''मित्यमरः। आद्यादित्वात्सार्वविभक्तिकः पञ्चम्यास्तसिः- स्विन्नानि स्वेदयुक्तानि गात्राणि येषां ते तथोक्ताः- स्विद्यते रनिट्कारिकासु पठितात् क्तप्रत्यये ''रदाभ्या''मिति तकारदकारयोर्नत्वम्- लक्ष्मीचिकुराधिकरणकमयूरपिञ्छभ्रमजनित भयातिशयसंजातस्वेदोद्गमा इत्यर्थः। प्रसिद्धं हि मयूराणां भुजङ्गभुक्त्वम्- अत एव स चासौ कालश्च तत्कालः तत्कालस्यैकोचिता। तत्कालैकोचिता तत्कालस्य मुख्योचितेत्यर्थः- तादृशीं मतिं जुषन्तीति तथोक्तास्सन्तः जुषतेः क्विप्- प्रत्युत्पन्नमतयस्सन्त इत्यर्थः- अत एव- भृशमत्यन्तं त्यक्तचेष्टाः ''न शेकुस्स्पन्दितुं भया''दित्युक्तरीत्या स्पन्दनमपि कर्तुमशक्नुवन्तस्सन्त इत्यर्थः- अत एव- रज्जुतां रश्मितां- ''शुल्बं वटारक स्त्री तु रज्जु स्त्रिषु वटी गुण'' इत्यमरः- अभ्यनैषुः अभिनीतवन्तः- अभिपूर्वकात् ''णीञ् प्रापण'' इत्यस्माद्धातोर्लुङि अडागमे च्लेस्सिचि ''सिजभ्यस्त विदिभ्यश्चे''ति झेर्जुसि एकाच्त्वादिडभावे ''सिचि वृद्धिः परस्मैपदेष्वि''ति वृद्धिः सस्य मूर्धन्यादेशश्च।

यद्वा। भृशमित्यस्या भ्यनैषुरित्यत्रान्वयः- तदा अयमभिप्रायः- पूर्वं मथनसाधनता रूपरज्जुकार्यकरत्वेनमात्रेण रज्जुताभिनयः। संप्रत्यचेतनकल्पतया सर्वात्मना तदभिनय इति अयं भावः। बुद्धिमद्भिरादावेव संभाव्य भाविनीं विपदं तन्निवर्तनोपायस्य प्रतिविधानं प्रथमः कल्पः- येन लभ्येत सुखमेव न कदाचिदपि संकटं- ''अनागतमनर्थं तु सुनयैर्यः प्रबाधयेत्। न स संशयमाप्नोति रोचतां भो व्रजामहे''। इत्यापद्धर्मोक्तेः- अथ कुशलंमन्यतया आदौ तदसंभावनेन प्रविश्य कृत्यवस्तुन्यकस्मादुपनतायां च विपदि झडिति प्रबुध्य तादात्विक युक्त्या तत उत्तरणोपायकल्पनं द्वितीयः। येन ''आदौ न कुरुते श्रेयः कुशलोऽस्मीति यः पुमान्। स संशय मवाप्नोति यथा संप्रतिपत्तिमा''नित्युक्तरीत्या प्राप्तायामपि विपदि ''न हि बुद्ध्याऽन्वितः प्राज्ञो नीतिशास्त्रविशारदः। निमज्जत्यापदं प्राप्य महतीं दारुणामपी''त्युक्तरीत्याऽन्ततस्सुखमेव लभ्येत। न संकटम्। एवमप्यनालोच्य प्राप्तविपदुत्तरणोपायं दीर्घसूत्रतायां ''दीर्घसूत्रस्तु मन्दात्मा हीनबुद्धिरचेतनः। मरणं प्राप्तवान्मूढो यथैवोपहतेन्द्रियः। एवं प्राप्ततमं कालं यो मोहान्नावबुध्यते। स विनश्यति वै क्षिप्रं दीर्घसूत्रो यथा झषः। अनागतविधाता च प्रत्युत्पन्नमति स्तथा। द्वावेव सुखमेधेते दीर्घसूत्रो विनश्यती''त्युक्तरीत्याऽवश्यं दुःखमेव लभ्येत। [illegible]

एव, तर्हिं स्यादात्महानिरेवास्मत्कुलनिसर्गविद्वेषिणि समुद्गतेऽस्मिन्बर्हिणि- न चान्यत्रापसर्पणेनापि सुकरमधुना प्राणत्राणम्- यदिहाबध्यामहि सुरैः परतन्त्राः- तदधुना "अन्धस्स्या दन्धवेळायां बाधिर्यमपि चाश्रयेत्। न निश्वसेदपि स्पष्टं मृतकल्पश्शयीत वा। न तु चेष्टेत वैरिभ्य स्संशयं प्राप्य मानवः। यदि चेष्टेत सहसा नाशमृच्छत्यसंशयम्। कर्मणा येन केनापि मृदुना दारुणेन वा। उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत्। सर्वोपायै रुपायज्ञो दीनमात्मान मुद्धरेत्। जीवन्पुण्यमवाप्नोति पुरुषो भद्रमश्नुत" इत्याद्युक्तरीत्या यथाकथंचिन्निश्चेष्टतयाऽवस्थानेनैव प्राप्तकालं प्रतिव्यूह्य जीवितुमुचितम्- येन द्वितीयकल्पाश्रयणेन वा विपदमुत्तीर्य सुखमुपलभेमहीति। तदानीमेव पर्यालोच्य रज्जुताभिनयमेव मेनिरे तदात्वेसाधीयांसमुपायमिति।

अथ लक्ष्मीचिकुरे पन्नगानां बर्हत्वभ्रान्तिमदलंकारः। "स्यात्स्मृति भ्रान्तिसन्देहै स्तदंकालंकृतित्रय"मिति लक्षणात्। भ्रान्त्या त्रासस्विन्नगात्रतारूपपदार्थसमर्थनाद् भ्रान्तिमदुज्जीवितमेकं काव्यलिङ्गम्। त्रासस्विन्नगात्रतारूपपदार्थेन त्यक्तचेष्टतारूपपदार्थस्य- तेन च रज्जुताभिनयरूपवाक्यार्थस्य समर्थनादपरे द्वे काव्यलिङ्गे। सर्वेषामेषां क्रमेणाङ्गाङ्गिभावसंकरः- भ्रान्तिमत्काव्यलिङ्गयो र्विजातीययोः- त्रयाणां काव्यलिङ्गानां तु सजातीयानामिति वैलक्षण्यमत्रानुसंधेयम्- पन्नगानां तथाविधभ्रान्त्याद्यसंबन्धेऽपि तत्संबन्धकथनरूपातिशयोक्त्या सर्वेऽप्येते संकीर्यन्तेऽलंकाराः। किं च बर्हभ्रान्त्या त्रासस्विन्नगात्रत्वम्- तेन त्यक्तचेष्टत्वम्- तेन च रज्जुताभिनय इति पूर्वपूर्वस्योत्तरोत्तरं प्रति कारणत्वस्यापि प्रतीतेः कारणमालालंकारः। रज्जुताभिनयव्याजेन फणिनां स्वप्राणत्राणरूपेष्ट साधनस्य प्रतीतेः पर्यायोक्तिभेदश्च व्यज्येते इत्यलंकारैरलंकारध्वनिः। "गुंभः कारणमाला स्याद्यथा प्राक्प्रान्तकारणै"रिति। "पर्यायोक्तं तदप्याहु र्यद्व्याजेनेष्टसाधन"मिति च तल्लक्षणे। यत्त्वत्र "त्यक्तचेष्टा इत्यत्र तस्य चेष्टामिति पठन् त्रासतः भयात् तस्य मन्दरस्य इष्टामपेक्षितां रज्जुतां अभ्यनैषुरगच्छन्। यदा मयूरत्रासा न्निश्चेष्टा जातास्तदा तद्रज्जुत्वेनैव तन्मन्थस्येष्टां रज्जुतां प्रापुरिति भाव" इति व्याचख्यौ प्रतीच्यः। तदसमञ्जसमतेस्तस्यैव हृद्यम्- न तावत्पन्नगानां रज्जुता मन्दरस्यापेक्षिता-तस्याचेतनत्वेन चेतनधर्मापेक्षणस्यायोगात्। "अभिमानिव्यपदेशस्त्वि"ति न्यायेनाभिमानिदेवतापर्यन्तताश्रयणेन कथंचिदपेक्षणसंभव निर्वहणेऽपीतिहासपुराणादिषु क्वापि तथानुक्तेः- तत्कालैकोचितमतिभाक्त्वफलभूतस्य

प्रांसद्धेः- उपसर्गार्थाविवक्षणेऽपि प्रापणार्थकस्य तस्य केवलगत्यर्थकत्ववर्णनायोगात्। ''णीञ्प्रापण'' इति हि धातुः। न च ''या-प्रापण'' इत्यत्रेवात्रापि गत्यर्थकताऽश्श्रीयत इति समाधानमुचितम्। तत्र प्रचुरप्रयोगानुरोधेन ''प्रापणमिह गति''रितिवदत्र विशिष्य तथा व्याख्यानाभावात्- यथाश्रुतार्थत्यागे मानाभावात्स्वारस्यहानेश्च। किंच रज्जुत्वेनेष्टां रज्जुतां प्रापुरिति व्याख्यानमप्यसमञ्जसम्। पौनरुक्त्यात्। चकारवैयर्थ्यं च क्वापि तस्यानुपयोगादिति दिक्। श्लोकद्वयं मन्दाक्रान्ता वृत्तम्। मन्दाक्रान्ता जलधिषडगै र्भौ नतौ ताद्गुरू च इति लक्षणात्। यद्यपि पूर्वश्लोके तृतीयचरणे प्राञ्चो झंझानिलेत्यत्र - अस्मिन् श्लोके तत्कालैकोचितेत्यत्र च वर्णचतुष्टयानन्तरमवश्यंभाविनो विच्छेदस्याभावाद्यतिभङ्गाख्य काव्यदोषो दृश्यते। तथापि ''स्यादस्थानोपगतयमुने'' त्यादाविव स्वरसन्धेः पूर्वान्तवद्भावाङ्गीकाराददोषः। तदुक्तं काव्यकल्पलतावृत्तौ। ''संधौ स्वरः क्वचित्पूर्वान्तव त्क्वापि परादिव''दिति। अन्यत्राप्युक्तं ''पूर्वान्तवत्स्वार सन्धिः क्वचिदेव परादिवत्। द्रष्टव्यो यति चिन्तायां यणादेशः परादिव''दिति॥12॥

**मू. आलोक्य तत्र भवतीमवतीर्णरूपाम्**
**वृष्टा मुदा सुमनस स्सुमनःप्रधानैः।**
**पिण्डीभवद्भि रखिलाम्ब पयःपयोधौ**
**डिण्डीरखण्डनिवहै स्सममप्लवन्त॥ 13**

अथ संपूर्णाविर्भूतदिव्यमङ्गळविग्रहायां लक्ष्म्यां त्रिदशकृतां पुष्पवृष्टिं वर्णयति **आलोक्येति**। हे अखिलाम्ब- तत्रेत्येतत् पयः पयोधावित्यत्रान्वेति। अवतीर्णं- रूप आकारो- यस्यास्तां- आविर्भूतसंपूर्णदिव्यमङ्गळविग्रहामित्यर्थः- ''तां विलोक्य महालक्ष्मी'' मित्युपक्रम्य ''ववृषुः पुष्पवर्षाणी''ति पाद्मोक्तरीत्या- अवपूर्वकात् ''तॄप्लवन तरणयो''रिति धातो र्भौवादिकात्कर्तरि क्तः- एकाच्त्वादिडभावे ''ॠत इद्धातो''रितीत्वे ''रदाभ्या''मिति नत्वे ''रषाभ्या''मिति णत्वे ''उपधायां चे''ति दीर्घः। ''रूपं स्वभावे सौन्दर्ये ना लोक पशुबृन्दयोः। ग्रन्थावृत्तौ नाटकादावाकारश्लोकयोरपी''ति मेदिनी। यद्वा प्रशस्ता अवतीर्णा अवतीर्णरूपा- तां तथोक्तां ''प्रशंसायां रूप''बिति रूपप्प्रत्ययः। कृत्स्नाभिव्यक्तसमग्रदिव्यावयवामिति यावत्। ''तसिलादिष्वाकृत्वसुच'' इति पुंवद्भावः- तत्ररूपपः परिगणनात्। भवतीं त्वां- यद्वा तत्रभवतीमिति समस्तं पदं पूज्यवाचि ''पूज्ये

प्रवेकानुत्तमोत्तमा'' इत्यमरः।

यद्यपि ''प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि। प्रज्ञायामपि च क्लीबमेकत्वे तूत्तमे सदि''ति मेदिनीकोशपर्यालोचनायामुत्तमार्थवृत्तेः प्रधानशब्दस्य नित्यैकवचनत्वमेवेति ज्ञायते। तथाप्यत्र महामात्रार्थकतया बहुवचननिर्वाहः। उत्तमरूपार्थ एवैकत्वस्याभिधानात्। अत एव ''महामात्राः प्रधानानी''त्यमरसिंहोक्तिरपि संगच्छते। महामात्रास्सेनान्यादयः। अर्थान्मुख्यैरिति पर्यवस्यति। अस्मिन्नर्थे तु प्रधानशब्दः क्लीबमेवेत्यपि नाग्रहः। ''महामात्रः प्रधानस्स्या''दिति पुंस्काण्डे वोपालितोक्तेः। एतच्चामरसुधादौ स्पष्टम्। अत एव ''दुष्प्रधानाश्च धानाश्चे''त्यादयः प्रयोगाश्च निराबाधाः। सुमनसः प्रधानं येषां ते- इति बहुव्रीहौ तु न काप्यनुपपत्तिः। किंनरकिंपुरुषादय इति विशेष्यं सामर्थ्यात्प्रतीयते। सुमनश्शब्देन ''मनांस्यासन्प्रसन्नानि साधूनामसुरद्रुहा''मित्युक्तरीत्या कृष्णावतारसमय इवास्या अप्यवतारसमये देवानां प्रसन्नमनस्कत्वं सूचितम्। अत एव मुदा प्रीत्या- अपरिच्छिन्नयेति भावः। वृष्टाः सिक्ताः- धारारूपेण विकीर्णा इति यावत्। ''वृषुसेचन''इति भौवादिकाद्धातोः कर्मणि क्तः- ष्टुत्वम्- ''यस्य विभाषे''त्यनेनेण्निषेधः। अस्य ''उदितो वे''ति क्त्वायां वेट्त्वात्- सुमनसः पुष्पाणि ''स्त्रियस्सुमनसः पुष्प''मित्यमरः। सुमनोभिस्सुमनसो वृष्टा इत्यनेन ''वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च। वेषवाग्वृत्ति- सारूप्य माचरन्विचरेदिहे''त्युक्तप्रक्रियया तैस्स्वरूपानुरूपं कैंकर्यमाचरितमिति व्यञ्जितम्। स्वसौमनस्यमप्यनेन सूचितम्। सुमनसः कुसुमान्येव प्रधानं-प्रीतिविषयेषु मुख्यानि येषां ते इति बहुव्रीह्यर्थस्याप्यत्रोपस्कारात् ''यद्यदिष्टतमं स्वस्य तत्तद्भगवतेऽर्पये'' दित्युक्तरीत्याऽति- शयेन स्वप्रीतिविषयं वस्तु देव्यै देवैस्समर्पितमिति द्योत्यते। तेन तेषां भक्त्यतिशयो निरतिशय इति व्यज्यते। पयःपयोधौ दुग्धाम्बुनिधौ- अपिण्डाः पिण्डास्संपद्यमाना भवन्तः पिण्डीभवन्तः। अभूततद्भावे च्विः। तैस्तथोक्तैः- मथनसमयसमुच्चलत्तरङ्गसंघसंघर्ष पुञ्जीभूतैरित्यर्थः। डिण्डीराणां फेनानां ''डिण्डीरोऽब्धिकफः फेन'' इत्यमरः। ये खण्डाश्शकलाः- ''भित्तं शकलखण्डे वा पुंसी''त्यमरः। तेषां निवहैस्समूहैः। समं तुल्यं यथा स्यात्तथा। अग्राह्यवैलक्षण्यं यथा स्यात्तथेति यावत्। अनेन कुसुमानामपि तथैव पुञ्जीभूतत्वं द्योतितम्। खण्डशब्दोपादानं देवाभिवृष्ट कुसुम साधर्म्य द्योतनाय। अप्लवन्त

डिण्डीरखण्डानीति विशेषग्रहण दौर्लभ्यवर्णनात्सामान्यालंकारः। "सामान्यं यदि सादृश्याद्विशेषो नोपलक्ष्यते। पद्माकरं प्रविष्टानां मुखं नालक्षि सुभ्रुवा"मिति लक्ष्यलक्षण संग्रहोक्तेः। अयं चोक्तातिशयोक्त्युत्तम्भित इति संकरः। सममित्यस्य सहार्थकत्व विवक्षायाम प्युक्तरीत्यैवार्थवर्णनं युक्तम्- केवलसहार्थकत्व विवक्षायां चमत्कारानुन्मेषात्- अत एव नात्र सहोक्त्यलंकार इत्यप्युचितम्- "अनेन सार्थं विहराम्बुराशे"रित्यादाविव सहृदय हृदयाह्लादानुदयात्। "सहोक्ति स्सहभावश्चे द्भासते जनरञ्जन" इति हि तल्लक्षणम्। किंच। सुमनश्शब्दः स्त्रीलिङ्गस्वारस्याड्डिण्डीरखण्डनिवह शब्दगत पुल्लिङ्गस्वारस्यात् सममप्लवन्तेति पदस्वारस्या च्चाकस्माल्लब्ध- बहुदूरस्थित- चिरकाल विश्लिष्ट-स्वस्ववल्लभ संश्लेष-ललना जनानन्दपारवश्यकृत- नृत्तवृत्तान्त- प्रतीतेस्समासोक्तिरलंकारः। "समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चे"दिति लक्षणात्। समृद्धिमद्वस्तुवर्णना दुदात्तालंकारश्च। वतीवती- पयःपयोधौ- डिण्डीरखण्डेति द्वयोर्द्वयोर्व्यञ्जनयोस्सकृत्साम्यात् वर्णान्तरव्यवधान सह- व्यञ्जनद्वयद्वयसकृदावृत्तेरपि च्छेकानुप्रासत्वमभ्युपगच्छतां काव्यप्रकाशकृदादीनां मते छेकानुप्रासः। वर्णान्तराव्यवधानेनैव व्यञ्जनयुग्मयुग्मसकृदावृत्तेरेव च्छेकानुप्रासत्वं नियमयतां विद्यानाथादीनां मते तु वृत्त्यनुप्रास एव। अत्र वक्तव्यं सर्वमपि पूर्वस्मिन् स्तबके अभूमिस्त्वद्भूमेति श्लोकस्य व्याख्यायां प्रपञ्चितमस्माभिः। उक्तानामलंकाराणाम् एकवाचकानुप्रवेशसंकरः ॥13॥

**मू. अम्ब स्वयं त्वयि चिरादवतीर्णवत्यां**
**मन्थश्रमव्यपनयाय मखाशनानाम्।**
**श्रान्ताहिरज्जुकबळीकृतिचिन्तयेव**
**क्षीरोदरोधसि शनैरनिलश्चचार॥ 14**

अथ "उत्पन्ना श्रीर्महालक्ष्मी"रित्युपक्रम्य "ववुः पुण्याश्शिवा वाता" इति पाद्मोक्तरीत्या तादात्विकं मन्दानिलस्पन्दन मभिवर्णयति। अम्बेति। हे अम्ब- त्वयि- चिरात् बहुकालात्- दुर्वासश्शापपरिभ्रष्टश्रीकसकललोकभाग्यातिरेक-परिपाकदशा समयवशादिति भावः। अनेन तदाविर्भावस्य बहुप्रयत्नसाधितत्वं च द्योत्यते। स्वयं आत्मनैव- "स्वयमात्मने"त्यमरः। अवतीर्णवत्यां आविर्भूतायां- अवपूर्वकात् तृधातोः कर्तरि क्तवतुप्रत्ययः। इण्निषेधेत्व-दीर्घ-निष्ठानत्वणत्वानि-पूर्वश्लोकोक्तान्यत्राप्यनु-

तुन्दपरिमृजत्वं द्योतयताऽनेन शब्देन तेषां सर्वथा श्रमाक्षमत्वं द्योत्यते। तेन च जलधिमथनरूपमहत्तरकृत्यप्रसक्ततया तेषामतिमात्रपरिग्लानत्वं द्योत्यते। न हि केवलोदरंभरयः पात्रेसमितादयोऽतिमात्रश्रमावहं क्षमेरन्कृत्यं कर्तुम्- मन्थस्य श्रमः मथनजनितायास इत्यर्थः- तस्य- व्यपनयाय निश्शेषापनोदनं कर्तुम् ''क्रियार्थे''त्यादिना चतुर्थी- श्रान्तः खिन्नः- श्रमुधातोः खेदार्थकात्कर्तरि क्तः। ''उदितो वे''ति क्त्वायां वेट्कत्वात्- ''यस्य विभाषे''तीण्निषेधः। ''अनुनासिकस्य झलो''रिति दीर्घः। अहिरेव रज्जुः- मयूरव्यंसकादित्वात्समासः। अहिः रज्जुरिवेत्युपमित समासो वा। तस्याः- कर्तरि षष्ठी- कबळीकृतिः ग्रासीकरणं तत्कर्तृकनिगरणमित्यर्थः। तस्याश्चिन्ता- तया- तद्विषयकाध्यानेनेव ''स्याच्चिन्ता स्मृतिराध्यान''मित्यमरः- अयं हि भुजगाधिराज स्सततमप्युद्युङ्क्ते मामेव कबळयितुं स्वस्थ एव सन्- किं पुनरिदानीं मन्दरगिरिवरसंघर्षभरजनितामिताशनायापिपासा-परिश्रान्तः- तदयं ''अशङ्क्यमपि शङ्केत नित्यं शङ्केत शङ्कितान्। भयं ह्यशङ्किताज्जातं समूलमपि कृन्तती''त्युक्तरीत्या निसर्गप्रत्यनीकतया नित्यं शङ्कितव्य एवाधुना त्ववश्यमतितरां- किंच- ''अवधानेन मौनेन काषायेण जटाजिनैः। विश्वासयित्वा द्वेष्टारमवलुम्पेद्यथा वृक'' इत्युक्तरीत्या श्रमाभिनयव्याजेन जोषं स्थित्वा कदाचिदवलुम्पेदपि प्रमत्तं मां- तदधुना सहसाप्रवृत्तिरौपयिकीति चिन्तयेदेवेति भावः।

यद्वा। अहिरज्जोरिति कर्मणि षष्ठी-तदा- अयमजस्रमस्मत्कबळनेनैव परिपुष्णतां निजान्प्राणान्फणाभृद्गणानामधीशो दैववशादिदानीमलम्भि परिश्रान्तः। तदद्य ''व्यसने चोत्थिते रिपोः। हन्यादेवाततायिनं- देशकालौ समासाद्य विक्रमेत विचक्षणः- अमित्रं नैव मुञ्चेत वदन्तं कारणान्यपि। दुःखं तत्र न कर्तव्यं हन्यात्पूर्वापकारिण''मित्याद्युक्तरीत्या मया सहसा कबळयितुमुद्योक्तव्यं वा- आहोस्वित् ''नावज्ञेयो रिपुस्तात दुर्बलोऽपि कथंचन। स्वल्पोऽप्यग्निर्वनं कृत्स्नं दहत्याश्रयसंश्रयात्। राजानं चैव सर्पं च ब्राह्मणं च बहुश्रुतम्। नावमन्येत वै भूष्णुः कृशानपि कदाचने''त्याद्युक्तप्रकारेण श्रान्तोऽयं किं कुर्यादित्यनवज्ञाय ''गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः। भीतवत्संविधातव्यं यावद्भयमनागत''मित्याद्युक्तरीत्या साशङ्कं प्रवर्तितुमुचितं वेति चिन्तयेवेति भावः। यद्वा। उक्तप्रकारेण कृच्छ्रमापन्ने महति विद्वेषिणि तद्ग्रसनमुचितं वा। ''न च हन्यात् स्थलारूढा न्न क्लीबं न कृताञ्जलि''मित्युपक्रम्य ''नायुधव्यसनं प्राप्तं नार्तं नातिपरिक्षत''मिति मनुस्मरणानुरोधेन उपेक्षणमुचितं वेति चिन्तयेदेवेति भावः। अनिलः मारुतः- अन्यते अनेनेत्यनिलः- ''अनप्राणने'' इति

स्यापि संभवात्सौरभ्य च द्योतितम्- शनैः अद्रुतम्- "अद्रुत शनै" रित्यमरः। अनेन मान्द्यमुक्तम्-चचार-"ववौ वायु स्सुखस्पर्श" इत्युक्तरीत्या ववौ।

अहिरज्वित्यत्र मयूरव्यंसकादिसमासपक्षे रज्जोः कर्तृतया कबळने स्वात्मनाऽनुपयोगेन- कर्मतयाऽपि तथात्वेन- "अनर्थकमनायुष्यं गोविषाणस्य भक्षणम्। दन्ता अपि प्रमृज्यन्ते रसश्चापि न लभ्यत" इत्युक्तरीत्या निष्प्रयोजनत्वेन च प्रकृतपन्नगात्मना परिणत्यपेक्षणात्परिणामालंकारः। "परिणामः क्रियार्थश्चे द्विषयी विषयात्मने" ति लक्षणात्। उपमितसमासपक्षे तूपमालंकृति स्स्पष्टैव। न चात्र श्रान्तत्वरूपसामान्यधर्मप्रयोगान्नोपमितसमास स्संभवतीति वाच्यम्- रज्जोरचेतनतया श्रान्तत्वायोगेन तस्य समानधर्मत्वायोगा दीर्घत्वादेरन्यस्यैव कस्यचित्सामान्यधर्मस्योपमानिर्वाहाय विवक्षणीयतया तदप्रयोगान्न समासानुपपत्तिरिति ध्येयम्। अत एवेयं धर्मवाचकलुप्तेति द्रष्टव्यम्। उक्तयोरलंकारयोस्संदेह संकरः। एकत्रैव कविसंरम्भविश्रान्ते दुर्ज्ञानत्वात् लक्ष्म्याविर्भावमङ्गळसूचकम् शनैश्चरणं प्रति चिन्ताया अहेतोरपि हेतुत्वेन संभावनाद्धेतूत्प्रेक्षा चासिद्धविषया। उक्तसंकरस्यास्याश्च परस्परनैरपेक्ष्या त्संसृष्टिः। अनुप्रासस्याप्यभ्युच्चयः। श्लोकद्वयं वसन्ततिलकावृत्तम्॥14॥

**मू. सान्द्रोत्कण्ठामसृणमधुजित्सादरापाङ्गधारा-**
**सध्रीचीभि श्श्वसनविसरद्दुग्धवीचीभिरब्धिः।**
**उद्वाहाख्यं कमपि भवतीमुत्सवं लप्स्य(लिप्स)मानां**
**मातस्तातो मधुरमनयन्मङ्गळस्नानकर्म॥ 15**

अथ मथनसमयसमुच्चल त्कलशजलधितरङ्गरिङ्गणं श्रियो जलनिधि कर्तृकमङ्गळ-स्नापनत्वेनोत्प्रेक्षते। सान्द्रेति। हे मातः अखिलजगज्जननि- तातः त्वत्पिता- अब्धिः दुग्धाम्बुधिः- आश्चर्यमेत द्यदखिलजगज्जनन्या अपि तव तातोऽजनि दुग्धाम्बुनिधिरितीति भावः। कमपि- लोकोत्तरवैभववत्तया महाकविवचसामप्यगोचरम्- उद्वाहाख्यं परिणयाभिधानं "तथा परिणयोद्वाहोपयमाः पाणिपीडन" मित्यमरः- उत्सवं- लप्स्यमानां प्राप्स्यन्तीं- लभतेरनिटो "लृटस्सवे" ति शानच्। लिप्समानामिति क्वचित्कः पाठः- तदा लब्धुमिच्छन्तीमित्यर्थः- लभतेस्सन्नन्ता च्छानच् "लप्स्यमानां प्रापयन्ती" मिति प्रतीचीन व्याख्यानं त्वशब्दार्थत्वा ल्लक्ष्म्या उत्सवलाभे साक्षादेव कर्तृतया प्रयोजनकर्तृत्वाभावा च्चोपेक्ष्यम्-भवतीं-सान्द्रया निरन्तरया "घनं निरन्तरं सान्द्र" मित्यमरः। परिपूर्णयेति यावत्-उत्कण्ठया "सर्वेन्द्रियसावास्वादो ...

मङ्गळ''मिति मङ्गळतमत्वेन जोघुष्यमाणस्य भगवतः- अनेन वक्ष्यमाणमङ्गळस्नान साधनीभूतदुग्धवीचीसाहचर्यभाजां तत्कटाक्षाणां मङ्गळत्वं- मूर्तरजोगुणत्वेन प्रथितमधु-विजयाभिधायिना ''यत्सत्वं स हरिर्देव'' इत्याद्युक्तशुद्धसत्वमयदिव्यमूर्तित्वं द्योतयता तदपाङ्गधाराणां वक्ष्यमाणदुग्धवीचिसाहचर्यार्हो धवळिमा च द्योत्यते। अपाङ्गानां धवळिम्ना वर्णनमपि कविसमयसम्मतमेव। अत एव ''कटाक्षाः क्षीरोदप्रसरदुरु वीचीसहचराः- विधत्तां विख्यातिं विधुकिरणधारासहचरी''त्यादयस्संगच्छन्ते- आदरेण सह वर्तन्त इति सादराः- अपाङ्गानां कटाक्षाणा''मिति यावत्- ''अपाङ्गो नेत्रयोरन्त'' इत्यमरः- धाराः संततयः- ता एव धाराः क्षीरधारा इति श्लिष्टरूपकम्- ''धारा सैन्याग्रिमस्कन्ध संतत्योः पतनान्तरे द्रवद्रव्यप्रपातेऽपि तुरङ्गगतिपञ्चके'' इति विश्वः- अनेन चैतासां वक्ष्यमाणे मङ्गळस्नाने दुग्धवीचीसाहित्येन करणताया अर्हत्वं गम्यते।

सान्द्रोत्कण्ठामसृणेत्येतत्साभिप्रायं मधुजिद्विशेषणं वा। मधुजित स्सान्द्रोत्कण्ठामसृणत्वादेव तदपाङ्गानां सादरत्वं धाराकारत्वं चेति बोध्यम्- अनेन कटाक्षाणां प्रेमप्रकाशकत्वं सोत्सुकत्वं च द्योत्यते। तदुक्तम्। ''द्रवीभूतं मनो यत्र दर्शने प्रेमदायि त'' दिति ''सोत्सुकं तद्यदालोक्य भुयो भूयो विलोकन''मिति च। सहाञ्चन्तीति सध्रीच्यः- सहपूर्वपदादञ्चतेः ''ऋत्विग्दधृगि''त्यादिना क्विनि ''उगित''श्चेति ङीपि- ''अनिदिता''मिति नलोपे ''अच'' इत्यलोपे ''सहस्य सद्धि''रिति सध्र्यादेशे ''चा''विति पूर्वस्याणो दीर्घः। सहचारिण्य इत्यर्थः- तथोक्ताभिस्ताभिः- श्वसनेन मरुता- विसरन्तीभिः समुत्सर्पन्तीभिः- दुग्धवीचीभिः अमृतोर्मिभिः- अनेनाभिषेचनार्हं मङ्गळत्वं द्योत्यते- यथा च स्मर्यते ''अनलो गो हिरण्यं च दूर्वा गोरोचनामृतम्। अक्षतं दधि चेत्यष्टौ मङ्गळानि प्रचक्षत'' इति। अत्र वचने अमृतमित्यस्य क्षीरमित्यर्थः। ''स्याद्यज्ञशेषाम्बु नभो रसायन क्षीराज्य सोमान्नसुधासु चामृत''मिति रत्नमालायामनुशासनात्। अत एव क्षीरस्य लक्ष्मीस्थानत्वमुक्तं विष्णुस्मृतौ। ''सदा स्थिताऽहं मधुसूदनस्य देवस्य गात्रे तपनीयवर्णे'' त्युपक्रम्य- क्षीरे तथा सर्पिषि शाद्वले चे''ति। मधुरं प्रियं ''स्वादु प्रियौ तु मधुरा''वित्यमरः। मङ्गळस्नानं उद्वाहकल्याणार्थमभिषेकम्- मङ्गळस्य स्नानमित्यश्वघा[illegible]दिवत्तादर्थ्ये षष्ठ्यास्समासः। मङ्गळं च तत् स्नानं चेति कर्मधारयो वा- ''अथ त्रिगु द्रव्ये पापपुण्य

यत्तु- ‘‘त्वां प्रति मङ्गळस्नानरूपं कर्म प्रति-अनय’’दिति व्याचष्टे प्रतीच्यः-तत्तु नयते स्स्वत एव द्विकर्मकत्वेनैकप्रतिशब्दाध्याहार स्यैवानपेक्षितत्वे प्रतिशब्दद्वयाध्याहारस्य सुतरामनपेक्षणीयत्वादुदासितव्यम्- अत्रापाङ्गधारायाः सादरत्वं सान्द्रोत्कण्ठामसृणता-हेतुकत्वात्काव्यलिङ्गम् - मधुजिदिति विशेष्यस्योक्तरीत्या सत्वमयताभिप्रायगर्भत्वा त्परिकराङ्कुरः-दुग्धवीचीसमुत्सर्पणस्य तत्करणक मङ्गळस्नानक्रियातादात्म्येन संभावनात् क्रियास्वरूपोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या। उक्तालंकारसंसृष्टा अनुप्रासेनैकवाचकानुप्रविष्टा च। यत्त्वत्र पूर्वार्धे उपमेति व्याचक्षते गूढार्थविवरणकाराः- तन्नातीव रमणीयम्- अत्रोक्तरीत्या दुग्धवीचीनामपाङ्गसाहित्यवर्णनस्यैव स्वारसिकतया सध्रीचीशब्दस्योपमावाचकता भ्युपगमावश्यंभाविकारणाभावादभ्युपगमेऽपि सहृदयहृदयाह्लादि स्वारस्यादर्शनात् ‘‘भगवत्कटाक्षाः क्षीरोर्मयश्च लक्ष्म्यां निपतिता इति भाव’’ इति तुल्ययोगितासूचक तदीयग्रन्थ विरोधाच्च- यदप्यत्र ‘‘अमृतस्य भगवत्कटाक्षायत्तत्व मभिप्रेत्य तद्धारासरूपत्वं लक्ष्मीविवाहाङ्गमङ्गळस्नानार्थतया अब्धिना विनियुक्तत्वं चोक्तमिति ध्येय’’मिति बुधामोदिनीकारास्तात्पर्यमवर्णयन्- तदर्थं त एव प्रष्टव्या इत्यलम्- मन्दाक्रान्तावृत्तम्- लक्षणं तूक्तम्।।15।।

**मू. सुधोदधिसमुल्लसत्सुरतरुच्छटान्तर्गते**
**मनोज्ञमणिमण्ड(ण्ट)पे महति रत्नसिंहासने।**
**स्थितां मणिसरोरुहे त्रिदशसुन्दरीसेवितां**
**जयाय भवतीमहं जननि संततं चिन्तये।। 16**

एवं श्रीप्रादुर्भावमहोत्सवमभिवर्ण्य तादात्विकमहावैभव सुभगंभावुकां भगवतीं तामेव श्रियमनुसंधत्ते द्वाभ्याम्। सुधेति। हे जननि- उदकानि धीयन्तेऽस्मिन्नित्युदधिः- ‘‘उदकस्योदस्संज्ञाया’’मित्युदादेशः- सुधाया उदधिस्सुधोदधिः- अमृताधारभूत उदधिरित्यर्थः- तस्मिन् समुल्लसन्तः तज्जन्यतानिबन्धनाम्लान कुसुमकिसलयादिमत्तया सम्यगुत्कर्षेण भासमानाः- वार्तमानकालिकेन शत्रा कादाचित्कोऽप्यनुल्लासोऽमीषां व्यवच्छिद्यते- समुद्भवदिति पाठस्तु शय्यानानुरूप्यादनुप्राससौष्ठवह्रासाच्चोपेक्ष्यः-ये- सुरतरवः कल्पवृक्षाः- तेषा छटा-पङ्क्तिः- तस्याः- अन्तःमध्ये-गते स्थिते- छटान्तरित्यत्र षष्ठीसमासः- ‘‘पूरणगुणे’’त्यादिना अव्ययेन समासनिषेधस्तु

शाण्डादिष्वन्तश्शब्दपाठात्- अन्तरित्येतच्चाधिकरणशक्तिप्रधानम्- मध्ये इत्यर्थात्- तद्योगेऽवयविन आधारत्व विवक्षायां सप्तमी- यथावृक्षे शाखेति। अत एव "तस्मिन्यदन्तस्त दन्वेष्टव्य" मित्यादिप्रयोगास्संगच्छन्त- इत्यन्यत्र विस्तरः।

अनेन विशेषणेन शैत्यसौरभ्यच्छाया नैरन्तर्यगाम्भीर्यादि गुणसमृद्धिस्सूच्यते- मनोज्ञमणिमण्डपे- मनोज्ञानां "वर्णाल्पता तथा रेखा त्रासः काकपदं च यत्। बिन्दुश्चैवेति पञ्चैते महादोषा उदाहृता" इत्याद्युक्तदोषलेश वैधुर्येण "सुतारं च गुरुस्निग्धं सुवृत्तं निर्मलं स्फुटम्। पठ्यन्ते रत्नशास्त्रेषु मौक्तिकस्य तु षड्गुणा" इत्याद्युक्तसुगुणवत्तया च रमणीयानाम्- मणीनां पद्मरागवज्रमौक्तिकादि दिव्यरत्नानां "रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि चे"त्यमरः। मण्डपे जनाश्रये आस्थान इति यावत्- "मण्डपोऽस्त्री जनाश्रय" इत्यमरः। मण्डनं मण्डः- "मडिभूषायां" घञ्-मण्डं पातीति मण्डपः- "आतश्चे"ति क इति सुधायां स्थितम्-कचित्तु मण्टप इति वर्गादि वर्णमध्यत्वेन पाठो दृश्यते-तस्य तु "मण्डपो मण्टप-श्चापी"ति श्रीहर्षानुशासनात्साधुता- महति विस्तीर्णे- "विशालं पृथुलं मह"दित्यमरः- यद्वा- मह्यते पूज्यत इति महत्- तस्मिंस्तथोक्ते- सकललोकपालकोटीरकोटीमणिगण घृणिधाराराजिते इत्यर्थः- रत्नसिंहासने- रत्नखचिते सौवर्णभद्रासने "नृपासनं तु यद्भद्रासनं सिंहासनं तु तत्। हैम"मित्यमरः। "सिंहाकारमासनं सिंह इव वा आसन"मिति भानुः- सिंह प्रतिमाभिरुह्यमानमासनं सिंहासनमिति तु युक्तम्- "सिंहासने चोत्तममङ्गळानां षष्ट्योदशोनं च परं वदन्ती"त्युपक्रम्य- "चत्वारः पुरुषास्तत्र विन्यास्या भृगुनन्दन। द्विगुणाश्च तथा सिंहास्तत्र कार्या भृगूत्तमे"ति सिंहासनलक्षणकथनावसरे शान्तिसारधृत-वास्तुमञ्जरीवचनात्-लोके तथैव दर्शनाच्च-अत एव "सिंहाकृति युक्तमानस"मिति टीकासर्वस्वकृदाद्युक्तम् च संगच्छते। अनेन "तस्या आसनमानिन्ये महेन्द्रो महदद्भुत"मिति श्रीभागवतोक्तं प्रत्यभिज्ञाप्यते। मणिसरोरुहे शोभार्थं कल्पिते रत्नखचिते हेमारविन्दे "हेमाम्बुजे समासीना"मिति पाद्मोक्तेः- यद्वा- पद्मराग मणिवत्प्रकाशमाने सरोरुहे इत्यर्थः- स्थितां-आसीनां-अनेन "पद्मे स्थितां पद्मवर्णां-उन्निद्रकोकनदसद्मसदास्थितात्व"मित्यादयः प्रत्यभिज्ञाप्यन्ते- त्रिदशसुन्दरीसेवितां- तृतीया यौवनाख्या दशा सदा यासां ताः त्रिदश्यः- त्रिशब्दस्य तृतीयार्थता त्रिभागवदिति सुधायामुक्तम्- अनेन तासां नित्ययौवनत्वमुक्तम्- अत एव "रूपं बिभ्रति सौमित्रे पञ्चविंशतिवार्षिक"मिति श्रीरामायणोक्तम् संगच्छते। ताश्च तास्सुन्दर्यः "अङ्गप्रत्यङ्गकानां यत्संनिवेशो यथोचितम्। सुस्निग्धसंधिबन्धं

एतावता प्रबन्धेन- "राजाधिराजस्सर्वेषां विष्णुर्ब्रह्ममयो महा"नित्युक्तप्रकार सर्वलोकैश्वर्य धुरीण नारायण दिव्यमहिषीत्वानुगुणमहासाम्राज्य वैभवमुक्तं भवति-भवतीं "जयश्रीर्जयदा ज्ञेया- वरिष्ठा विजयाऽबीजा जयन्ती विजयप्रदे"त्युक्तरीत्या जयश्री जयदा विजयाभिख्या विख्यातामित्यर्थः- जयाय सर्वतोऽप्युत्कर्षं लब्धुम्- संततं अनारतं- चिन्तये ध्यायामि- "णिचश्चे"ति वैकल्पिकमात्मनेपदं- इदं च संततचिन्तनं न विजातीयप्रत्ययाव्यवहितानवरत भावनारूपोपायभक्त्यात्मकं- अस्य प्रबन्धकर्तुर्न्यासविद्यानिष्ठताया अत्रैव ग्रन्थे स्फुटत्वात्- किंतु फलरूपं विलक्षणानुसंधानमेव- अन्यत्सर्वमग्रे व्यक्तीकरिष्यते- यद्वा- जयायेत्यस्य सर्वेन्द्रिय जयायेत्यर्थः। संततं चिन्तये- तदेतदुक्तं लक्ष्मीतन्त्रे श्रियो देवजुष्टाना- मनिर्वचनावसरे- "सर्वशक्तिप्रदामन्तर्देवजुष्टामवस्थिताम्। शश्वन्मामनुसंचिन्त्य देवान्विजयतेऽखिला"निति। अत्र वचने देवानित्यस्य इन्द्रियाणीत्यर्थः- तेषामेव तत्र प्रकृतत्वात्। अत्र श्लोके संतत वचनं हि न निद्रादिकालेऽपि चिन्तन प्राप्त्यर्थम्- अशक्यत्वात न च शारीरशौचादिकाले- अयोग्यत्वात्- नापि स्वाध्यायादिकाले- तेनैव तदुपरोधात्- किंतु यथावसरं तत्प्राप्त्यर्थमेवेत्यवधेयम्- अत्र समृद्धिमद्वस्तुवर्णनादुदात्तमलंकारः वृत्त्यनुप्रासेन संकीर्यते- चिन्तनस्य हेतोर्जयेन हेतुमता सहवर्णनाद्धेत्वलंकारश्च पूर्वोक्तसंकरेण संसृज्यते। कल्पवृक्षादीनां मणिसरोरुहपर्यन्तानामुत्तरोत्तरोत्कर्षप्रतीतेः "उत्तरोत्तरमुत्कर्ष स्सार इत्यभिधीयत" इत्युक्तलक्षण स्सारालंकारो व्यज्यते। अत्र तृतीयपादे, स्थितां, त्रिदशेत्यत्राद्ययो स्थकारतकारयोरेकवर्गीणतया उपक्रमविवक्षितविश्रमस्थानानुप्रास नियमभङ्गाभावेन न प्रक्रमभङ्ग इति ध्येयम्। पृथ्वीवृत्तम्। लक्षणं तूक्तम्॥16॥

**मू.** **अभ्यर्णस्फुरदप्सरःकरधृतैरुद्दामदुग्धाम्बुधि-**
**स्वैरोत्सृत्वरवीचिकासहचरैस्संवीजितां चामरैः।**
**हस्तालंकृतपङ्कजा मभिनवाकल्पैरनल्पैश्शुभाम्**
**मातस्त्वामुषसि स्मरामि जगतामातङ्ककूलंकषाम्॥** **17**

**अभ्यर्णेति**। हे मातः- इदं च संबोधनं न केवलं परदेवतात्वेनैव त्वामुषसि स्मरामि- किं तु- मातृत्वेनापीत्यभिप्रायेण- यथा च स्मरति शौनकः- "ब्राह्मेमुहूर्त उत्थाय चिन्तयेदात्मनो हितम्। गुरुं विष्णुं नमस्कृत्य मातरं पितरं तथे"ति। एवं सोपाधिकमातुः- एवोषसि स्मरणीयत्वे किं पुनर्निरुपाधिकमातुस्तव स्मरणीयत्वे इति भावः-अभ्यर्णे अन्तिके

प्रकीर्णकं''मित्यमरः- ''अवयवे च प्राण्योषधिवृक्षेभ्य'' इत्यण्-तैः-उद्गतं दाम यस्मिन्कर्मणि तद्यथा स्यात्तथा उद्दाम-निर्गळं यथा तथेत्यर्थः- संवीजितां सम्यक्कृत वीजनोपचारां- उद्दाम उन्नतं यथास्यात्तथा- अभ्यर्णस्फुरदप्सरःकरधृतैरिति वा योजना- तदा- धृतैरित्यस्य गृहीतैरित्यर्थः- यद्वा- उद्दामेत्येतद्दुग्धाम्बुधि विशेषणमपि समस्तं पदं- तदा- एवमर्थः- उद्गतो दाम्नः उद्दामा ''निरादयः क्रान्ताद्यर्थे पञ्चम्ये''ति समासः- तादात्विक मन्दरगिरि विलोडनोद्वेल इत्यर्थः- इदं च वीचीनां स्वैरोत्सर्पण हेतुगर्भम्- उद्दामा चासौ दुग्धाम्बुधिश्च- तस्मादिति। अन्यत्सर्वं समानं- वीचिकाविशेषणत्वेन पाश्चात्यव्याख्यानं तु तासां स्वैरत्व विशेषणेनैव विवक्षितार्थलाभेन पौनरुक्त्यापातादनुचितम्- तस्माद्यथोक्तयोजनैव स्वारसिकी- उद्वीजितामिति पाठस्त्वनुप्राससौन्दर्यहाने रस्मानुद्वेजयति।

हस्ताभ्याम्-अलंकृते परिष्कृते-पङ्कजे पद्मे-यस्यास्तां तथोक्तां-''आभरणस्याभरणं प्रसाधनविधेः प्रसाधन विधान''मित्याद्युक्त प्रकारेण पद्मयोरपि परिष्कारिणी करश्रीः-न तु ताभ्यामपेक्षणीयः कश्चिदस्ति करयोः परिष्कार इति भावः-अनेन ''पद्मप्रिये पद्मिनि पद्महस्ते'' श्रीर्देवी पयस स्तस्मादुदृधृता धृताङ्कजे''त्यादिकं प्रत्यभिज्ञाप्यते। इदमुपलक्षणं स्वर्णपात्रमातुलङ्ग धारणस्यापि- यथोच्यते पाद्मे- ''उत्पन्ना श्रीर्महालक्ष्मी''रित्युपक्रम्य ''चतुर्भुजा विशालाक्षी पुर्णेन्दुसदृशानना। स्वर्णपात्रं मातुलङ्गं स्वर्णपद्मयुगं तथा। बिभ्राणा हस्तकमलैस्सर्वाभरण भूषितै''रिति। अनल्पैः महार्घैः- अभिनवैः प्रत्यग्रैः- आकल्पैः प्रसाधनैः ''आकल्पवेषौ नैपथ्यं प्रतिकर्म प्रसाधन''मित्यमरः। ''समुद्रः पीतकौशेयवाससी समुपाहरत्। वरुण स्स्रजं वैजयन्तीं मधुना मत्तषट्पदाम्। भूषणानि विचित्राणि विश्वकर्मा प्रजापतिः। हारं सरस्वती पद्ममजो नागाश्च कुण्डले'' इति श्रीभागवतोक्तरीत्या तदानीमेव रत्नाकराद्युपहृतत्व ज्ञापनायाभिनवै रित्युक्तम्-शुभां शोभमानां इगुपध लक्षणः कः-शु- पूजितं भातीति शुभा। तां तथोक्तामिति वा-शु इति पूजार्थकमव्ययम्-''आतश्चे''ति को वा- ''अन्येभ्योऽपी''ति डो वा-न तु तैर्विकृतसहजरामणीयकामिति भावः। यद्वा। ''अभिरूप एवाभरणेनापि शोभत'' इति न्यायेनाभरणानुरूपाभिरूप्येण शोभमानामित्यर्थः- ''मेखलादामभिश्चित्रैः अन्यैश्च शुभभूषणैः। बभासे बहुभिर्बद्धा रज्जुबद्धेव वानरी''त्युक्त-प्रकारेणानभिरूपाभि र्धृतान्यप्याभरणानि विकृतिमेवावहेयु र्न तु शोभामिति भावः-जगतां लोकानां-आतङ्काः रोगाः भयानि वा-''रुक्तापशङ्का स्वातङ्क'' इत्यमरः-तेषां-कूलंकषतीति कूलंकषा- निश्शेष विनिवर्तिनी- तां तथोक्ताम् - ''सकृद्विभाता सर्वार्तिसमुद्रपरिशोषिणी''ति

निर्झरिणी''त्यमरः- सर्वतापनिवारयित्रीमित्यर्थः- त्वां- उषसि प्रत्यूषे- सूर्योदयात्प्रागर्धप्रहरे द्वौ मुहूर्तौ। तत्राद्यो ब्राह्मः- द्वितीयो रौद्रः- तयोः पूर्वस्मिन् ब्राह्मे मुहूर्त इत्यर्थः- स्मरामि चिन्तयामि- ''ब्राह्मे मुहूर्त उत्थाय धर्मार्थावनुचिन्तयेत्। कायक्लेशांश्च तन्मूला न्वेद-तत्त्वार्थमेव चे''ति परमात्म चिन्तनस्य प्रत्यूष समयकर्तव्यतास्मरणात्- वेदतत्वार्थः परंब्रह्म नारायण एव। ''नारायणः परंब्रह्म तत्त्वं नारायणः पर'' इति श्रवणात्- कूर्मपुराणे च ''ब्राह्मे मुहूर्त उत्थाय धर्ममर्थं च चिन्तयेत्। कायक्लेशं तदुद्भूतं ध्यायीत मनसेश्वर''मिति।

अनेनैव लक्ष्म्या अपि चिन्तनीयत्व मुक्तं भवति। लक्ष्मीनारायणयो रन्योन्येनाविना-भावात्-तथाचोक्तं लक्ष्मीतन्त्रे-श्रियैव-शक्रं प्रति-''अहंता ब्रह्मणस्तस्य साहमस्मि सनातनी। आत्मा स सर्वभूताना महंभूतो हरिःस्मृतः। अहंता सर्वभूतानां साहमस्मि सनातनी। येन भावेन भवति वासुदेव स्सनातनः। भवतस्तस्य देवस्य साहंभाव इतीरिता। भवद्भावात्मकं ब्रह्म ततस्तच्छाश्वतं पदम्। भवान्नारायणो देवो भावो लक्ष्मीरहं परा। लक्ष्मीनारायणाख्यं तदतो ब्रह्म सनातनम्। अहंतया समाक्रान्तो ह्यहमर्थः प्रसिध्यति - अहमर्थ समुत्था च साहंता परिकीर्तिता। अन्योन्येनाविनाभावादन्योन्येन समन्वयात्। तादात्म्यं विद्धि संबन्धं मम नाथस्य चोभयो''रिति। ''प्रभात उत्थायेष्टदैवतं मनसा नत्वा तदह्नः कृत्यं समाचरे''दिति स्मृत्यर्थसारोक्त मप्यत्रैवानुकूलम्- जगन्मातुस्तस्या एवेष्टदैवत्वात्- श्रीभागवते च गजेन्द्रमोक्षणोपाख्याने उषसि लक्ष्म्या स्स्मरणीयत्वं भगवता स्वयमेवोक्तम्- ''ये मां त्वां च सरश्चेद''मित्युपक्रम्य ''उत्थायापररात्रान्ते प्रयतास्सुसमाहिताः। स्मरन्ति मम रूपाणि मुच्यन्ते तेंऽहसोबला''दित्यन्त ग्रन्थमध्ये- ''श्रियं देवीमुदाश्रया''मिति। तस्मिन्प्रकरणे ''क्षीरोदं मे प्रियं धामे''ति क्षीरोदस्यात्युषसि स्मर्तव्यतोक्तिरप्यत्रानुकूला क्षीरोद मध्यगताया एव श्रियोऽत्र स्मरणोक्तेः- एवं जातीयकेषु लक्ष्म्याः प्रभातसमय स्मरणविधायकेषु सत्स्वपि वचनशतेषु- गूढार्थविवरणकारैः ''उषः प्रशस्यत इत्युक्त प्रशस्तकाले स्मरामी''ति प्रयाण विषयस्मृतेरुदाहरणं शिरोभूषणधारणार्थतिथिशुद्धिप्रश्ने- ''कुर्वीत बुधसोमयो''रिति वचनोदाहरणेन तुल्यमित्युपेक्षणीयम्- जगता मातङ्क कूलंकषा मित्यनेन सर्वानिष्ट निवर्तन क्षमत्वमुक्तम्- यथोच्यते तन्नामसु- ''दारिद्र्य दुःखशमनी घोरदुर्गति नाशनी। भक्तार्तिशमनी भव्या भवभङ्गापहारिणी''ति। मातरित्यनेन प्रियहितकारिकत्वं सूचितम्- तदप्युक्तं लक्ष्मीतन्त्रे- अन्तिमाध्याये- ''प्रियं हितं च सर्वेषां चिन्तयामि करोमि च। तेन मां सर्वभूतानां मातरं योगिनो विदु''रिति। अत्र मातस्त्वामिति सार्वलौकिकः पाठ एव स्वारसिकः- उत्तरत्र मकार तकार रूप वर्णद्वयावृत्ति निबन्धनानुप्राससौष्ठवाधिक्य लाभादुक्त मातृशब्द निर्वचन-

तत्र तत्रैव प्रदर्शयिष्यते। आतङ्कपूलकवा-मित्यत्र द्वितीय व्याख्यानपक्षे- आध्यात्मिकादि-तापेषु बाह्यसंतापारोपलक्षण रूपकस्यातङ्क शब्दार्थद्वयश्लेषमूलकस्य लक्ष्म्यां नदीत्वारोपरूप रूपकहेतुकत्वा च्छ्लिष्ट परंपरित रूपकम्- वृत्त्यनुप्रास संकीर्णम्- अप्सरोगत लक्ष्मीविषयक भावस्य कविगत तद्विषयकभावं प्रत्यङ्गत्वा त्प्रेयोऽलंकारः। स च समृद्धिमद्वस्तु-वर्णनात्मकोदात्तेन वृत्त्यनुप्रासेन चैकवाचकानुप्रविष्टेन संकीर्यते। उक्तोत्प्रेक्षारूपकाभ्यां संसृज्यते च। एतेना "लंकारः पूर्वव" दिति गूढार्थविवरण-कारोक्तिस्तु तत्परिशीलनालस्य-निबन्धनेति वेदितव्यम्। पूर्वश्लोकापेक्षयात्रालंकार वैलक्षण्यस्यास्माभिः प्रदर्शितत्वात्-तेऽपि पूर्वस्मिन् श्लोके उदात्तहेत्वलंकाराविति हि व्याचख्युः- अलंकारान्तरानादरेणात्रोदात्त-मात्राभ्युपगमेऽपि पूर्व श्लोक वद्धेत्वलंकारा-दर्शनेनातिदेशायोगादित्यलम्। पूर्वश्लोकोक्तं संततचिन्तनं गोबलीवर्दन्यायेन एतत् श्लोकोक्तोषश्चिन्तनव्यतिरिक्तविषयम्। यद्वा। एतच्छ्लोकोक्त मुषश्चिन्तन मनुपदोदाहृत प्रमाणैदंपर्येण नित्यकर्तव्यतया यत् विहितं-तदित्यनुसंधेयम्- पूर्वश्लोकोक्तं संतत चिन्तनं तु "ध्यायेन्नारायणं देवं स्नानादिषु च कर्मसु। ब्रह्मलोक मवाप्नोति न चेहाजायते पुन" रिति प्रातस्स्नानादीन्प्रक्रम्य सामान्यतस्सर्वेषु कर्मसु यद्दक्षेणोक्त मनुसंधानं तदिति वेदितव्यम्- तत्र संततमित्यनेन तत्तत्कर्मकालकर्तव्यस्य चिन्तनस्य तादात्विकाविच्छेद एव दर्शितो न त्वाप्रातरासायमविच्छेदः- असूत्रयच्च भगवान् शौनकः। "हरिमेव स्मरेन्नित्यं कर्मपूर्वा परेषु चे" ति। अत्र कर्मशब्देनानवच्छेदाद्दृष्टादृष्टार्थ-सर्वकर्मसंग्रहः। अन्यदैवत्येऽपि कर्मणि तदन्तरात्मभूतो हरिरेवानुसंधेय इत्येवकाराभिप्रायः-नित्यमित्यनेन काम्यत्व नैमित्तिकत्व शङ्काव्युदासः। स्वतः प्राप्तं कर्मकाले स्मरणं चकारेण संगृह्यते। एवं शास्त्रीयेषु कर्मसु भगवदनुसंधानं नित्यमिति सिद्धम्- एतदेव रागप्राप्तेष्वप्य-वर्जनीयमिति जयाख्यसंहितायां नियमेषु पठ्यते। "शयनासनयानादावासक्तश्चापि भोजने। हृद्गतं न त्यजेद्ध्यानमानन्द फलदं हि यदि" ति। सर्वसंग्रहेण तूच्यते। "आलोढ्य सर्वशास्त्राणि विचार्य च पुनः पुनः। इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदे" ति। एतच्च नित्यत्वात्स्वरूपानुरूपानन्द फलकत्वेन स्वयं प्रयोजनत्वाच्च स्वतन्त्रप्रपत्ति शास्त्रनिष्ठैरपि दुस्त्यजम्- उक्तं चैवं स्वयं प्रयोजनत्वं नारायणमुनिभिः- "वृत्तिस्स्वामिनि दासस्य स्वरूपानुगुणा शुभा। भक्तिश्रद्धा- समायुक्ता तत्समाराधनं विदुः। किं किं न साध्यं भगवदाराधनपरैर्नरैः। वैष्णवानां विशेषेण स्वयमेतत्प्रयोजन" मिति। भगवदनुसंधान विच्छेदोऽपि पुरुषार्थहानित्वेन स्मर्यते। "यन्मुहूर्तं क्षणं वापि वासुदेवो न चिन्त्यते। सा हानि स्तन्महच्छिद्रं सा भ्रान्ति स्सा च विक्रिये" ति। हानिः पुरुषार्थहानिः- छिद्रं

युक्तमाक्रन्दितुं भृश''मिति। भिन्नवृत्तीना मन्यपराणामपि- ''व्यापृतेनापि मनसा विष्णु स्सेव्योऽन्तरान्तरा। मेथिबद्धो भ्राम्यमाणो घासग्रासं करोति गौः। इत्यादिभि र्यथावसरं क्षुत्क्षान्तिकरकर्मसमाधिना तावन्मात्रप्रयोजनत्वेन भगवत्सेवनं स्मर्यते। तदिह सिद्धोपायस्योपायं साधयतश्च भगवत्कैंकर्य मरोगस्यारोग्यार्थिनश्च क्षीरास्वादवत्स्वयं प्रयोजनमेवेत्यलम्।

यद्वा- पूर्वश्लोकोक्तं संतत चिन्तनं ''ततश्च प्रत्यहमात्मोज्जीवनायैव मनुस्मरे''दित्यादि ''भगवन्तं ध्यानयोगेन दृष्ट्वे''त्युक्तः- प्रत्यहं प्राणसंरक्षणार्थभोजनादि न्यायेनात्मोज्जीवनार्थमनन्यप्रयोजनैरपि कर्तव्यः- पूर्वरात्रानुष्ठेयो योगविशेषः- ''ईदृशः परमात्माऽयं प्रत्यगात्मा तथेदृशः। तत्संबन्धानुसंधानमिति योगः प्रकीर्तितः। योगो नामेन्द्रियै र्वश्यै र्बुद्धे र्ब्रह्मणि संस्थिति''रित्यादिना शाण्डिल्येनोक्तः- पराशरस्त्वेवमाह भगवान् ''आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः। तस्या ब्रह्मणि संयोगो योग इत्यभिधीयत'' इति। अयमेव त्वनन्य प्रयोजनस्य योगः। क्षुद्रयोगान्तराणि तु सिध्यन्तरार्थानि योगशास्त्रेषु पठ्यन्ते। अयं च योगसिद्धोपायैरपि स्वस्वकाले निवेशनीयः। योगकालानियमादैकाग्र्यानुरूपकालान्तरेऽपि कदाचि द्भवति। तत्र यामिन्यां भगवद्ध्यानस्य तु पावनत्वातिशय स्स्मर्यते। ''उपपातकयुक्तोऽपि महापातकवानपि। यामिन्याः पाद मेकन्तु ब्रह्मध्यानं समाचरे''दिति। एतच्छ्लोकोक्त स्मरणं तु ''ब्राह्मे मुहूर्त उत्थाय ध्यायन्नारायणं पर''मित्याद्युक्तप्रकारो ध्यानविशेष इति विभागः- एतत्सर्वम्- ''एवं योगो द्वयार्थानुसंधानैकाग्र्यरूप स्सर्वव्यापारोपरतिसुभगनिद्रापूर्वापरकालयो स्त त्पूर्वापररात्रेषु च युञ्जान इत्याद्युक्तावसरयुक्तयत्नलभ्य'' इति श्रीपाञ्चरात्ररक्षायां द्वितीयाधिकारे - ''एवं प्राप्तकालमपनीतनिद्रा तमस्कत्वेन सत्वस्थः प्रसन्नधीश्च भवति- तेन पूर्वयामानुसंहित मन्तःकरण चित्रभित्तिगतं विचित्रशुभाश्रयविशिष्टं ध्येयं निद्रातमोऽन्तरित-मपि तत्कालसमुन्मिषित सत्वसंधुक्षितसात्विक ज्ञानरूपप्रदीपप्रकाशेन सम्यगवलोक्यते-तत एवापररात्रयोगो निष्पद्यत''इति तृतीयाधिकारे चानुगृहीतमाचार्यैः-अन्यत्सर्वं तत्रैव विस्तरेण द्रष्टव्यम्-यद्यप्युदाहृत प्रमाणेषु सर्वत्र परब्रह्मविषयक एवोक्तो योगः-तथाऽपि- पूर्वोदाहृतैः ''अहन्ता ब्रह्मणस्तस्ये''त्यादिभिः-''अहं नारायणी देवी नारायणमनुव्रता। ज्ञानानन्दक्रियात्मानं ज्ञानानन्दक्रियामयी। तस्य मे न विनाभाव स्तेन वा तस्य वा मया। प्रकर्तुं शक्यते काले कस्मिंश्चिद्देश एव वा।'' इत्यादिभिः-''आमोदमिव पुष्पस्थं दीपस्थामिव

योरेकाधिकारिकताया स्फुटत्वेनाधिकारिभेदेन व्यवस्थाकल्पनं चायुक्तमिति दिक् ॥17॥

मू. भूयासु स्ते त्वदीया मयि हरिदयिते! स्थूललक्षाः कटाक्षा
यल्लिप्साव्यग्रभर्गाद्यमर विरचितैरञ्जलीनां प्रपञ्चैः ।
मन्थाद्रिक्षोभदुस्थं कलशजलनिधेर्मध्यमुत्सृज्य वेलां
प्राप्तै रेजे सरोजैरिव नवरजनीनायकालोकमूकैः ॥ 18

एवं श्रियमभिध्याय तत्कटाक्षानाशास्ते। भूयासुरिति। हे हरिदयिते "उत्तिष्ठ श्चिन्तय हरि"मित्युक्तप्रकारेणोषसि चिन्तनीयत्वेनोक्तस्य भगवतो वल्लभे- अनेन तदावास भूताया अस्या उषसि स्मरणीयत्वं पूर्वश्लोकोक्तं दृढीकृतम्। किंच। हरिशब्देन "उपोषितः पोषितो वा दृष्टो वा प्रणतोऽपि वा। प्रसह्य हरते पापं को न सेवेद्धरिं ततः। कोऽति भारो हरेर्नाम्नो जिह्वया परिकीर्तने। आयास स्स्मरणे कोऽस्य स्मृतो यच्छति शोभनम्। पापक्षयश्च भवति स्मरतां तमहर्निशम्। मनीषिणो हि ये केचिद्यतयो मोक्षकाङ्क्षिणः। तेषां वै च्छिन्नतृष्णानां योगक्षेमवहो हरिः। शरीरारोग्यमर्थांश्च भोगांश्चैवानुषङ्गिकान्। ददाति ध्यायिनां नित्य मपवर्गप्रदो हरिः। बद्धः परिकरस्तेन मोक्षाय गमनं प्रति। सकृदुच्चारितं येन हरिरित्यक्षर द्वय" मित्याद्युक्तं सर्वपापहरत्व सर्वमङ्गळावहत्व सर्वयोगक्षेमावहत्व शरीरारोग्यादि मोक्षपर्यन्तसकलपुरुषार्थ प्रदत्वादिकम्- तस्य दयिते इत्यनेन तदनुरूपमुक्त विध सकलकल्याणगुणाकरत्वं चास्या द्योत्यते। इदं च तत्कटाक्षाणा मवश्याशासनीयत्वाभिप्राय गर्भम्- "हरणादेव दुःखानां हरि रित्यभिधीयते। देव प्रपन्नार्तिहरे"त्याद्युक्तरीत्या प्रपन्नार्ति-हारिणो हरेर्दयितात्व कथनेन तद्वदस्या अपि दुर्वास श्शापविभ्रंशित स्वाराज्यैश्वर्य लाभार्ति प्रपन्नदैवतनिवहसकलार्तिहारित्वमपि सूच्यते। अपि च। हरिरेव दयितोऽभीप्सितो यस्यास्सेति बहुव्रीह्याश्रयणे "विलोकयन्ती निरवद्यमात्मनः पदं ध्रुवं चाव्यभिचारि सद्गुणम्। गन्धर्वयक्षामर सिद्धचारण त्रैविष्टपेयादिषु नान्वविन्दत। नूनं तपो यस्य न मन्युनिर्जयो ज्ञानं क्वचित्तस्य न सङ्गवर्जितम्। कश्चिन्महांस्तस्य न कामनिर्जयस्स ईश्वरः किं परतो व्यपाश्रयः। धर्मः क्वचित्तस्य न भूतसौहृदं त्यागः क्वचित्तस्य न मुक्तिकारणम्। वीर्यं न पुंसोऽस्त्यज वेगनिष्कृतं न हि द्वितीयो गुणसङ्गवर्जितः। क्वचिच्चिरायु र्न हि शीलमङ्गळं क्वचित्तदप्यस्ति

विमृश्याव्यामपारसद्गुण [illegible]
निरवद्यमीप्सित''मिति श्रीभागवतोक्तरीत्या प्रादुर्भावानंतर मितरेषु देवादिषु ''तस्यां चक्रु स्स्पृहां सर्वे ससुरासुर मानवाः। रूपौदार्यवयोवर्णमहिमाक्षिप्तचेतस'' इत्युक्तरीत्याऽत्मने स्पृहयमानेष्वपि स्वोचित नित्य निरवद्य निखिल कल्याणगुणवत्ताभाव मालोच्याखिल हेय प्रत्यनीकानन्त कल्याण गुणगण महोदधिं श्रीहरिमेव वृतवतीति द्योत्यते। स्थूललक्षाः महावदान्याः- पात्रलघिमप्रदेयगरिमावधीरणेन मुक्तैश्वर्यपर्यन्तपरिपूर्णसर्वविधपुरुषार्थ वितरण धुरीणाः- न तु देवतान्तर कटाक्षवन्मितंपच फलप्रदा इति भावः- अनेन- न ह्युक्त विधस्य हरेर्दयितायाःकटाक्षास्समाश्रिताभीप्सितविश्राणने क्वचिदपि कुण्ठीभवन्तीति द्योतितम्- ''स्युर्वदान्य स्थूललक्षदानशौण्डा बहुप्रदे'' इत्यमरः। ते वक्ष्यमाणरीत्या प्रसिद्धाः- त्वदीयाः त्वत्संबन्धिनः ''त्यदादीनि चे''ति वृद्धसंज्ञायां ''वृद्धाच्छ'' इति च्छः- कटाक्षाः-''आर्तत्राण व्रतिभि रमृतासार नीलाम्बुवाहै रम्भोजाना मुषसि मिषतामन्तरङ्गैरपाङ्गै'' रित्याद्युक्त प्रकाराः अपाङ्गावलोकाः- मयि- त्वदेक शरण इति भावः- भूयासुः प्रसरन्तु- भवतेराशिषि लिङ्।

कटाक्षाणामीदृश वैभवं प्रथयितुं तान्विशिनष्टि। यदिति। येषां कटाक्षाणां- लब्धुमिच्छा लिप्सा- लभतेस्सनि- ''सनिमीमे''त्यादिना इन्- ''अत्र लोपोऽभ्यासस्ये'' त्यभ्यास लोपः- तया- व्यग्रैः आकुलैः- तत्प्रेप्साहंपूर्विका विसंस्थुलैः- ''व्यग्रो व्यासक्त आकुल''इत्यमरः-भर्गादिभिः शर्वप्रमुखैः-अमरैः देवैः-ईश्वरत्वशङ्कास्पदस्य ''ईशानस्सर्वविद्याना मीश्वर स्सर्वभूताना''मित्युक्तस्येह मुख्यत्वेनोक्तिः प्रकृष्ट निदर्शनादितरेषामिन्द्रादिदिक्पालकानां तत्कटाक्षाशंसां कैमुत्यनयेन प्रथयितुं - विरचिताः- ये- अञ्जलीनां अनन्यगतिकत्व सूचक संयुक्त निकुब्ज पाणिद्वयात्मक मुद्राविशेषाणाम्- ''पाणिर्निकुब्जः प्रसृति स्तौ युतावञ्जलिः पुमान्'' इत्यमरः- ''अञ्जलीनां युतकरात्मकाना''मिति गुढार्थविवरणव्याख्यानमपि करशब्दस्य प्रसृत्यात्मककर- परतया नेयम्- यथा श्रुतार्थग्रहणे तस्याञ्जलि शब्दार्थत्वायोगात्तादृशहस्तानां विवक्षित सरोजकोश तादात्म्य संभावनासंभवाच्च- प्रपञ्चैः स्तोमैः- ''प्रपञ्चो निष्कृतौ स्तोमे रचनायां विपर्यये। प्रपञ्चस्संचयेऽपि स्या द्विस्तारे च प्रतारणे'' इति रत्नमालामेदिन्यौ- ''प्रपञ्चैर्विस्तारै''रिति गूढार्थविवरणकृतां व्याख्यानं तु विस्तारशब्दस्य धर्मवाचिताया वक्ष्यमाण सरोजकोशरूपद्रव्य तादात्म्य संभावनानौपयिकत्वादसुन्दरम्- मन्थाद्रेः मन्दरस्य- क्षोभेण विलोडनेन- दुस्थं- दुःखेन स्थीयतेऽस्मिन्निति दुस्थम्- [illegible]

प्रयोगश्च संगच्छते। ''मन्थोदधिस्तु क्षीराब्धिः क्षीरोदः कलशोदधि''रिति यादवः। केचित्तु ''अमृतकलशस्याधारतया कलशजलधि''रिति-अन्ये तु ''पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे'' इत्यादौ कचवाचक पदसमभिव्याहारे पाशादिशब्दानां कलापार्थकत्ववत्सागर वाचकपदसमभिव्याहारदशायां कलशशब्दस्य क्षीरार्थकत्व मित्याहुः- चतुर्धर नीलकण्ठस्तु आदिपर्वणि सप्तदशाध्याये ''मध्यतां कलशोदधि''रित्यस्य व्याख्यानावसरे ''कलाः पाषाणमयाः पर्वताः मैनाकादय श्शेरतोऽस्मिन्निति कलश स्समुद्रः-स चोदधिः-उदकानि धीयन्तेऽस्मिन्निति योगाज्जलसमुद्र इत्यर्थः-विशेषणं विशेष्येण बहुळमिति समासः-कलशब्दो दृषदि रूढो लाटेषु-''क्षोभ्यतां कलशस्सर्वै''रिति वाक्यशेषात्- आर्यप्रसिद्ध्यभावे म्लेच्छप्रसिद्ध्याऽप्यर्थ निर्णयाभ्युपगमा''दित्याह-केचित्त्वित्यादिना उपदर्शितेषु त्रिष्वप्येतेषु पक्षेष्वाद्यःपक्षोऽनतिहृद्योऽप्यादरणपदवी मर्हत्यधिरोढुम्-अमृतकलश संबन्धितायाः क्षीरोदे प्रसिद्धत्वात्-द्वैतीयीकस्तादृशानु शासना-दर्शनान्नाध्यास्ते प्रमाण पदवीम्- तार्तीयीक स्त्वति क्लिष्टतयाऽस्वरस एवेत्यस्मा भि रादावुप-दर्शितैवोपपत्ति स्साधीयसी-मध्यं अन्तःप्रदेशम्-उत्सृज्य विमुच्य-वेलां तीरं-''वेलाऽब्धि तीराब्धि वृद्ध्योः कालमर्यादयोरपी''ति रत्नमाला-प्राप्तैः-''जन्मभूमिरपि त्याज्या या तु सोपद्रवा भवे''दित्युक्तरीत्या विसृज्यजन्मभूमिमपि जलधिवेलां प्राप्तैरिति भावः-नवस्य तदानीमेव जातस्य-रजनीनायकस्य हिमांशोः-आलोकेन प्रकाशेन-मूकैः मुकुळितैरिति यावत्-सरोजैः अरविन्दैरिव-रेजे चकाशे-भावे लिट्-अत्र हरिदयिते इति साभिप्राय विशेष्य विन्यासरूप परिकराङ्कुरोपस्कृतः महेश्वरादि देव समाज कर्तृकाञ्जलि करणाहमहमिकारूप चरितं कटाक्षोपलक्षणतया निबद्धमित्युदात्तालंकारो द्वितीयः-महादेवादिविबुधगत लक्ष्मीकटाक्ष विषयक रतिः कविगतां तां पुष्णातीति प्रेयोऽलंकारो वृत्त्यनुप्रासश्चकवाचकानु-प्रवेशसंकीर्णाः। संकुचितत्वादिधर्मसंबन्धेन निमित्तेन गम्यमानेनामरविरचिताञ्जलि पुञ्जानां- कविप्रौढोक्ति सिद्धमन्थाद्रि क्षोभदुस्थ कलशजलधि मध्यत्यजनपूर्वकवेलाप्राप्ति नव रजनीनायकालोक मुकुळन कमलवन तादात्म्येन संभावनात्स्वरूपोत्प्रेक्षा-उक्तविषया-संकीर्णपूर्वालंकारोपस्कृता (वृत्त्यनुप्रासेनैकवाचकानुप्रविष्टेति) संकरः। स्रग्धरावृत्तम्। ''म्रभ्नैर्यानां त्रयेण त्रिमुनि यति युता स्रग्धरा कीर्तितेय''मिति लक्षणात्॥18॥

मू. अग्रे मुरारेररविन्दपीठे हरित्करीन्द्रैरभिषिच्यमानाम्।

न घटेत। अरविन्दमेव पीठं दिव्यसिंहासनम्- तस्मिन्- अनेनास्य सौन्दर्यसौगन्ध्य सौकुमार्यादिकल्याणगुणनिधेस्तस्या उपवेशानुरूपत्वं द्योतितम्- हरित्करीन्द्रैः सार्वभौमादिभि स्सार्वभौमै दिव्यैर्दिग्गजेन्द्रैः "आशाश्च हरितश्च ता" इत्यमरः-अनेनैषामस्या आभिषेचनिक क्रियाया मर्हत्तमत्वं व्यज्यते। अभिषिच्यमानां क्रियमाणदिव्याभिषेकाम्- न हि पृथग्विधाः करीन्द्रा राजमात्रमिवैनामप्यभिषेक्तुमर्हन्तीति भावः। तत्र हेतुमभिप्रयन्विशिनष्टि। अखिलेश्वरीमिति। अखिलानां प्रमाणसिद्धानां सर्वेषां चेतनाचेतनानामीश्वरो भगवान्- ईश्वर शब्दश्चात्रान्तर्नीत शेषित्वं नियन्तृत्व मभिप्रैति। "पतिं विश्वस्ये" ति विश्वशेषित्वेन निर्दिष्टस्य शेष्यन्तरविवक्षाया "मात्मेश्वर" मिति निर्देशात्- "यो लोकत्रय माविश्य बिभर्त्यव्यय ईश्वर" इत्यस्यार्थश्चैवं संगृहीतो भगवद्यामुनमुनिभिर्गीतार्थसंग्रहे। "व्यापनाद्भरणात्स्वाम्यादन्यः पञ्चदशोदित" इति। तत्र च भाष्यम्- "व्यापनभरणस्वाम्यैरर्थान्तरतये" ति। ईदृशेश्वरपत्नीत्वादिहाखिलेश्वरी मित्युक्तम्-पुंयोग लक्षणो ङीष्। अत एव "देवदेव दिव्यमहिषी" मिति भगवद्भाष्यकारैरन्वग्राहि-एतेन "पुं प्रधानेश्वरेश्वरी" ति समाख्याऽपि गतार्था। पुंप्रधानेश्वरशब्दे गोबलीवर्दन्यायेन विशेषत उक्तानां ब्रह्मादीश्वराणामपि भगवानीश्वरः "सर्वेश्वरेश्वरः कृष्ण" इत्याद्युक्तेः-यद्वा-पुंप्रधानाः पुरुषश्रेष्ठाः ये-ईश्वरा ब्रह्मादयः-तेषामपीश्वरो भगवान्-तस्य पत्नीति। अथवा। अखिलस्य कृत्स्नस्य चेतनाचेतनात्मकप्रपञ्चस्य- ईश्वरीं ईशित्रीम्- सर्वेश्वर सन्निधौ सिंहासने दिग्गजैरभिषिक्तत्वादिति भावः-अनेन "ईश्वरीं सर्वभूताना" मिति श्रुतिस्स्मारिता "ईशऐश्वर्ये" अस्मात् "अन्येभ्योऽपि दृश्यत" इति वनिप्। "नेड्वशिकृती" तीण्निषेधः- "वनोरचे" ति ङीप् रश्चान्तादेशः।

नन्वेवं रूपसिद्धावपि "ईश्वरीं सर्वभूताना" मिति श्रुतौ ईश्वरीशब्दे "स्त्रीप्रत्यये बाहुलकेन नेय" इति गद्यभाष्ये अगतिकगतिकल्पन माचार्याणां किमर्थमिति चेच्छ्रुत्यनुरोधा- दित्यवधेहि। अयमभिप्रायः। त्रिविधो हीश्वरीशब्दः- ईशधातु प्रकृतिकात् "स्फेशभासे" त्यादिना वरजन्तादीश्वरशब्दात्पुंयोग लक्षण ङीषि निष्पन्न एकः- तस्मादेव धातोः "अन्येभ्योऽपी" त्यादिना वनिबन्तात् ङीपा निष्पन्नोऽन्यः- "अशूव्याप्तौ" वित्यस्मात् "अश्नोतेराशुकर्मणी वरट्चे" त्यौणादिके वरट्प्रत्यये चकारादुपधाया ईत्वे टित्त्वलक्षण ङीपा सिद्धोऽपरः- तत्र- श्रुतिस्थ ईश्वरीशब्दो न पुंयोग लक्षण ङीषा निष्पन्नः- सर्वलोकानामिति षष्ठ्यन्वय दौर्घट्यात्- तस्यान्तोदात्तत्वाच्च- अयं तु मध्योदात्ततया श्रूयते

स्वसंकल्पमात्रावक्लुप्तजगज्जन्मस्थितिलयाम्- शरणवरणमात्रेणैवाविलम्बितं मुक्तैश्वर्य पर्यन्तसकलपुरुषार्थ दायिनीमिति वाऽर्थः। "आशुकर्म-वरदानादि क्रिया- तस्मिन्वाच्ये शीघ्रदातरीत्यर्थ" इति तत्त्वबोधिन्यादौ व्याख्यातम्- अनेनापि सर्वलोकेश्वरीत्वमेव फलिष्यति। न ह्यनीश्वर्या एवंविध व्यापारसामर्थ्यं संभवेत्- अश्नोतेर्वरटि निष्पन्नोप्ययं शब्दः- वस्तुतस्तु- आशुकर्मकर्तृत्वसंवलितैश्वर्य एव योगरूढ इति न काप्यनुपपत्तिः- तस्माच्छ्रुतिस्थ ईश्वरीशब्दो वरडंतान्ङीपा निष्पन्न एव- उणादीनां बाहुलकत्वादेव हि बाहुलकेन नेय" इत्याचार्यैरन्वग्राहि- एतेनागतिकगतिकल्पनमिति प्रत्युक्तम्- उक्तरीत्या स्वारसिक गतेरेव प्रदर्शितत्वादिति दिक्।

अत्र "भूतानामीश्वरा चास्मि प्रियेणेशेन सर्वदा। वरदा भुवनेशाना वसिता च सदाऽखिलैः। वृद्धिरावर्तमाना च क्षपणी च सदांहसाम्। ईश्वरीत्येव मे नाम तेन देवेन रूपितम्।" इति लक्ष्मीतन्त्रे श्रीसूक्त विधिनिरूपणाध्याये श्रियैवेन्द्रायोपदिष्ट मीश्वरीनाम निर्वचनं चानुसंधेयम्-अनेन "अग्रे भर्तु स्सरसिजमये भद्रपीठे निषण्णा-मम्भेराशे रधिगत सुधासंप्लवादुत्थितां त्वाम्। पुष्पासारस्थगित भुवनैः पुष्कलावर्तकाद्यैः क्लुप्तारम्भाः कनककलशैरभ्यषिञ्चन् गजेन्द्रा" इत्याचार्यश्रीसूक्तिः प्रत्यभिज्ञाप्यते- पुत्रीं तनयां- शार्ङ्गरवादित्वान्ङीन्। पुत्रशब्दोह्यत्र गणे पठ्यते। अत एव- "शैलपुत्री-पुत्रीव हर्षं हृदये करोति। कुर्वे तदुर्वीपतिपुत्रि सर्वं" इत्यादयो महाकविप्रयोगाः- न च पुत्रशब्दः कन्यायां नास्तीति भ्रमितव्यम्- "आत्मजस्तनयस्सूनु स्सुतः पुत्रस्त्रियां त्वमी। आहुर्दुहितरं सर्वे" इत्यमरसिंहोक्तेः- अत एव प्रत्ययस्थादितीत्व प्रकरणे "वा सूतका पुत्रिका बृन्दारकाणा"मिति वार्तिकं तद्भाष्यादिकं च संगच्छते। यत्त्वत्र हरदत्तेनोक्तम् "केवल पुत्रशब्द स्स्त्रियां न प्रवर्तत" इति- तद्भाष्यादिविरोधादुपेक्ष्यम्- इत्वप्रकरणस्थ स्वग्रन्थविरोधाच्च- यत्तु "शार्ङ्गरवादौ पुत्रशब्दः प्रक्षिप्तो न सांप्रदायिक" इति- तन्न- उदाहृत प्रयोगकोश विरोधात्- वा सूतकेत्यादि वार्तिके कैयट हरदत्तादि कृताकार प्रश्लेष विरोधाच्चेति मनोरमायां स्थितम्- त्वाम्- अवेक्ष्य दृष्ट्वा- सिन्धुः क्षीराब्धिः- आनन्द एव सिन्धुः- तस्मिन् - "आनन्दस्य सिन्धु"रिति पाश्चात्य व्याख्यानं तु न सम्यक्- सिन्धोरानन्दसंबन्धित्वाप्रसिद्धेः- निममज्ज नितरामापुप्लुवे" "आस्फोटयन्ति पितरः प्रनृत्यन्ति पितामहाः। वैष्णवो नः कुले जात स्स न स्संतारयिष्यती"त्याद्युक्तरीत्या- भगवद्दास्यैकरतेर्वैष्णवस्य कस्यचि त्स्वकुले जन्मनैव पितॄणां सत्यानन्दभूम्नि साक्षाद्भगवद्दयितायां सर्वलोकेश्वर्यां लक्ष्म्यामेवात्मनि कृतावतारायां सिन्धोरानन्द पारवश्यं किमाश्चर्यमिति भावः- अत्र सिन्धुरूप पृथुलाधेयादप्याधारस्यानन्द

सह दायिततमेन स्वरकळी सतांना
न खलु निजशिशूनां संनिधिर्व्रीडहेतुः ॥ 20

एवं "दिग्गजाहमपात्रस्थमादाय विमलं जलम् । स्नापयांचक्रिरे देवीं सर्वलोकमहेश्वरी"मिति विष्णुपुराणाद्युक्त प्रक्रियया श्रियो दिग्गज कर्तृकाभिषेक मभिधाय "दिव्यमाल्याम्बरधरा स्नाता भूषण भूषिता। पश्यतां सर्वदेवानां ययौ वक्षस्थलं हरे"रित्युक्त मर्थमनुसंदधान स्तस्याः श्रीनिवास वक्षस्थलारोहणं वर्णयति। प्रसभमिति। हे उदधिकन्ये क्षीरार्णवनन्दिनि - अनेन "पवित्राणां च गोविन्दः पवित्रं परमुच्यते। पावन स्सर्वभूतानां त्वमेव रघुनन्दन। पवित्राणां पवित्रं यः - शुचिर्भवति संस्मृत्य स्नातो भवति दर्शनात्। प्रणिपातेन पूतात्मा त्रयः कृष्णे महागुणा" इत्यादि परस्सहस्र प्रमाणैः परम पवित्रत्वेनोद्घुष्य-माणस्य भगवतः पुण्डरीकाक्षस्य वक्षोऽवस्थानार्हं परमपवित्रत्वम्- निखिलतृणीकारार्हं गाम्भीर्यम्- तत्रापि कन्याशब्देन वरवरणानुगुणावस्था सुभगंभावुकत्वं च व्यज्यते। "वयसि प्रथमे" इति ङीपु न भवति "कन्यायाः कनीन चे"ति निर्देशात् - दैवतानां ब्रह्मादिदेवानां देवा एव देवताः- "देवात्तल्"इति स्वार्थिकस्तल्- तत स्स्वार्थे प्रज्ञादित्वादण्- "बृन्दारका दैवतानि पुंसि वा देवता स्त्रिया"मित्यमरः- पश्यतां विलोकमानानामेव सतां- "षष्ठी चानादरे" इति भावलक्षण षष्ठी- पश्यन्ति दैवता न्यनादृत्येत्यर्थः [1]............ व्याचक्षाणां ................................ देवेषु पश्यत्स्वित्यर्थः- पश्यतो देवा ननादृत्येति वा - अनादरे षष्ठी" ति व्याचक्षते- तेषा माशयः को वा न विद्मः। केवलभाव लक्षणाभिप्रायेण प्रथमं व्याख्यानं- अनादराधिक्ये भाव लक्षणाभिप्रायेण द्वितीयमिति तदाशय इति चेत्- इदं तदाऽयोक्ष्यत- यदि पुनर्भगवान्पाणिनिः केवल भावलक्षणेऽपि षष्ठीं व्यधास्यत- स हि केवलभावलक्षणे "यस्य च भावेने"ति सप्तमीमेव विधत्ते- देवेषु पश्यत्स्विति स्वव्याख्यानस्यैव तात्पर्यप्रदर्शनं पश्यतो देवाननादृत्येत्येतदिति चेदिदं सम्यगेव- वा शब्दस्तु निरर्थकः- तस्मात्तदाशयो दुर्विज्ञान एव। त्वं- प्रसभं प्रसह्येत्यर्थः- रुजन्ति चेतः प्रसभं ममाधय" इत्यत्र घण्टापथे "उच्छिद्य विद्विष इव प्रसभ"मित्यादौ सर्वंकषायामपि मल्लिनाथे- नैवमेव व्याख्यातम्-इदं च मान्त मव्ययमिति तदभिप्रायो गम्यते।यद्वा। "प्रसभं तु बलात्कार"

---

(1) अत्र ईषदिव ग्रन्थपातः

भगवद्व्यतिरिक्तेषु सर्वेष्वप्यवद्यगन्धवैधुर्येण संतत शुभगुणपौष्कल्याभावं पर्यालोच्य ''सुमङ्गळः कश्चन काङ्क्षते न मा'' मित्युक्तरीत्या भगवत्यखिल हेय प्रत्यनीकानन्तकल्याण गुणाकरत्व सद्भावेऽपि तस्य निरपेक्षत्वाद्बलादेव तद्वरणं कृतवतीति द्योतयितुम्- परः उत्तमः- मा- यस्मात्सः परमः- स चासौ पुरुषश्च परमपुरुषः- तस्य ''सन्महत्परमे'' त्यादिना परम शब्दस्य पूर्वनिपातः- स उत्तमः पुरुषः- उत्तमः पुरुषस्त्वन्य इत्याद्युक्तस्य पुरुषोत्तमस्येत्यर्थः- वक्षः हृदयमेव पीठं भद्रासनं- आढौकथाः आटीकथाः- गतवतीत्यर्थः- आङ्पूर्वकाड्ढौक ते गत्यर्थका द्भौवादिका ल्लुङ्-अत्र पुरुष शब्देन तस्य देवदेवस्य ''वेदाहमेतं पुरुषं महान्त'' मित्युपक्रम्य ''तमेवं विद्वानमृत इहभवति- यज्ञेन यज्ञमयजन्त देवा'' इति श्रुतिप्रथितयोगि- चिन्त्यसर्वयज्ञमय दिव्यमङ्गळविग्रहवत्त्वं सूच्यते-तेन च ''का चान्या त्वामृते देवि सर्वयज्ञमयं वपुः। अध्यास्ते देवदेवस्य योगिचिन्त्यं गदाभृत'' इति श्रीविष्णुपुराणोक्तप्रक्रिययास्या अनितरसुलभपदावस्थाननिबन्धनो महोत्कर्षो व्यज्यते। किंच। परमपुरुषेत्यनेन वरणीय- लोकोत्तरवरगुणसमृद्धिस्सूचिता- प्रतिपादितं चैत दधस्ता द्विस्तरेणास्मिन्नेव स्तबके ''दातुं त्वां पुरुषोत्तमाये'' त्यत्र। अत एव सत्त्स्वपि देववाचिषु पदान्तरेषु भूयस्सु पुल्लिङ्गेषु- तेषा मपुरुषत्वज्ञापनायैव तान्यनादृत्य दैवतानामिति क्लीबतया निर्देशः कृत इति ध्येयम्- न चात्रोदाहृत कोशेन दैवत शब्दः पुल्लिङ्ग एव कुतो न स्यादिति वाच्यम्- अप्रयुक्तदोषापत्तेः। तथा च काव्यप्रकाशे। ''अप्रयुक्तं तथाम्नातमपि कविभिर्नादृत'' मिति कविभिरप्रयुक्त- शब्दप्रयोगस्य काव्यदोषतामुक्त्वा- ''यथाऽयं दारुणाचारस्सर्वथैव विभाव्यते। तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽपि वे'' त्युदाहृत्य अत्र दैवतशब्दो दैवतानि पुंसिवेत्याम्नातोऽपि न केनचि त्प्रयुज्यत इत्यभाणि- अपि च - दैवताना मित्यत्राण् प्रकृतिभूतेन देवता शब्देन ''स एव वासुदेवोऽयं साक्षात्पुरुष उच्यते। स्त्रीप्रायमितरत्सर्वं जगद्ब्रह्म पुरस्सर'' मिति श्रीविष्णुपुराणोक्तप्रक्रियया स्त्रीप्रायित्वमपि तेषां सूचितम्।

नन्वस्तु नामानादर उक्तरीत्या देवतान्तरेषु- तथाऽपि न तत्समक्षमेव निर्लज्जतया परमपुरुष वक्षःपीठ मधिरोढुमुचित मखिलेश्वर्या अप्यस्या स्सती शिरोमणेः- न हि लौकिक सार्वभौमदयिताऽपि साध्वी पश्यत्स्वेव पृथग्जनेषूत्सहते निजवल्लभमुपगूहितुम्- न च कोकाद्यनुरोधेन दैवतानां क्लीबतया तदवलोकनमस्या न लज्जा मावहतीति युक्तं वक्तुम्- सत्यामपि शास्त्रीयक्लीबतायां वस्तुसतो लौकिक पुंस्त्वस्यानपायात्-न हि लोके मित्रं कळत्र मपत्यमित्यादि शब्दैः परीक्षकोऽपि तत्र प्रत्येति लौकिक क्लीबतादिकम्- अतोऽनुचितमेव समक्षं सर्वदेवाना मस्या भगवदुरस्थलाधिरोहण मित्यत आह। सहेत्यादिना। दयिततमेन

[illegible] यदुदयादपि लज्जति भावः। संनिधिः सांनिध्यमपि- सतीनां साध्वीनामपि- व्रीडस्य लज्जायाः- हेतुः कारणं - न भवति खलु- खल्वित्येतल्लोक प्रसिद्धिं द्योतयति। तस्या स्त्रिलोकीजनन्या स्तनंधयापत्यभूतदैवतजात संनिधि र्निजदयित वक्षस्थलास्कन्दनं न प्रति बध्नीयादिति भावः। एतदभिप्रायेणैव श्रीभागवते ''तस्याश्श्रिय स्त्रिजगतो जनको जनन्या वक्षो निवास मकरोत्परमं विभूतेः। श्रीस्स्वाः प्रजास्सकरुणेन निरीक्षणेन यत्र स्थितैधयत साधिपतीं स्त्रिलोका''नित्युक्तम्- अत्र उदधिकन्ये इति विशेष्यस्योक्तरीत्या भगवद्वक्षस्थलावस्थानौपयिकपवित्रताद्यभिप्रायगर्भत्वा त्परिकराङ्कुरः- सामान्येन विशेष समर्थन रूपोऽर्थान्तर न्यासश्चेत्येतौ संसृज्यते। वृत्तम् मालिनी। ''ननमयय युतेयं मालिनी भोगिलोकै''रिति लक्षणात्।

नन्वत्र कथं व्रीडहेतुरिति- ''मन्दाक्षं ह्री स्त्रपा व्रीडा लज्जे''त्यमरसिंहेन व्रीडाशब्दस्य स्त्रीलिङ्गतयाऽनुशासनात्- न चात्राजक्षीरमित्यादाविव समासे ह्रस्वस्संभवति- तस्य ''ङ्यापोस्संज्ञाच्छन्दसोर्बहुळ''मिति संज्ञाच्छन्दसोरेव विधानात्- न हि व्रीडहेतुरित्ये तत्संज्ञेति चे च्छ्रूयताम्- व्रीडशब्दोऽत्र नपुंसक लिङ्गः- यद्यपि ''व्रीड लज्जाया''मिति दैवादिकाद्धातोः ''गुरोश्च हल'' इत्यप्रत्यये स्त्रीत्वमवश्यं भावि- उदाहृतामरकोशसांगत्यात्- तथाऽपि तत्रैव स्त्रीत्वाविवक्षायां बाहुलकत्वान्नपुंसकत्वं च। अत एव ''अविधौ गुरोः स्त्रियां बहुळ विवक्षे''ति वामनः- एवमेव ''व्रीडमसम्मुखोऽपि रमणैरपहृत वसना'' इत्यत्र संजीवन्यां मल्लिनाथेन व्याचख्ये- ननु ''मन्दाक्षं ह्री स्त्रपा व्रीडे''त्यत्र सुधायां ''घञन्तत्वेन पक्षे पुंस्त्व''मित्येतावदेव व्याख्यातम्- न तु क्लीबत्वमपीति- युक्तं चैतत्- ''घञजपाः पुंसी''ति घञन्तस्य पुल्लिङ्गता विधानात्। अत एव ''गण्डूष गर्जजागर भुजकील ज्वाल वर्तक व्रीडाः। उत्कण्ठ सटवराटक रभसास्स्त्रीत्वे तु टाभन्ता'' इति त्रिकाण्ड शेषोक्तिश्च संगच्छते। तत्कथं त्वया क्लीबतोच्यत इति चेत्- अप्रत्ययान्ततया उक्तरीत्या स्त्रीत्वावश्यं-भावेऽपि तदविवक्षायां बाहुलकत्वा न्नपुंसकत्वमपीति पूर्वमेवोक्तत्वा न्न पुनश्चोद्यावकाशः- वस्तुतस्तु- घञन्तत्वेऽपि क्लीबत्वमपीह साधु- अत एव-''क्रोडाव्रीडे स्त्रीनपुंसकयोः। स्त्री नपुंसकयोः क्रोडाव्रीडे व्रीडः पुमान्कचित्- व्रीडा व्रीडमपि स्मृतम्। व्रीडा व्रीडं तथैवापि चूडा चूडः प्रकीर्तित'' इति भागुरि विक्रम श्रीहर्षाद्यनुशासनानि संगच्छन्ते। शब्दार्थ-

---

* यद्यपि ''त्रपा व्रीडा लज्जे''ति अमरकोशात् स्त्रीलिंगव्रीडाशब्दस्यैव प्रामाणिकत्वे कथं व्रीडहेतुरिति प्रयोग इत्याशंक्य व्याख्यातृमहाभागस्य विशदसमाहितिः आवश्यकी-इत्यविवादः। अथापि प्रकृतसमास-घटित वीडशब्दप्रसाधनाय स्वाभीष्टक्लीबतानिर्धारकप्रमाण-प्रयोगप्रदर्शनेन समीहितसिद्धौ, अनपेक्षित-व्रीडशब्दपुंस्त्वाशंका तत्परिहारादिव्यर्थविस्तरोऽनुचित इति विमर्शकानां हृदि भायात्। अनपेक्षितोक्ति-

कोशरत्ने "कोपं कोपः प्रकीर्तितः। भागं भागः प्रकीर्तितः" इति। अत एव "घञ जपाः पुंसी"ति प्रायोवाद इति शाब्दिकाः- नन्वेवं सूत्रानादरेण कोशैरेव कथं लिङ्गनिर्णय इति चेत्तद्विषये शब्दानुशासनादपि महाकवि प्रयोगानुगृहीतानां कोशानामेवाभ्यर्हितत्वा-दित्यवधेहि। अत एव भगवता पतञ्जलिना "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्ये"त्यभाषि-अत एव च- शिरोधि शब्दस्य "क्यन्तोघु" रिति पुंस्त्वेऽनुशिष्टस्यापि "शिरोधिः कंधरेत्यपी"ति कोशेन "बिभ्राणमायतिमती मवृथा शिरोधिमिति माघप्रयोगेण च स्त्रीत्वमेव-अर्थनावादि शब्दानां "परवल्लिङ्गं द्वंद्व तत्पुरुषयो" रिति स्त्रीत्वावश्यंभावेऽपि "क्लीबेऽर्थनावं नावोऽर्थे" इति कोशेन क्लीबत्वमेव- विपथकापथादिशब्दानां "पथस्संख्याव्ययादे" रित्याद्यनुशासनेन क्लीबताया आवश्यकत्वेऽपि "विपथः कदद्वाका पथस्समा" इत्यादि कोशात्पुंस्त्वमेव च निर्णीयते शब्दविद्भिः।

ननु चैवं व्रीडशब्दस्य क्लीबत्वेऽपि सति त्रिकाण्डशेषेऽयं त्रिलिङ्ग्यधिकार एव पठनीयः- किमिति स्त्रीपुंसाधिकार एव पठित इति चेन्न- तावतैवास्याक्लीबत्व निर्धारणायोगात्- न हि सर्वेषामपि शब्दानां सर्वाण्यपि लिङ्गान्येकेनैवाभिधान कृताऽनुशिष्टानि दृष्टानि। नाप्येनैव कोशेन लिङ्गादिकं शक्यनिर्णयम्- विचित्रत्वाच्छब्द स्वरूपाणाम्-अन्यथा- "लाक्षालिक्षा च गण्डूषे"ति शब्दविन्मूर्धन्येनामरसिंहेनानुशिष्ट स्त्रीत्व मात्रस्यापि गण्डूषाशब्दस्य "गण्डूषो मुखपूरणम्- गण्डूषो मुखपूर्तिभ पुष्कर प्रसृताञ्जलि। गण्डूषा नापि मुखपूर्ति"रिति हलायुध रुद्रवोपालित कृतं पुंस्त्वानुशासनम्- "द्रुतसीमन्त हरित रोमन्थोद्गीथ बुद्बुदा" इति तेनैव सीमन्तशब्दस्य पुंस्त्वमात्रानुशासनेऽपि "सीमन्त मस्त्रियां स्त्रीणां केशमध्यमुदाहृतम्- सीमन्त मस्त्रियां स्त्रीणां केशमध्यस्थ पद्धति"रिति शब्दार्णव वैजयन्त्यादौ पुंनपुंसकत्वेनानुशासनम्- "वर्षोपलस्तु करक" इति तेनैव कृतेऽपि करक शब्दस्य पुंस्त्वमात्रानुशासने "करकस्तु पुमान्पक्षि विशेषे दाडिमेऽपि च। द्वयोर्मेघोपलेन स्त्रीकरङ्के च कमण्डलौ। करका च घनोपले। इति मेदिनी विश्वप्रकाशादि कोशैर्द्विलिङ्गत्वे-नानुशासनम्- त्रिकाण्डशेषेऽपि "पुंस्त्वे हाहा हूहू ग्रन्थिः पाणिः कलि र्दृति मौळिः। इति पुंस्त्व एवानुशिष्टस्य मौळिशब्दस्य "मौळिः किरीटे धम्मिल्ले चूडायामनपुंसकम्। मौळिस्संयत केशेषु चूडायां मकुटे द्वयो"रिति मेदिनी रत्नमालादि कोशैर्द्विलिङ्गतयाऽनुशासनं चेत्येवमादीनि कथं संगच्छेरन्- अत एव कोशकृच्छिरोमणिनाऽमरसिंहेनापि नामलिङ्गानुशासनान्ते "शेषं तु ज्ञेयं शिष्टप्रयोगत" इत्येवाभाणि- एवं जातीयके कोशानां मिथो विरोधे केचिदन्यतम एव पक्षपातिन स्संप्रतिपन्न बहुप्रयोगवैयग्रीं जानन्तोऽपि स्वोक्तसाधनाभिनिवेशेन मा स्म नाम

परं लज्जसे व्रीडं तन्वि विमुच्यतां महदिदं प्रेयस्युपान्तागते। इति। विशाखदत्त प्रणीते रति रहस्ये च। "मुग्धा तदा वधूस्स्याद्यदा स्मरं सुमहदभिभवे द्व्रीडम्। व्रीडस्मरौ समबलौ यदा तदा स्या द्वधूर्मध्या। मन्दं व्रीडं तादृग्यदा पुनः प्रभवता स्मरेण स्यात्। प्रौढा तदाऽम्बुजाक्षी ज्ञेया शृङ्गार तत्त्वज्ञै"रिति। तदिह व्रीड शब्दस्य क्लीबत्वे कोशानुगृहीतानन्यथासिद्ध-महाकविप्रयोग विशेषदर्शनान्ना- प्रयुक्तदोष शङ्कावकाशः- प्रत्युत पुंस्त्व एव तादृश प्रयोगादर्शनादुक्तदोषाशङ्का निदधीत पदम्। अत एव "व्रीड मसम्मुखोऽपीत्यत्र व्रीडशब्दस्य घञन्ततया पुंलिङ्गत्वेनैव स्वरसत स्संभवन्त्यामपि द्वितीयोपपत्तौ बाहुळकतामूलक क्लीबतैवाश्रिता मल्लिनाथेन। अन्यथा तत्र तादृश क्लेशाश्रयणस्य निष्प्रयोजनत्वात्। ननु च पुंस्त्वेऽपि नाप्रयुक्त दोष संभवः- "व्रीडादि वाभ्याशगतैः-व्रीडमेष्यति वधूः- व्रीडं कुम्भभुवोऽनय" दित्यादौ पुंस्त्वेनैव प्रयोगदर्शनादिति चेदीदृश प्रयोगसहस्राण्य प्यकिंचित्कराणि तस्य पुंस्त्व निर्धारणे- त्वदुदाहृत प्रयोगपरिदृश्यमानविभक्तिरूपाणां पुंलिङ्गतै कान्ततावै धुर्येणास्मदुदाहृतकोशानुरोधि क्लीबप्रयोगवदेतेषा मनन्यथा सिद्ध्ययोगात्- ननु च तादृश एव यद्युपालप्स्यत प्रयोगस्तर्हि कथमिति चेत्- "यदि कचित्पितृष्वसु *श्मश्रूणि प्रारोक्ष्यं स्तर्हि पितृव्य इत्येव ता मवक्ष्यामेति" न्यायेन न प्रत्याख्यास्यामो वयं कोशानुगृहीत महाकवि प्रयोग वशंवदाः-सति च कोशमात्रे पुंलिङ्गदैवत-शब्दवत् स्त्रीलिङ्गगण्डूषादि शब्दवच्चायमपि कोशमात्रकुटुम्बी न सर्वपथीन महाकविवचो-घण्टापथेषु निश्शङ्कं विचरितुमलमिति दिक्। अथोदाहृतेषु कोशेषु सोपपत्तिकेष्वनन्यथा-सिद्धेषु प्रयोगेष्वपि दृढपूर्वश्रुततया यद्यनाश्वासस्तर्हि "तं कथं बोधयेच्छास्त्र"मिति न्याय एवायुष्मत उत्तरमित्यलं चर्वित चर्वणेन ॥20॥

**मू. कलितकलशसागरोर्मिगङ्गं कमपि मुकुन्दमहःकळिन्दजौघम्।**
**कनकसुहृदभूषयत्तवाभाविततिरतीव रमे! सरस्वतीव ॥ 21**

अथ वक्षस्थलारोहणकालिकं श्रीशोभाया भगवच्छोभासंवलनं वर्णयन्नाह। **कलितेति।** हे रमे-कलशसागरोर्मिः क्षीराम्बुधि वीचिरेव-गङ्गा-सा कलिता येन तं तथोक्तम्- "भङ्ग स्तरङ्ग ऊर्मिर्वा स्त्रियां वीचि"रित्यमरः-कमपि-लोकप्रसिद्धयमुनाप्रवाहापेक्षया विलक्षणम्- मुकुन्दस्य भगवत श्श्रीनिवासस्य- "मेघश्यामं विशालाक्षम्- प्रबुद्ध नीलोत्पल तुल्यदर्शन" इत्याद्युक्तरीत्या श्यामलकोमलदिव्यमङ्गळविग्रहस्येति भावः। महः तेज एव-

*यदिकचिदिति-लोकोक्तिरियं आन्ध्रभाषायां प्रकृतानुगुण्येन संस्कृतेऽनूद्य प्रदर्शिता - "నా మేనత్తకి

लिङ्गसद्भावात्- अस्य च विशेषणस्य पूर्वपदार्थेनान्वये निष्प्रयोजनत्वादुत्तरपदार्थभूत-कळिन्दजौघेनान्वय एव स्वारस्याच्च- "महस्तूत्सवतेजसोः- ओघो बृन्देऽम्भसां रये" इत्युभयत्राप्यमरः- कनकसुहृत् तप्तस्वर्णसवर्णेत्यर्थः- इदं च परिष्करणार्हत्वाभिप्रायकम्-स्वभावोह्ययं कनकस्य- यत्सर्ववस्तुभूषयितृत्वं नाम- तव "हिरण्यवर्णां हरिणी" मिति श्रुतिप्रथित दिव्यवर्णाया इति भावः - आभायाः प्रभायाः - विततिः विस्तृतिः- संहतिर्वा-अतीव अतिशयेन- अभूषयत्- वज्रप्रभासंवलितां महानीलप्रभां शुद्धसुवर्णप्रभेव परिष्करोति स्मेति भावः- अत्र मुकुन्दमहसि काळिन्दीत्वारोपा द्रूपकम्- एवम्- कलितकलश-सागरोर्मिगङ्ग मित्यत्रापि-आभ्यां रूपकाभ्याम्- कनक सुहृदित्युपमोत्तेजितेन परिष्करणौपयिक त्वाभिप्रायगर्भितत्वरूपपरिकरालंकारेण च दत्तहस्ता सरस्वतीवेत्युपमेति संकरः। वृत्तमर्ध समं पुष्पिताग्राख्यं "अयुजि नयुगरेफतो यकारो युजिच नजौ जरगाश्च पुष्पिताग्रे" ति लक्षणात्। औपच्छन्दसिकं नाम वैताळीयभेदो वा। "षड्विषमेऽष्टौ समे कलास्ताश्च समे स्यु र्नो निरन्तराः। न समाऽत्र पराश्रिता कला वैताळीयेऽन्त्येरता गुरुः। पर्यन्तेर्यौ तथैव शेषमौपच्छन्दसिकं सुधीभिरुक्त" मिति लक्षणात्। अत एवोक्तं केदारेण "वदन्त्य परवक्त्राख्यं वैताळीयं विपश्चितः। पुष्पिताग्राभिधं केचिदौपच्छन्दसिकं परे" इति ॥21॥

मू. द्युनदीशिशिरं शिरः पुरारेर्भजतीन्दुर्भवती दयारससार्द्रम्।
हृदयं मुरहन्तुरब्धिजे! वामुचितैव स्थितिरुद्भवानुरूपा॥ 22

अथेदानीं सिन्धुनन्दिन्या भगवद्वक्षस्थलावस्थानौचित्यमाह। द्युनदीति। हे अब्धिजे- अनेन जनिस्थानस्य शैशिर्यं सूचितम् - इन्दुः चन्द्रः- दिवः नदी द्युनदी गङ्गा- "दिव उ"दित्युत्- तया- शिशिरं शीतलम्- "तद्वदर्थास्सुषम शिशिरो जड" इत्याद्यनुशासनाद्भेद्यलिङ्गता- पुरारेः पिनाकिनः- शिरः उत्तमाङ्गम्- भजति सेवते- भवती त्वं तु - दयैव रसः- अमृतम्- तेन- "रसो रागे विषे वीर्ये तिक्तादौ पारदे द्रवे। रेतस्यास्वादने हेम्नि निर्यासेऽमृतशब्दयो" रिति वैजयन्ती- आर्द्रं सान्द्रं "आर्द्रं सान्द्रम् क्लिन्न" मित्यमरः-मुरहन्तुः भगवत श्श्रीनिवासस्य- हृदयम् वक्षः- भजति सेवते। "शेषे प्रथम" इति प्रथम पुरुषः- वर्तमान निर्देशस्तु "बर्हिर्देव सदनं दामी" त्यादाविव भजनकालाभिप्रायः- भजनस्य सार्वकालिकताभिप्रायको वा- हृदयसंनिहितत्वाद्वक्षसो दयासान्द्रत्वोक्तिः। यद्वा। "हृदयं वक्षसि स्वान्त" इति हेमचन्द्रादिकोशेभ्यो हृदयशब्दस्य वक्षोमनोरूपोभयार्थकत्वेन श्लेषभित्तिकाभेदाध्यवसायाद्वा तथोक्तिः- "हृदयं मन" इत्यर्थवर्णनं तु "ययौ वक्षस्थलं

अतः - वां- स च त्वं च युवाम्- तयोः- युवयोस्सहजन्मनोरित्यर्थः- "त्यदादितश्शेषे पुंनपुंसकतो लिङ्गवचनानि। त्यदादीनां मिथस्सहोक्तौ यत्परं तच्छिष्यत" इति पुल्लिङ्ग युष्मच्छब्दैकशेषः- "युष्मदस्मदोष्षष्ठी चतुर्थी"त्यादिना अन्वादेशे षष्ठीद्विवचनान्तस्य युष्मच्छब्दस्य वामित्यादेशः- उद्भवानुरूपा शिशिरतर जन्म प्रदेशानुगुणा- स्थितिः शीतलतर प्रदेशावस्थानम्- उचितैव युक्तैव- उचिता स्थिति रुद्भवानुरूपैवेति वा योजना- उचितैवेति विशेषणसंगतैवकारेण सर्वथाप्यौचित्यायोगो व्यवच्छिद्यते ॥ अव्यभिचरितौचित्य शालिनीत्यर्थः- जन्मदेशवदवस्थान प्रदेशस्यापि शिशिरस्यैव लाभादौचित्यमिति भावः- अत्र द्युनदीशिशिरमित्यादि वाक्यार्थेन उद्भवानुरूप स्थित्यौचित्यस्य समर्थितत्वात्काव्य लिङ्गम्- अब्धिजे इति विशेष्यस्य जन्मस्थान शिशिरत्वाभिप्राय गर्भता रूप परिकराङ्कुरेण- द्युनदी शिशिरम्-दयारसार्द्रमिति शिरोहृदय विशेषणयोरवस्थानोचितप्रदेशत्वाभिप्रायगर्भता रूप परिकराभ्यां चाङ्गभूताभ्याम्- अनुरूपवस्तुवर्णनात्मक समालंकारेण- वर्ण्यावर्ण्ययोर्लक्ष्मी चन्द्रयोर्भजन क्रियारूप धर्मैक्यलक्षण दीपकालंकारेण च व्यतिरेक गर्भेणैकवाचकानु प्रविष्टेन संकीर्यते। वृत्तमर्धसमं वसन्तमालिकाख्यम् "विषमे ससजा गूरूपरस्तात्सभरा यश्च वसन्तमालिका स्या"दिति लक्षणात्। औपच्छन्दसिकं वा वैताळीय जातीयं वृत्तम्। लक्षणं त्ववादिष्म पूर्वस्मिन्नेव श्लोके। ननु पूर्वस्मिन् श्लोके पुष्पिताग्राया औपच्छन्दसिकेन सांकर्यमुक्तम्- कथमत्र वसन्तमालिकाया अप्युच्यते- रत्नाकरेऽपि "पुष्पिताग्राभिधं केचिदौपच्छन्दसिकं परे" इति तयोरेव सांकर्यं प्रदर्शितमिति चेत्सत्यम्- औपच्छन्दसिक लक्षणस्यात्रापि सद्भावे सांकर्यस्यानिवार्यत्वात्- अत एव तद्व्याख्यानावसरे "प्रदर्शन मिद मन्येषामपि वृत्तसंकराणा"मित्यभिधाय- भद्रविराट्- वसन्तमालिका चौपच्छन्द सिकेऽन्तर्भूते" इति गार्ग्य गोपालमिश्रोक्ति स्संगच्छते। नन्वेवमौपच्छन्दसिकेनैवोक्त वृत्तद्वयस्यापि गतार्थतया किमर्थं तदिति चेन्न- गणनियम मात्रादि नियमाभ्यां वैलक्षण्येन पृथक्पृथगास्वादनीयरचनाविशेषस्य सर्वसहृदयहृदयंगमत्वेन तदावश्यकत्वादिति दिक् ॥22॥

**मू.** **कमले! तोषयितुं त्वां कान्तभुजान्तर निशान्तमुपयान्तीम्।**
**प्रायच्छदूर्मिहस्तैः प्रत्नं रत्नगणमम्बुधिर्हरणम्॥** **23**

इति श्रीमदात्रेय वेङ्कटाध्वरि कृतिषु

"रत्नानामाकरोऽम्बुधि"रित्युक्तरीत्या सर्वरत्नाकरत्वेन कल्पद्रुम कामगवी चिन्तारत्न कौस्तुभाद्यनर्घ वस्तुवितरणानन्दित सकललोकतया महावदान्यत्वेन प्रसिद्ध इति भावः- कान्तस्य वल्लभस्य श्रीनिवासस्य- कान्तशब्देन स्वकुमारी सौकुमार्यानुगुण भोगोपचार रचना चातुर्यं द्योत्यते। यथोच्यते। "कथाभिरभिरामाभिः कामैर्भोगैश्च पुष्कलैः। उपचारैश्च रमयेद्य स्सकान्त इतीरित" इति। भुजान्तरं वक्ष एव निशान्तं मन्दिरम्- "ननाक्रोडं भुजान्तरम्- निशान्तवस्त्यसदन भवनागारमन्दिर"मिति चामरः। उपयान्तीं गच्छन्तीम्- त्वां- तोषयितुम् आनन्दयितुम्- "पितृभि र्भ्रातृभिश्चैताः पतिभि र्देवरैस्तथा। पूज्या लालयितव्याश्च बहुकल्याणमीप्सुभि"रित्युपक्रम्य- "जामयो यानि गेहानि शपन्त्य प्रतिपूजिताः। तानि कृत्याहतानीव विनश्यन्ति समन्ततः। तस्मादेतास्सदा पूज्या भूषणाच्छादनाशनैः। भूतिकामै र्नरै र्नित्यं सत्कारेषूत्सवेषु चे"ति पुत्रिकाणामन्वय व्यतिरेकाभ्यां भूषणादिभिरानन्दनावश्यकताया स्स्मरणादिति भावः। जामयः भगिनी दुहितृ स्नुषाद्याः- ऊर्मिभिः तरङ्गैरेव हस्तैः- एकेन हस्तेन द्वाभ्यां वा हस्ताभ्यां वितरणं तद्वात्सल्यौदार्य भूम्नोऽपर्याप्तमिति तत्रापरितोषात् हस्तैरिति बहुवचनं प्रयुक्तमिति ध्येयम्- प्रत्नं पुराणं "नश्च पुराणेप्रा"दिति पुराणार्थे वर्तमाना त्प्रशब्दात्स्वार्थे नप्रत्ययः। "पुराण प्रतन प्रत्न पुरातन चिरन्तना" इत्यमरः- अनेन लोकोत्तरतया उचितपात्रे विनियोक्तुम् चिरकालसंभृतत्वं द्योत्यते- रत्नानां "अत्रासंमानदं मान्यं स्थिरं भोग्यं प्रकाशकम्। महार्घं मङ्गळं रत्नं सुरक्षं सुग्रहं नृणा"मित्युक्त लक्षणानां मणीनां- गणं समूहं- रत्नशब्देन मणीनां स्निग्धतादि गुण समृद्धिर्द्योत्यते। तदुक्तं बृहत्संहितायां वराहमिहिरेण -"स्निग्धः प्रभानुलेपी स्वच्छार्चिष्मान्गुरु स्सुसंस्थानः। अन्तः प्रभ इत्येते मणिरत्न गुणा स्समस्ताना"मिति। रत्नगणं - नतु कौस्तुभवदेकमिति भावः। अनेन जामातृतोऽपि दुहितर्येव वात्सल्यातिशयो द्योत्यते। दुहितृ प्रतिपादननिबन्धनं हि जामातरि प्रेम- रत्नगणमित्यनेन स्वस्वजातिश्रेष्ठदासीदासादि पारिबर्ह समुदयमिति च व्यज्यते। रत्नं स्वजातिश्रेष्ठेऽपीत्यनुशासनात् "द्विप हय वनितादीनां सुगुण विशेषेण रत्नशब्दोऽस्तीति बृहत्संहितोक्तेश्च - अनेन उदासीनानामिन्द्रादीनामेव तत्तदभीप्सितानि वस्तूनि स्वैरं वितरतोऽस्य महोदारस्य साक्षादात्मजायां यत्किंचिद्वितरणे कथं परितुष्येन्मन इत्यभिप्रायोऽपि व्यज्यते। हरणं यौतकं नाम कन्याप्रदानसमये पुत्रिकाद्युद्देशेन दीयमानं द्रव्यम्- ह्रियत इति हरणम्- कर्मणि ल्युट्- "यौतकादिषु यद्देयं सुदायो हरणं च त"दित्यमरः- प्रायच्छत्- हरणत्वेनादादित्यर्थः- "दाण् दाने"

प्रत्न रत्नगण मम्बुधिररीण''मिति पाठान्तर परिकल्प्य- ''अथ अस्मै हरये- अम्बुधिः- प्रत्नं पुराणमपि- अरीणं- रीणो जीर्णः- स न भवतीत्यरीणो नव्यः- अनुपभुक्तः- तं रत्नगणं- प्रायच्छ''दिति व्याचख्यौ- तत्तु- अथ तच्छब्दयोर्निष्प्रयोजनत्वात्प्रसिद्धपाठपरित्यागे कारणाभावात्तदपेक्षया स्वारस्य मान्द्याच्चोपेक्ष्यम्- वृत्तं गीतिः- लक्षणं तु प्रागेवोक्तम्- यत्तु ''जघनचपला गीति''रिति तेनैवोक्तम्- तत्तु तदीयच्छन्दश्शास्त्र वैदुषी विजृम्भितम्- उत्तरार्धे गुरुद्वय मध्यग जगणात्मक द्वितीय तुरीय गणघटितताया स्तत्कल्पित पाठेऽप्यनुपलब्धेः। ''उभयार्धयोर्जकारौ द्वितीय तुर्यौ गमध्यगौ यस्याः। चपलेति नाम तस्याः प्रकीर्तितं नागराजेने''ति चपलां लक्षयित्वा ''प्राक्प्रतिपादितमर्थे प्रथमे प्रथमेतरे तु चपलायाः। लक्ष्म श्रयेत सोक्ता विशुद्धधीभि र्जघन चपले''ति हि सा लक्षिता। तस्मादस्मदुक्तमेवात्र वृत्तं युक्तमिति सिद्धम्॥23॥

जलनिधि कृतावतारान्जलजागारान्जगत्पतेर्दारान्।
कल्याणगुण गभीरान्कलये स्मेराननान्कृपाधारान्॥

श्रीवास ब्रह्मतन्त्रादिम पदकलिजिद्देशिकेन्द्रानघाङ्घ्रि
द्वंद्वाब्जानुग्रहात्त प्रतिपद विविध ग्रन्थनिर्माण शक्तिः॥
श्रीमल्लक्ष्मीसहस्रे व्यतनुत सरसे नूत्नदुर्गाधिवासी
प्रादुर्भावाभिधान स्तबक विवरणं कृष्णनामा कवीन्द्रः॥

इति श्रीमच्छ्रीशैल घनगिरि कुलतिलकस्य श्रीमत्तातार्यवर्य
द्वैतीयीक नन्दनस्य कृष्णाम्बागर्भशुक्तिमुक्ताफलस्य
श्रीमत्प्रत्यग्र दुर्ग कृष्णकविसार्वभौमस्य कृतिषु

**श्री लक्ष्मीसहस्र व्याख्यायां रत्नप्रकाशिकाख्यायां**
**प्रादुर्भावस्तबको द्वितीयः**

श्रीमन्निगमान्त महादेशिकाय नमोनमः॥
श्रीमच्छ्रीनिवास देशिकेन्द्र रङ्गनाथ ब्रह्मतन्त्र
परकाल महादेशिकेभ्यो नमः॥

## (वेङ्कटाध्वरिकृतिः - सव्याख्यानम्)

मू. श्रये शेषाचलमणे श्शार्ङ्गिणो हृदयङ्गमाम्।
अनुकम्पामिवाकम्पा मम्बा मम्बुजवासिनीम्॥ 1

शौरिवक्षोमहानीलसौध-सौवर्णपुत्रिका।
हृदादर्शे सदा पद्माऽलम्बतां प्रतिबिम्बताम्॥

एवं पूर्वस्मिन् स्तबके श्रीमहालक्ष्म्याः प्रादुर्भाव महोत्सव मभिवर्ण्य क्रमप्राप्तं तस्या श्श्रीनिवासवक्षस्थलाधिरोहणम् "प्रसभमुदधिकन्ये" इत्यादि श्लोकैरभिहितम्- संप्रत्यस्मिन् स्तबके तस्या स्तत्रैवावस्थानं विस्तरेण वर्णयिष्यन्नादौ नान्दी पद्यन्यायेन तमेवार्थं हृदयंगमामिति पदेन सूचयन् "मङ्गळादीनि मङ्गळमध्यानी"ति भगवद्भाष्यकारोक्ति मनुरुन्धान स्तद्विषयकं मङ्गळं निबध्नाति। श्रय इति। शेष एवाचलः शेषाचलः शैलतामापन्नश्शेष इत्यर्थः- तस्य- मणेः रत्नवच्छिरोभूषण भूतस्येत्यर्थः- शेषरूपत्वं चास्य गिरेरुक्तं ब्रह्माण्ड पुराणे "शेषो गतमदः पश्चा"दित्युपक्रम्य- "वरं वरय भद्रेति तेनोक्तश्शेष आह तम्। यदि प्रसन्नो भगवन्निदं मे देहि भो वरम्। यथा शेषे मदङ्गे त्वं वैकुण्ठे भुवनोत्तमे। शैलाकारे च मद्देहे नित्यमत्र वस प्रभो" इत्यादिना- एतेन "शेषाकृतेः पर्वतस्ये"ति गूढार्थविवरणव्याख्या अस्वारसिकीति वेदितव्या। मणेरित्यनेन शेषस्य स्वस्वरूपेणावस्थाने मणिसहस्रेणेव अचलत्वावस्थायामनेनैकेनैव मणिना परिष्कृतशीर्षत्वं द्योतयता भगवतो लोकोत्तररत्नमूर्धन्यत्वं द्योतितम्- शेषाचलमणेरित्यत्र मणिशब्देन मुक्ताफलं गृह्यते- फणाभृन्मूर्धनि तदुत्पत्तेः शास्त्रसिद्धत्वात्- तथाचोक्तं बृहत्संहितायां मिहिराचार्येण- "द्विपभुजग शुक्ति शंखाभ्रवेणु तिमि सूकर प्रसूतानि। मुक्ताफलानि तेषां बहुसाधु च शुक्तिजं भवती"ति- भगवतो नीलनीरदश्यामलत्वेन शैलाकृतिशेषशिरोरत्नत्वेन रूपणं च युज्यत एव- "तक्षक वासुकि कुलजाः कामगमा ये च पन्नगास्तेषाम्। स्निग्धा नीलद्युतयो भवन्ति मुक्ताः फणस्यान्ते"- इति बृहत्संहितायां नागशिरोरत्नानां नीलतोक्तेः- एवंविध रत्नत्वरूपणेन भगवत श्श्रीनिवासस्यानिष्टनिवारणेष्टप्रापणधुरीणत्वं द्योत्यते- यथोक्तं फणिमणिगुणवैभवं तत्रैव- "अपहरति *विषमलक्ष्मीं क्षपयति शत्रून्यशो विकासयति। भौजङ्गं नृपतीनां धृतमकृतार्घं विजयदं चे"ति- नृपतीनामित्येतदुपलक्षणम्- स्वांग्राहकस्य

विज्ञेय" इति। शृङ्गस्य विकारः शार्ङ्गम्- तदस्यास्तीति शार्ङ्गी- तस्य श्रीनिवासस्य- हृदयं वक्षः गच्छतीति हृदयंगमा- तां तथोक्ताम्- "प्रियवशे वदः खजि"त्यत्र "गमेस्सुपि वाच्य" इति वार्तिकेनासंज्ञायामपि गमेः खच्- "अरुर्द्विषदजन्तस्ये"ति मुमागमः- वक्षस्थलावस्थितामित्यर्थः- शेषाचल एव सकललोकमौळिमाननीयः- तस्यापि शिरोमणेर्भगवतोऽपि हृदयंगमामित्यनेन निरवधिकोऽस्या महिमोत्कर्ष इति प्रतीयते- यद्वा- मणिरेव सर्वहृदयंगमः- तस्यापि हृदयंगमत्वोक्त्या "आभरणस्याभरण"मित्याद्युक्त रीत्याऽस्यास्सौन्दर्यातिभूमा व्यज्यते- अत एव सारालंकारोऽपि व्यज्यते।

शार्ङ्गिण इत्यनेन कृतापराधचेतननिग्रहसंनद्धता-तस्यापि हृदयंगमामित्यनेन तन्निग्रह-प्रशमनसावधानता च द्योत्यते-वक्ष्यति चामुमेवार्थं "भगवतः प्रतिघ" इति षष्ठे श्लोके- अकम्पां निश्चलां- अनुकम्पां तदीयकृपामिव स्थिताम्- वस्तुतोऽवस्थिता हरेः कृपा तस्य कदाचिच्चेतनापराध दर्शनक्षुभितहृदयतया याऽवलम्बेतापि क्वचित्पारिप्लवताम्- इयं तु सर्वतोमुख मापतत्स्वपि सुदुस्सहेष्वपराधेषु न कदाचिदप्याश्रितपरित्राणे परिप्लवेतेति द्योतनायाकम्पामिति विशेषणम्- अनेनास्या आश्रितक्लेशलेशासहिष्णुकोमलतमहृदयत्वं द्योत्यते- तदेव स्थापयन्विशिनष्टि। अम्बुजवासिनीमिति। अम्बुजं जलजन्म कमलं न तु स्थलजं-तथा सति वा तत्र किंचित्कार्कश्यं क्वचित्संभाव्येतापीति भावः-तस्मिन्वसती- त्यम्बुजवासिनी-तां तथोक्ताम्-"सुप्यजातौ णिनि स्ताच्छील्ये" इति णिनिः-नन्वजातेरिति पर्युदासादिह कथं णिनिसंभवः- अम्बुजशब्दस्य जातिवाचित्वादिति चेत्- अत्रा जाताविति प्राणिजातिरेव पर्युदस्यते ताच्छील्यसमभिव्याहारात्- ब्राह्मणानामन्त्रयितेति प्रत्युदाहरणानुगुण्याच्चेत्याहुः। अतोऽत्राम्बुजशब्दस्याप्राणि जातित्वान्न काप्यनुपपत्तिः। यद्वा। "बहुलमाभीक्ष्ण्ये" इति णिनिः- आभीक्ष्ण्यं च पौनःपुन्यं नित्यत्वं च- "अभीक्ष्णं तु पौनःपुन्ये सर्वदार्थे च दृश्यत" इत्यजयानुशासनात्- अम्बुजनित्यनिवासा मित्यर्थः- अनेनापि विवक्षितं कोमलहृदयत्वमेव स्थिरीकृतम् - अकम्पानुकम्पातादात्म्य संभावनामुत्तम्भयन्विशेष्यं निर्दिशति। अम्बामिति। "पिता धर्मस्य मूर्तिस्स्यान्माता स्यात्तु कृपामयी। न मातुर्विद्यते वस्तु कृपारूपं हि किंचने"त्याद्युक्तरीत्या प्रसिद्धां मातरं श्रियम्- अनेन सर्वापराधसहिष्णुताऽपि द्योत्यते। अत एव हि स्मर्यते "माता पृथिव्या मूर्तिस्त्वि"ति सर्वंसहामूर्तित्वं मातुः- श्रये वक्ष्यमाणोपायनिष्पादनार्थ माश्रयामि। अत्र लक्ष्म्या अवधीरिताश्रितयूथापराधतया तद्रक्षणैकान्तत्वेन निमित्तेन गम्यमानेनापूर्व स्थिरकरुणा- तादात्म्येन संभावनादुक्तविषया स्वरूपोत्प्रेक्षा- अम्बामिति विशेष्यस्य विवक्षितोत्प्रेक्षा- निर्वहणाभिप्रायगर्भतारूपपरिकराङ्करेण संकीर्यते- शेषाचलमणेरिति रूपकेण संसृज्यते च

अनुकम्पामिव स्थिता''मिति गूढार्थविवरणकारा व्याचक्षते। तत्रमनःप्रियामिति वास्तवार्थ इत्युक्तिरसमीची-श्लेषस्थले प्रकृतार्थो हि वास्तवार्थ इति तत्र तत्र वर्ण्यते-न हि मनःप्रियामित्येत्प्रकृतम्- किं तु वक्षस्थितामित्येतदेव- हृदयंगमामित्यत्र श्लेषवर्णनं च न प्रयोजनवत्- किंच-उक्तरीत्या मनःप्रियामित्यस्यैव वास्तवार्थत्वे तस्यैव प्रकृतता भवेदिति वक्षस्थलावस्थानस्यैवाप्रकृततापत्तिः- इष्टापत्तिरिति चेदेतत्स्तबकप्रतिपिपादयिषित- वक्षस्थलावस्थानस्यैवात्रावश्यसूचनीयस्याभावेन विवक्षितार्थभ्रंशापत्तिः- एतेन मनोगमां चेति बुधामोदिनीव्याख्यानं च प्रत्युक्तम्- ''हृदयंगमां- अत एव- अकम्पामनुकम्पामिव स्थिता''मिति व्याख्यानमपि न सम्यक्- अकम्पानुकम्पात्वेन संभावनां प्रत्यस्मदुक्तरीत्या अवधीरिताश्रितापराधतया तद्रक्षणैकान्ततताया एव निमित्ततावर्णनस्य सहृदयहृदयाह्लादकत्वेन- हृदयंगमा-मित्यनेनाकम्पानुकम्पात्वस्य समर्थनात्काव्यलिङ्ग''मिति तदीयव्याख्यानं चास्वरसमेव वेदितव्यम्- उक्तरीत्या तस्य हेतुताया एवासुन्दरत्वात्- संभावनाया स्स्फुटत्वेऽप्युत्प्रेक्षालंकारवर्णनं च तेषामलंकारप्रदर्शनालसता निबन्धनम्- यद्यप्यत्र- शार्ङ्गिणः अकम्पामनुकम्पामिव हृदयंगमामिति योजयित्वा- हृदयंगमां वक्षस्थां मनोरमां चेत्यर्थ वर्णनेन समानधर्मतां संपाद्योपमालंकारोऽपि वर्णयितुं शक्यः- तथाऽप्यकम्पामित्यस्य तदा निष्प्रयोजनतामालोच्य तत्स्वारस्यानुरोधेनास्माभिरुत्प्रेक्षैव वर्णिता। एतेनात्रोपमालंकार इति वदन्पाश्चात्यः परास्तः- एवं व्याख्यानत्रितयेऽप्यन्यदीये अस्वारस्यानि सन्ति भूयांसि- तानि विभावनीयानि स्वयमेव मेधाविभिरिति तत्रतत्र दिङ्मात्रमेव प्रदर्श्यन्ते अस्माभिरित्यलम्॥1॥

मू. **कल्याणि दिव्यकरुणादिगुणाम्बुराशे**
**काङ्क्षाधिकाभ्युदयदायिकटाक्षलेशे।**
**भद्राय दैत्यजिदुरःकृतनित्यवासे**
**भक्तिस्थिरेण मनसा भवतीमुपासे॥** 2

अथ गुणै स्स्वरूपेण च कल्याणतां श्रियोऽनुसंदधानो निरतिशयकल्याणलाभाय तामुपास्ते। कल्याणीरिति। दिव्याः लोकोत्तरतया रमणीयाः- ''दिव्यं वल्गुलवङ्गयो''रिति हेमचन्द्रः। कल्याणा इति यावत्- करुणा- स्वार्थनिरपेक्षा परदुःख निराचिकीर्षारूपा कृपैव- आदिः- येषां- ते तथोक्ताः ज्ञानशक्त्यादय स्सौशील्य वात्सल्यादयश्च- तेषां- अम्बुराशे! आधारभूते- अनेन लक्ष्म्याममम्बुराशित्वरूपणेन तद्गुणेष्वरूपितमपि महारत्नत्वं गम्यते। तेनाम्बुधौ रत्नानामिव ''न ते वर्णयितुं शक्ता गुणान् जिह्वाऽपि वेधस'' इत्यादि विवक्षितं

''निरस्त निखिलावद्ये''ति तत्रैवोक्तेर्निर्गुणश्रुतिवदुत्सर्गापवादनयेन हेयगुणनिषेधविषय एवेति च सूच्यते। एतेनैव परिमितगुणवादोऽपि केषांचिन्निरस्तः- ''ज्ञानानन्दात्मकं रूपं ब्रह्मणो मम चोभयोः। शेषमैश्वर्यवीर्यादिज्ञान धर्मस्सनातन'' इत्युपक्रम्य- ऐश्वर्यादि गुण स्वरूपं चाभिधाय- ''इति पञ्चगुणा एते ज्ञानस्यासूतयो मताः। ज्ञानाद्याष्षड्गुणा एते षाड्गुण्यं मम तद्वपु''रिति सर्वगुणकन्दभूतेषु षट्सु गुणेष्वपि प्रधानतया प्रतिपादिते ज्ञाने ''तवानन्त गुणस्यापि षडेव प्रथमे गुणा'' इत्युक्तरीत्या षुट्सु वा गुणेषु जागरूकेष्वपि करुणाया एवात्र प्राथम्येन निर्देशस्तदभावे इतरेषां ज्ञानादीनां गुणानामपि सतां ''वृषगिरि गृहमेधिगुणा बोधबलैश्वर्यवीर्यशक्तिमुखाः। दोषा भवेयुरेते यदि नाम दये! त्वया विना भूता'' इत्युक्तरीत्या दोषतापत्ते स्स्वसत्तयैव तेषां गुणतानिर्वाहकत्वात्- सनत्कुमार संहितायां ''तथैवैका पराशक्ति श्श्रीस्तस्य करुणाश्रया। ज्ञानादिषाड्गुण्यमयी या प्रोक्ता प्रकृतिस्सदे''ति श्रीनामसहस्रान्ते ज्ञानाद्यपेक्षया प्रथममेव करुणाश्रयेति निर्देशेन करुणाया एव प्रधानतमत्वस्य गम्यमानत्वाच्च- अत एव- ''तद्गुण सारत्वात्तु तद्व्यपदेशः प्राज्ञव''दिति न्यायेन ''करुणा भक्तवत्सला- करुणां वेदमात''रमित्यादौ करुणागुण सारत्वात्करुणेति निर्देशोऽप्यस्या स्संगच्छते।

गूढार्थ विवरणे तु- कल्याणदिव्येति पठित्वा कल्याणेत्यस्य गुणविशेषणत्वमुक्तम्- ततोऽपि कल्याणीति ङ्यन्तस्य संबुद्ध्यन्ततया पाठ एव स्वच्छः- अन्यथा विशेष्याध्याहार प्रसङ्गात्- न चात्रोक्तानां विशेषणानामन्यतमस्य कस्य चिद्विशेष्यप्रतिपत्तिकरत्वम्- येन सागराम्बरारङ्गजादेरिव- ''विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्ता''विति वामनोक्तरीत्या विशेष्याध्याहारानावश्यकतोच्येत। न च कल्याणीति पाठेऽप्युक्तदोषतादवस्थ्यम्- तस्यापि विशेषणत्वतौल्यादिति वाच्यम्-''न नशिष्यति कल्याणी''-''कल्याणि त्वद्वियोगेने''त्यादि प्रयोगात् ''कल्याणी वरदा माते''ति तन्नामसहस्रे पाठाच्च तस्य विशेष्यप्रतिपत्तिकारिताया स्स्फुटत्वात्- अथैवं करुणादि कल्याणगुणवत्तानुगुणं ''चातकस्त्रिचतुरान् पयःकणान्याचते जलधरं पिपासया। सोऽपि पूरयति विश्वमम्भसा हन्त हन्त महतामुदारते''त्युक्तरीत्या महौदार्यमस्याः प्रथयन्विशिनष्टि। काङ्क्षेति। काङ्क्षाधिकं ईप्सितादप्यतिशयितं- न तु ततो न्यूनं तत्तुल्यं वा- अभ्युदयं ऐश्वर्यादिकं ददातीति काङ्क्षाधिकाभ्युदयदायी। ताच्छील्ये णिनिः-अनेनेदृशाभ्युदय दानमस्या न दाक्षिण्यनिर्बन्धादिना -किंतु स्वभावत एवेति सूचितम्-ईदृशः-कटाक्षलेशः अपाङ्गदर्शनलवः-यस्याः-तस्यास्संबुद्धिः-एतादृशाभ्युदय-

प्याश्रितविषये तत्प्रातिकूल्यादि दर्शनेन कदाचिदशुभनिराकरणपूर्वककल्याणप्रापणान [illegible]
संकल्पादिषूपेक्षायां सोऽप्य किंचित्कर एव स्यादित्यतः पुनस्तां विशिनष्टि। भद्रा[illegible]
भद्राय-अनादिकालोपचित प्रातिकूल्यानां घुणाक्षरनयेनाप्यनालोचितानुकूल्यानां [illegible]
नृपाशानामपि भगवदाभि-मुख्यसंपादनप्रभृति शाश्वतैश्वर्यपर्यन्तसर्व[illegible]
निर्वर्तयितुमेव- न तु प्रयोजनान्तरापेक्षयेति भावः। ''क्रियार्थे''त्यादिना चतुर्थी। [illegible]
भगवत श्श्रीनिवासस्य- अनेन तस्य प्रातिकूल्यैकतानेषु क्रोधोष्मळतया दुरासदत्वं [illegible]।
उरसि वक्षसि-कृतः-नित्यनिवासः अनारतस्थितिः-यया-तस्यास्संबुद्धिः-[illegible]
निवासे तत्तत्समयापतच्चेतनापराधानुगुणोदश्चद्भगवन्निग्रहप्रशमनपूर्वक तदनु[illegible]
मशक्य मन्यैरिति तेषां तत्संपादयितुं ससंकल्पं तत्रैव नित्यनिवासं कृतवती[illegible] भा[illegible]।

एवं- ''नित्यनिर्दोषनिस्सीम कल्याणगुणशालिनी। अहं नारायणी नाम [illegible] वैष्णवी परे''ति लक्ष्मीतन्त्रोक्तरीत्या गुणतः कल्याणत्वं विशेषणैः प्रतिपा[illegible] तस्याः कल्याणत्वमभिप्रयन्विशेष्यं निर्दिशति। कल्याणीति।हे कल्याणि। नि[illegible] स्वरूपे मङ्गळदेवते-कल्याण शब्दस्य बह्वादिषु पाठान्ङीष्। यथोच्यते [illegible] ''महालक्ष्मीस्समाख्याता साहं सर्वाङ्ग सुन्दरी''त्युपक्रम्यात्मनो भद्रानाम [illegible] ''कल्याणरूपा भद्रास्मी''ति। एतेन ध्यानानुगुण निरतिशय शुभाश्रयत्वं [illegible] एवंविधां त्वां-भद्रायेत्येतदत्रा प्यनुषज्यते। मुक्तैश्वर्यपर्यन्तनिरव[illegible] मित्यर्थः। ''रसग्ह्येवायं लब्ध्वाऽनन्दी भवती''त्युक्तप्रकारेण ब्रह्मणो निरतिश[illegible] जीवान्प्रत्यानन्दयितृत्व वत्तवापि निरतिशयकल्याणत्वादेवोपासीनान्प्रति [illegible] दिति भावः। भिक्षाको हि पुष्कलधनमीशितारमेवाश्रयति स्वाभीप्सित [illegible] स्वतुल्ययोगक्षेमं भिक्षाकान्तरम्-भक्तिस्थिरेण-यद्यपि भक्तिर्नाम ध्यानोपासनादि[illegible] अहरहरभ्यासाधेयातिशया आप्रयाणादनुवर्तमाना विवेकादिसाधनसा[illegible] तैलधारावदविच्छिन्नस्मृति संतानरूपा प्रीत्यात्मिका प्रत्यक्षतापन्ना ध्रुवानुस्मृति[illegible] नेह सा विवक्षिता-उपासे इति तस्याः पृथगुक्तेः-एकस्या एव मनस्स्थैर्यसा[illegible] योगाच्च। किंतु- ''नाथ योनिसहस्रेषु येषु येषु व्रजाम्यहम्। तेषु तेष्वच्युता [illegible] सदा त्वयि। या प्रीतिरविवेकानां विषयेष्वनपायिनी त्वामनुस्मरतस्सा मे [illegible]'' इति निदर्शिता विषयस्वभावनिबन्धना निरतिशयप्रीतिरनुरागापर[illegible] ''[illegible] त्वच्चरणारुणाम्बुजद्वयानुरागामृतसिन्धुशीकर'' इत्यादावुक्ता-तया-[illegible]

श्लोके स्फुटत्वात् - किंतु फलभक्त्यात्मकम्।

न चेदमुपासनमुपायभक्त्यात्मकमेवास्तु-अग्रिमश्लोक वक्ष्यमाणा प्रपत्तिरङ्गप्रपत्तिरेव किं न स्यादिति प्रत्यवस्थातव्यम्-शरणागति स्तबके "कर्माहृतिर्मति रुपास्तिरिति प्रतीतैर्मुक्तो मुरान्तकविलासिनि मुक्त्युपायैः। अस्मादृश स्तव जगत्यनुकम्पनीय" इत्यादौ ग्रन्थकृता स्वस्य स्वतन्त्रप्रपदननिष्ठताया एव स्फुटीकरिष्यमाणत्वात्। यद्वा। भक्तिस्थिरेणेत्यत्र भक्तिशब्देनैव फलभूत भक्तिर्विवक्षिता। अनन्यप्रयोजनप्रपन्नाधिकारिणोऽपि फलभक्ते-रवश्याश्रयणीयताया श्रीपाञ्चरात्ररक्षायामाचार्यैरनुगृहीतत्वात्। तया भक्त्या स्थिरेण-मनसा-उपासे वरिवस्यामि- शुश्रूष इत्यर्थः-"वरिवस्या तु शुश्रूषा परिचर्याऽप्युपासन"मित्यमरः। अथवा। भक्तिशब्देनात्र- "मद्भक्तजन वात्सल्यं पूजायां चानुमोदनम्। स्वयमभ्यर्चनं चैव मदर्थे दम्भवर्जनम्। मत्कथाश्रवणे भक्तिस्स्वरनेत्राङ्ग विक्रिया। ममानुस्मरणं नित्यं यच्च मां नोपजीवति। एवमष्टविधाभक्ति"रिति भगवता महावराहेणागस्त्यायोक्तम् भक्त्यङ्गकर्मजातं लक्ष्यते- अङ्गेष्वङ्गिवाचकशब्द औपचारिकः- तया- स्थिरेण- "अभ्यासेन च कौन्तेय वैराग्येण च गृह्यते" इत्याद्युक्तरीत्या विषयेभ्यः प्रत्याहृत्य त्वदेकाग्रीकृतेनेति भावः- उपासे ध्यायामि। भक्तिस्थिरेण मनसेत्यनेन "मनसातु विशुद्धेने"त्यादिकं स्मारितम्- इतरे त्रयोऽपि व्याख्यातारो "भक्त्या स्थिरेण मनसा उपासे ध्यायामीत्येतावदेव व्यवृण्वन्- नतु भक्त्युपास्त्योरर्थः क इति व्यवेचयन्।

यद्वा। अनन्तरवक्ष्यमाणस्तबकद्वयार्थ-मप्युपक्षिपन्प्रस्तुत स्तबक विवक्षितार्थं च संगृह्णान श्श्रियमुपास्ते। कल्याणीति। अस्मिन्पक्षे पुराणवृत्तान्तानुरोधेन विशेषणानां पूर्वयोजनापेक्षया किंचिद्वैपरीत्यं द्रष्टव्यम्-तथाहि-भद्राय-"मद्दत्ता भवता यस्मात्क्षिप्ता माला महीतले। तस्मात्प्रणष्टलक्ष्मीकं त्रैलोक्यं ते भविष्यती"ति दुर्वासश्शापेन "ततः प्रभृति निश्श्रीकं सशक्रं भुवनत्रयम्। मैत्रेयासी दपध्वस्तं संक्षीणौषधिवीरुधमिति। स विलोक्येन्द्र-वाय्वादीन्निस्सत्वान्विगतप्रभान्। लोकानमङ्गळप्रायानिति चोक्तरीत्या परिम्लानमङ्गळानां जगतां कल्याणं विधातुम् - दैत्यजित् भगवान्- अनेन "त्वामार्तश्शरणं विष्णो प्रयाता दैत्य निर्जिताः। वयं प्रसीद सर्वात्मंस्तेजसाऽप्याययस्व नः" इति दुर्वासश्शापानन्तरं दैत्यनिर्जितैर्देवैः प्रर्थिततया "तेजसो भवतां देवाः करिष्याम्युपबृंहण"मिति प्रतिज्ञाय दैत्यनिर्जयाय स्वतेजसा देवतेजसा माप्यायनं कृतवानिति द्योत्यते-तस्योरसि कृतनित्यवासे-अनेनैवं देवतेजांस्युप बृंहयितु मुद्यतस्य स्वभर्तुः प्रोत्साहनायैव तदुरसि सन्ततावस्थिति मुपगतवतीति सूचितम्-प्रसिध्यति हि भगवत्तेजोबलैश्वर्याद्युपबृंहकत्वं श्रियः-यथोच्यते

परिबृंहितम्। तस्य शक्तिश्च का नाम यया बृंहितमुच्यत'' इति नारदपृष्टेनाहिर्बुध्न्येन-''एवं भगवतस्तस्य परस्य ब्रह्मणो मुने। सर्वभावानुगा शक्तिर्ज्योत्स्नेव हिमदीधितेः। भावाभावानुगा तस्य सर्वकार्यकरी विभो'' रित्युपक्रम्य- ''जगत्तयालक्ष्यमाणा सा लक्ष्मीरिति गद्यत'' इत्युक्तम्- आख्यायते हीयं स्वयमपि। ''दैत्यदानवमर्दिनी''ति तन्नामसु। लक्ष्मीतन्त्रे- स्वासाधारण-विभूति विशेषद्वारा दैत्यनिरासं विस्तरेणाभिधायोच्यते च- ''इत्थं यदा यदा बाधा दानवोत्था भविष्यति। तदा तदाऽवतीर्याहं हनिष्यामि महासुरा''निति। अतोऽस्या दैत्यजयाय भगवत्तेजोबलाद्युपबृंहकत्वं कैमुतिकन्यायेनापि सिद्धम्- एनं ''ततोऽवलोकिता'' देवा इतिश्लोकोक्तेऽर्थे ''हरिवक्षस्थलस्थये''त्यंश उक्तः-अथ ''ततोऽवलोकिता'' इत्यंशं वर्णयिष्यंस्तत्र च ''श्रीस्स्वाः प्रजाः सकरुणेन निरीक्षणेने''ति श्रीभागवते निरीक्षणस्य करुणासहकृतत्वोक्त्या आदौ करुणागुण समृद्धिमभिप्रयन्विशिनष्टि। दिव्यकरुणेति। अथ- ''अवलोकिताः- परां निर्वृतिमागता'' इत्येतमंशमभिप्रयन्विशिनष्टि। काङ्क्षाधिकेति। उक्तोऽर्थः। अन्यत्सर्वं तुल्यम्।

अनेन विशेषणद्वयेन कारुण्यकटाक्षवर्णनपरेण तुरीय- पञ्चमस्तबकार्थस्सूचितः-अत एव मुद्रालङ्कारोऽपि। अस्मिन्पक्षे विशेषणानां विवक्षितार्थ वैपरीत्येन पाठस्तु- ''श्रीस्स्वाः प्रजास्सकरुणेन निरीक्षणेन यत्रस्थिते''ति पूर्वोदाहृत श्रीभागवतश्लोकपाठानुरोधात्प्रास-लोभाद्वेति ध्येयम्। अत्र प्राथमिकव्याख्यानपक्षे दिव्यकरुणादीत्यस्य काङ्क्षाधिकाभ्युदयेत्यादि विशेषणं प्रति- तस्य च भद्रायेत्यादि विशेषणं प्रति च हेतुत्वात्काव्यलिङ्गद्वयमङ्गाङ्गिभावेन संकीर्णम्-कल्याणीति विशेष्यस्याश्रितनिरतिशयकल्याणवितरणधुरीणताभिप्रायगर्भत्वा त्परिकराङ्कुरः। स्वकर्तृकोपासनरूपवाक्यार्थस्य पूर्वोक्तकाव्यलिङ्गद्वयपरिकराङ्कुररूपानेक पदार्थहेतुकत्वादन्यत्काव्यलिङ्गम्- भद्रायेति फलस्य- भगवदुरःकृतनित्यनिवासत्वस्य हेतोः- एवमुपासनरूपहेतोश्च सहभावेन वर्णनाद्धेत्वलंकारद्वयं वृत्त्यनुप्रास श्चेत्येतान्येकवाचकानुप्रविष्टतया संकीर्यन्ते- एवं द्वितीयव्याख्यायामप्यूह्यम्- भावध्वनि रत्रोत्तरश्लोके च पूर्ववदेव। गूढार्थ विवरणे तु- ''अत्र संबोधनानां मोक्षदान सामर्थ्याभिप्राय गर्भत्वात्परिकरः परिकराङ्कुरोवाऽलंकार'' इति व्याख्यातम्- तत्र संबोधनाना मित्युक्तिरेव प्रथममयुक्ता- तेषामेक वचनान्ततया संबुध्यन्तानामिति हि युक्तम् वक्तुम्- ''एकवचनं संबुद्धि''रित्यनुशासनात्- आस्तां तावदिदमन्यद्विचारयामः- परिकर परिकराङ्कुरयोर्विकल्पम् वदतां भवतां किममूनि सर्वाण्यपि संबुध्यन्तानि पदानि विशेषणरूपाणीत्यभिप्रायः- उत तत्रान्यतमस्य विशेष्यत्वमिति- सर्वेषामपि विशेषणत्वे परिकर एव स्यान्नतु परिकराङ्कुरः-

प्रतिपत्तिकरत्वायोगात्- एतच्च पूर्वमेवोक्तम्- अतो नात्रोक्तरीत्या अलंकारद्वयविकल्प लेखन युक्तम्- ननु कल्याणीति साभिप्रायविशेष्यसद्भावात्परिकराङ्कुरालंकारलेखनमपि युज्यत एवेत चेन्न- कल्याणदिव्यकरुणादीत्येव हि भवतां पाठः- "कल्याणाः सुखकराः- दिव्याः अत्यद्भुताः- ये- करुणादिगुणाः" इति भवद्भिर्व्याख्यातत्वात्- अथ तादृशाभिप्रायक किंचिद्विशेष्याध्याहाराभिसंधिना परिकराङ्कुरलेखनं युक्तमिति चेत्किमनेनाजातपुत्र-नामकरणेन- अभ्युपगमेप्युक्तालंकारयोस्समुच्चय एव स्यान्नतु भवदभीप्सितो विकल्पः- अस्मदुक्तरीत्या जागरूकेष्वपि बहुष्वलंकारेषुताननादृत्य स्वकीयपाठेऽप्यविद्यमानस्य कस्यचिदलंकारस्य लेखनं कथंतमां रोचते वा भवन्मनसे? भवन्त एव तद्विदांकुर्वन्ति- इत्यलम्। एतत्प्रभृति श्लोकचतुष्टयम् वसन्ततिलका॥2॥

**मू.** **नाळीकसंभवभवादिसुराभिवाद्ये**
**नानाविधाकृतकवाङ्मयमौळिवेद्ये।**
**पाथोधिपुत्रि पतिवक्षसि नित्यहृद्ये**
**भान्तीमनन्यशरणो भवतीं प्रपद्ये॥** 3

अथात्मन श्श्रीचरणारविन्दशरणागतिं संग्रहेण दर्शयति। तावत्कुतस्तव मदुपासनायामेव निर्बन्धः- "एतौ द्वौ विबुधश्रेष्ठा"विति प्रसिद्धोत्कर्षौ विधिहरावुपास्वेत्यत्र त्वद्दासतया तयोरपि श्रैष्ठ्यं वाय्वन्तरिक्षाद्यमृतत्ववदापेक्षिकमेव- न तु निरतिशय मित्यभि प्रयंस्तां विशिनष्टि। नाळीकेति। नाळीकं पद्मम्- "नाळीकं शरखण्डेऽब्जे नाळीकश्शर शल्ययो"रिति विश्वः। तस्मिन् संभव उत्पत्तिर्यस्य सः- संभवतीति संभवः पचाद्यच्- नाळीके संभव इति वा- चतुर्मुख इत्यर्थः- भवश्शंकरः- तावेवादिर्येषां ते तथोक्ताः- ये- सुराः देवाः- अनेन- "ततस्तेजोमयं दिव्यं पद्मं सृष्टं स्वयंभुवा। तस्मात्पद्मात्समभवद् ब्रह्मा वेदमयो निधिः। यत्तत्पद्म मभूत्पूर्वं तत्र ब्रह्मा व्यजायत। ब्रह्मणश्चापि संभूतश्शिव इत्यवधार्यताम्। शिवात्स्कन्द स्समभवदेतत्सृष्टिचतुष्टय"मिति भृगुभरद्वाजसुपर्णवैकुण्ठ संवादाद्युक्तरीत्या ब्रह्मरुद्रयोरपि भगवत्प्रभवत्वेना नीश्वरतया सर्वसंप्रतिपन्नैर्देवान्तरैरैकराश्येन निर्देशाच्चानीश्वरत्वम्- तत एव तच्छ्रैष्ठ्यस्य तत्र तत्रोच्यमानस्य सावधिकत्वं च द्योत्यते। तैः अभिवाद्ये- "अभिवादात्परं विप्रो ज्यायांस मभिवादयन्। असौ नामहमस्मीति स्वं नाम परिकीर्तयेत्। भो श्शब्दं कीर्तये दन्ते स्वस्य नाम्नोऽभिवादने। नाम्नां स्वरूपभावो हि भो भावऋषिभिस्स्मृतः। व्यत्यस्य पाणिना कार्य मुपसंग्रहणं गुरोः। सव्येन सव्यस्स्प्रष्टव्यो

पत्न्यश्चोप संग्राह्या'' इतिच स्मृत्यर्थसारे प्रोक्तम्-एतेन स्त्रियो नोपसंग्राह्या इत्युक्तिः परास्ता- ''समे तु पादग्रहणमभिवादनमित्युभे''इत्यमरः। अभिपूर्वकाद्वदेर्णिजन्तात् ''ऋहलोर्ण्य'' दिति कर्मणि ण्यत्-अनेन ''उन्निद्रकोकनदजातगृहीतपादे'' इति विष्णुस्मृत्युक्तं प्रत्यभिज्ञाप्यते- एतेनात्र ''ज्यायानपि कनीयांसं संध्यायामभिवादयेदिति मनुस्मरण''मिति गूढार्थ विवरणकारै रुदाहृतं प्रमाणं प्रकृतानुपयोगादुषसि स्मरामीत्यत्र ''उषः प्रशस्यत'' इति तदुदाहृतवचनतुल्ययोगक्षेममेवेति ध्येयम्- यदि लक्ष्मीः कनीयस्यपि ज्येष्ठैर्ब्रह्मादिभि-स्सन्ध्यायामुपसंगृहीतेति कवेस्स्याद्विवक्षितं तदा ''ज्यायानपी''ति मानवं वचनं स्यादुदाहर्तव्यम्-न हि लक्ष्मीः कनीयसी ब्रह्मादिभ्यो न च ते ज्यायांसो लक्ष्म्याः- नाप्यत्रोच्यमान मभिवादनं सान्ध्यम्-अतो नात्र तदुदाहृत वचन संगतिः।

अत्र भवशब्दस्याल्पाच्तरत्वा त्पूर्वनिपातावश्यंभावेऽपि नाळीकसंभवस्याभ्य-र्हितत्वात् ''अभ्यर्हितं पूर्व''मिति पूर्वनिपातः कृतः ''वासुदेवार्जुनाभ्यां वुन्''ति निर्देशेनेदं ज्ञाप्यत इति चतुर्थे भाष्यम्-''अल्पाच्तरं- अजाद्यदन्त''मिति सूत्राभ्यामर्जुनशब्दस्य पूर्वनिपाते प्राप्ते तमकुर्वन् ज्ञापयति सर्वतोऽभ्यर्हितं पूर्वमितीति तत्रैवोक्तम्-अयमेव साधीयान्पाठः- सुराभिवन्द्ये इति तूत्तरपादत्रयान्त्यवर्णानां नकाराघटिततया अननुरूपः- ननु तर्हि मम वा कथमीश्वरत्वं वेत्सि-येन मामेवाश्रयेथा इत्यत आह। नानेति। नानाविधानि ऋगादिबहुप्रकारवन्ति-अकृतकानि अकृत्रिमाणि-वाङ्मयानि प्रबन्धाः-वाचां विकाराः वाङ्मयानीति विग्रहः-''नित्यं वृद्धशरादिभ्य'' इति सूत्रे ''एकाचो नित्य''मिति मूलोक्ते र्विकारार्थे नित्यं मयट्-आरम्भसामर्थ्यादिव नित्यत्वे सिद्धे ''नित्यं वृद्धे''ति नित्यग्रहणं योगाविभागादन्यत्रापि क्वचिद्विधानार्थं-तेनैतल्लभ्यत इति तदाशय इत्याहुः- गूढार्थविवरण-कारास्तु-वाङ्मयेत्यत्र''एकाचो नित्यं मयटमिच्छन्ती''ति''स्वार्थे मयडि''त्याहुः- तच्चिन्त्यम्-वस्तुतस्तु-भाष्ये स्वार्थे ईदृशानुशासनादर्शनादभ्युपगमेऽपि-''अनुगादिनिष्ठ'' गित्यादिनित्यविहित स्वार्थिकठगादिक मन्तरेणानुगादिन्नादि शब्दानामिवैकाचां वागादि-शब्दानां केवलानां कदाऽपि प्रयोगानापत्तेरस्मदुक्तरीत्या वैकारिकमयडेव युक्तः-तेषां मौळिभिश्शिरोभिः-वेदान्तैरित्यर्थः-वेद्या-ज्ञातव्या-तस्यास्संबुद्धिः-''ईश्वरीग्ं सर्वभूतानां'' इत्यादिवेदान्तवाक्यैरेव त्वदीश्वरत्वं वेद्मीति भावः-नन्वेवमपि ''एष सर्वेश्वर एष भूताधिपति''रित्यादि श्रुतपारमैश्वर्यो भगवानेवाश्रीयतां किं मदाश्रयेण-ममापि ह्यैश्वर्यं तत्पत्नीत्वादेवेत्यत्र ''यद्यपि तदैश्वर्यपारम्यं तादृगेव-तथाऽपि-न वयं नापराध्येम-न च स तदनुगुणमदत्वा दण्डमवतिष्ठेत-ततो दुष्करमुद्यतदण्डतया दुराराधस्य तस्याश्रयणम्- त्वं तु

भवादृशापराधपरंपरादर्शनेनाहं वा कथं नाम न क्षुभ्येयमित्यतस्संबोधयति। पाथोधिपुत्रीति। अनेन सत्यपि क्षोभकारणेऽक्षुभितत्वरूपं गाम्भीर्यं द्योतयता मादृशापराधान् स्वयमगणयित्वा स्वकान्तं क्षुभ्यन्तं प्रसादयसीति द्योत्यते।

अस्तुनामैवमेव- अथापि मम नित्यतत्सांनिध्य दौर्लभ्यात्कथं तत्प्रसादनं सुशकमित्यत आह। पतिवक्षसि भान्तीमिति। "नित्यैवैषा जगन्माता विष्णो श्रीरनपायिनी। अन्येषु चावतारेषु विष्णोश्श्रीरनपायिनी। भगवद्वासुदेवस्य नित्यैवैषाऽनपायिनी" त्याद्युक्तरीत्या स्ववल्लभस्य श्रीनिवासस्योरस्यनारतमाश्रित रक्षण निर्निद्रतया देदीप्यमानाम्- अनेन निरतिशयवाल्लभ्यं द्योतयता तत्प्रसादनं भवत्यास्सुशकमेवेति द्योत्यते। भवतीं त्वामेव-त्वां विना मम न कश्चिच्छरणमिति भावः-तदेवाह-अनन्यशरण इति-अन्य श्शरण मुपायो यस्य न भवति सोऽनन्यशरणः-तथाविध स्सन्-त्वदेकोपायसंवित्ति स्सन्नित्यर्थः- "उपाये गृहरक्षित्रोश्शब्दश्शरण मित्ययम्। वर्तते सांप्रतं चैष उपायार्थैकवाचकः इत्याहिर्बुध्न्येन व्यवस्थापितत्वादिह शरणशब्दः उपायवाचीति ध्येयम्। प्रपद्ये शरणं व्रजामि- वर्तमाननिर्देशो "बर्हिर्देव सदनं दामी" त्यादाविवानुष्ठान कालाभिप्रायकः-यद्वा। नित्यहृद्ये इत्येतत्सप्तम्यन्तं पतिवक्षसीत्यस्य विशेषणम्- तदा एवमर्थः- यद्यपि भगवदैश्वर्य मनवधिकमेव-स एव चाश्रयणीयः-अथापि मदपराधविमर्श-क्षुभितहृदयोऽवश्यमेव मां दण्डयेत्-त्वं तु सत्यपि तादृशे कारणे न क्षुभ्यस्येवेत्यभिप्रय न्विशेष्यं निर्दिशति। पाथोधि-पुत्रीति। सत्यमेवं तथाऽपि किं मया शक्यं विधातुं सर्वेश्वरेश्वरे तस्मिन् दण्डधरे सतीत्यत आह। नित्यहृद्ये पतिवक्षसि भान्तीमिति। नित्यहृद्ये- अनारत मुपगूहनादिविलासविश्राणनेन तवाश्रान्त मनोहरतमे- पतिवक्षसि- नहि कदाचिदपि तव तत्क्रोधोष्मळता गोचरीभवितु मेवार्हतीति भावः-भान्तीम्-निरतिशय वाल्लभ्येन तं वशीकृत्य "ज्वलन्तीं तृप्ता" मित्युक्त-रीत्या देदीप्यमानाम्-अनेन तदीय चित्तकालुष्य शमनं तवाकिंचित्करमिति द्योतितम्- अन्यत्सर्वं तुल्यम्- अत्र गुढार्थ विवरणकारै "श्शरणमिति शेष" इत्युक्तम्-तन्नात्यन्त हृदयंगमम्-प्रपद्ये इत्यनेनैव शरणागति रूपार्थस्योक्तत्वेन तदध्याहारस्या नावश्यकत्वात्- यद्यपि प्रपद्य इत्यत्र गत्यर्थेन धातुना बुद्ध्यर्थेन सता प्रपूर्वकेणाध्यवसायमात्र मुपस्थाप्यते- तथाऽपि- "तदेकोपायता याच्ञा प्रपत्तिश्शरणागतिः- प्रपत्तिं संश्रयेद्भक्त्या शरणागति लक्षणा" मित्यादि प्रमाणैश्शरणागति प्रपत्तिशब्दयो-रैकार्थ्यस्य निर्णीतत्वात्प्रार्थ-नाद्यन्वितभरन्यासस्यैव "प्रपद्ये" शब्दार्थत्वान्नेह तदध्याहारावश्यंभावः-अत एव- "देवं

स्थले तु उपायत्वेनाध्यवस्यामीत्यर्थ इति न विरोधः-अत्रापि बहुवक्तव्यं तदग्रे निपुणतर मुपपादयिष्यते-यदपि-"पूर्वस्मिन् श्लोके भक्तिरिह प्रपत्तिरुक्तेति भेद" इति तद्व्याख्यानम्-तदप्यस्मदुक्त दिशैव नेयम्-अन्यथा पूर्वश्लोकेऽस्माभिरुपपादितो विरोधस्स्यादेवेति दिक्-अत्रोक्तरीत्या विशेषणानां विशेष्यस्य च साभिप्रायत्वात्परिकर-परिकराङ्कुरौ-प्रपदनस्य पूर्वोक्तानेकपदार्थहेतुकत्वात्काव्यलिङ्गभेदश्च ताभ्यां संकीर्णः-अनुप्रासस्याप्यभ्युच्चयः ॥3॥

**मू. शय्यागृहं तव पिता जगतां नियन्तु**
**र्भ्राता दृगेक इतरः पुनरङ्गभूषा।**
**वक्षस्यमुष्य वरदे! त्वमवस्थिता त**
**द्वाल्लभ्यमम्ब! भवदीयमनन्यलभ्यम्॥ 4**

पूर्वस्मिन् श्लोके पतिवक्षसि नित्यहृद्ये भान्तीमित्यनेन लक्ष्म्या भगवद्वाल्लभ्यं सूचितम्- अथ यदि स्यान्ममैव भगवद्वाल्लभ्यं तर्हि तत्प्रसादनायाहमेव स्यामाश्रयणीया- "विष्णुपत्नीं महीं देवी"मिति श्रुतौ "नमाम्यच्युत वल्लभा"मिति तद्वल्लभात्वेन भूरपि श्रूयते-एवं नीलादयोऽपि स्युरतस्ता एव कुतो नाश्रयणीया इत्यत आह। शय्येति। हे वरदे आश्रिताभीप्सितदायिनि "कल्याणी वरदा माते"ति हि तन्नामसु पठ्यते। अनेन निरुपाधिक वरदाशब्देनास्या भगवतेऽपि सर्वकामप्रदानधौरंधर्यं द्योत्यते- यथोच्यते लक्ष्मीतन्त्रे पञ्चाशेऽध्याये श्रियैव। "तस्याहं परमा शक्ति रेका श्री र्नाम शाश्वती। निरस्तनिखिलावद्या सर्वकामदुघा विभो"रिति। इदं च वक्ष्यमाण वाल्लभ्यातिशयोत्तम्भकम्- हे अम्ब- अनेन साक्षान्मातरि त्वय्येवं भगवद्वल्लभायां सत्यामनादिकालसंचितापरिमितापराधानामपि गर्भभूतानामस्माकं तद्वशीकरणमति सुलभमेव भविष्यतीति द्योत्यते- जगतां नियन्तुः- "एक इद्राजा जगतो बभूव य ईशे अस्य द्विपदश्चतुष्पद" इत्युक्तरीत्याऽखिलजगदधीश्वरस्य श्रीनिवासस्येत्यर्थः- तव पिता- "संरक्षेत्सर्वतश्चैनान्पिता पुत्रा निवौरसा"-नित्यादि निदर्शित स्सर्वप्रकारेणापत्यसंत्राणकृतादरणस्तात एव। यो हि "पितुरन्तः पुरं दद्या न्मातुर्दद्या न्महानसम्। गोषु चात्मसमं दद्यात्स्वयमेव कृषिं व्रजे"दिति प्रत्ययिततमत्वेन राजभिरन्तः पुररक्षणाय नियोज्य इति भारते जोद्घुष्यते स एवेति भाव- शय्यागृहमासीत्- शयनीय निलयतया परिणत इति भावः- तद्वल्लभेन सह विविक्तोद्देशे स्वैरविहारमाशंसमानाना मन्यासां प्रेयसीनां मनागप्यवकाशोऽत्र दुर्लभ इति भावः- "यमन्तस्समुद्रे कवयोऽवयन्ति- शेते

प्रत्ययतोऽस्ति कश्चित्- यस्सोदराणामपि सोदरीणां सर्वात्मना सर्वहितं तनोती''त्युक्तरीत्या सर्वात्मना तव प्रत्ययविषयो हिताचरणैकशीलश्चेति भावः- दृक् चक्षुः- आसीत् चक्षुष्ट्वेन परिणतोऽभूदित्यर्थः- अन्यासु चक्षुःप्रीतेरपि क्वावकाश इति भावः। यद्वा। ''त्वं हि नः परमं चक्षु स्सुहृन्मन्त्रार्थतत्ववित्। वृत्तोऽनुजैर्बन्धुभिश्च कृष्णेनापि स्वचक्षुषे''त्याद्युक्तरीत्या चक्षुरिव सर्वकार्यदर्शनसहकारी- हिताहितज्ञापको वाभूदित्यर्थः- सहसल्लापादेरपि त्वदन्यासामन्तरं दुर्लभमिति भावः- ''चक्षुषी चन्द्रसूर्या''वित्यादि श्रुतेश्चन्द्रोऽस्य चक्षुर्भूत इति तु हृदयम्- इतरो भ्राता पुनः- अङ्गभूषा- महिळान्तरैः परिष्कर्तुमाशंसनीयस्याङ्गस्य भूषणमासीत्- चेटीवदङ्गपरिष्करणमात्रेऽप्यन्यासा मवकाशो दुर्घट इति भावः- कौस्तुभोऽस्य भूषणमिति तु वास्तवार्थः- किं बहुना- अमुष्य पूर्वोक्तविधस्यैव- न तु रूपान्तरं प्राप्तस्य प्रेयस श्श्रीनिवासस्य- वक्षसि उरसि- संमुखीन परिरम्भार्थमन्याभिरतिमात्र मपेक्षणीये चित्तसंनिहिते चेति भावः-त्वमेवावस्थिता-विविक्तोद्देशनिवासादिफलभूत-वल्लभवक्षःपरिष्वङ्गप्रसङ्गः-तच्चित्तवशीकार प्रसक्तिश्च कुतोऽन्यासामिति भावः-''का चान्या त्वामृते देवी''त्युक्त रीत्याऽनितर साधारणतया तदुरसि सततमप्युषिताऽसीति हृदयम्।

एवं दिव्यमहिळान्तरैराशंसनीयेषु सर्वेष्वपि भगवतश्शय्यागृहादिषु भवदीयमयेष्वेव सत्सु कुतस्तेषां तत्र पदन्सायस्याप्यवकाशः- कुतस्तरां तद्वाल्लभ्यसंपादनप्रत्याशा-कुतस्तमां मादृशेष्वाश्रितेषु तदाभिमुख्यसंपादनविलासकौशलमिति भावः। तत् तस्मात्-पूर्वोक्त हेतोरित्यर्थः- भवत्या एवंविधायास्तवेदं भवदीयम्- ''भवतष्ठक्छसा''विति छस् प्रत्ययः- ''ठक्छसोश्चे''ति पुंवद्भावः- ''सिति चे''ति पदसंज्ञायां जश्त्वम्- वाल्लभ्यं निरतिशय प्रियत्वम्- अनन्यलभ्यम्- अन्याभिः त्वदितरदिव्यमहिषीभिः- लभ्यं न भवतीति तथा- ''अर्हे कृत्यतृचश्चे''त्यर्हार्थे यत्- लब्धुमर्हमेव न भवति किमुत तल्लाभकथेति भावः- ''सर्वनाम्नो वृत्तिमात्र'' इति भाष्यकारेष्ट्या पुंवद्भावः- यद्वा- तदित्यादेरेवं भावः- तत्- अखिलजगदीशितृत्वेनास्य सुलभेष्वपि सर्वत्र यथाकामं लोकोत्तरेषु शय्यागृहधीसचिव-परिष्कारेषु त्वदनुबन्धिनामेव सर्वतस्तथात्वेन निवेशना न्मार्दवार्जवाद्यनवधिकासंख्येय कल्याणगुणगणासु सतीष्वपि भूम्यादिदिव्यसहधर्मिणीषु तवैव वक्षसि समावेशनाच्च- भवदीयं वाल्लभ्यमनन्यलभ्यमिति। उदाहृते ''विष्णुपत्नीं मही''मिति प्रमाणे भूदेव्या अच्युतवल्लभात्वकथनं तु त्वत्सख्यावलम्बभूम्नैव- न तु स्वातन्त्र्येण- अत एव तत्र हरिवल्लभात्वे लक्ष्मीप्रियसखीमिति हेतुगर्भतया सा विशेष्यत इत्यभिप्रायः।

मनुमानमेव इति वाच्यम्- [illegible]
निर्देशेन चानुमितेराक्षेपात्- तथा चोक्तम् रसगङ्गाधरे- ''मन्ये इत्यादिवाचक- पदोपादाने वाच्यमनुमानम्- वक्ति कथयतीत्यादि लक्षकपदोपादाने लक्ष्यम्- तदन्यतरानुपादाने साध्याक्षिप्तायामनुमितौ प्रतीयमान''मिति। तदुदाहरणानि तत्रैव द्रष्टव्यानि। तस्मादत्र प्रतीयमानमनुमानमिति ध्येयम्- यद्वा- तदित्येतद्वाल्लभ्यविशेषणम्- तत् लोकोत्तरतया प्रसिद्धम्- भवदीयं वाल्लभ्यमिति योजना- अथ वा- तद्वाल्लभ्यमिति समस्तं पदम्- भवदीयम्- तद्वाल्लभ्यं तस्मिन् भगवति वाल्लभ्यमित्यर्थः- अस्मिन्पक्षद्वयेऽपि पूर्ववाक्यार्थेन वाल्लभ्यानन्यलभ्यत्वरूपार्थस्य समर्थनात्काव्यलिङ्गमित्यनयोरेकत्रैव कविसंरम्भस्यानवधारणात्संदेहसंकर इति विभावनीयम्- न च तदित्यस्य कारण-वाचिताभिधायिनि पूर्वस्मिन्नपि पक्षे काव्यलिङ्गमेव कुतो न स्यादिति वाच्यम्। साक्षाद्धेतुवाचकपदोपादाने तदनुन्मेषात्- एतच्चात्रैव स्तबके फणिशैलपतेरिति श्लोके निरूपयिष्यते। किंच। लक्ष्मीवाल्लभ्यानन्यलभ्यतोक्त्या तदन्यास्वपि प्राप्तस्य वाल्लभ्यस्य लक्ष्म्यामेव नियन्त्रणरूपपरिसंख्या वा- दिव्यदारान्तरापेक्षया लक्ष्म्या विशेषप्रतीते र्व्यतिरेकालंकारो वा- वर्ण्यस्य तद्वाल्लभ्यस्योपमानान्तरानिष्पत्तिरूपपञ्चमप्रतीपं वा- व्यज्यत इत्यलंकारेणालंकारध्वनिः- एतेषां त्रयाणामेक व्यञ्जकानुप्रवेश लक्षणस्संकर इति सावधानं विभावनीयं विद्वद्भिरित्यलम्।

पाश्चात्यस्तु- ''भ्राता दृगेक इतरः पुनरङ्गभूषे''ति सार्वलौकिके विद्यमानेऽपि स्वच्छतमे पाठे-''भ्राता मृगाङ्क इतरः पुनरङ्गभूषे'' इति लोक विलक्षणतया पठन् ''भ्राता मृगाङ्कः-अङ्गं नेत्ररूपोऽवयवः- इतरः कौस्तुभस्तु भूषेति- द्वयमप्यङ्गयोर्नेत्र हृदययोर्भूषे इति वा- द्विवचनं यथा संख्याभिप्राय''मिति व्याचख्यौ- तदयुक्तम्-तथाहि-अङ्गं नेत्ररूपोऽवयव इति व्याख्याने सामान्यस्याङ्गशब्दस्य नेत्ररूप विशेषार्थे पर्यवसानं क्लिष्टम्- कौस्तुभस्येतर-शब्देन निर्देशोऽप्यनुचितः- एकस्य भ्रातुर्मृगाङ्क इति कण्ठरवेण निर्देशादन्यस्यापि कौस्तुभ इत्येव निर्देष्टव्यत्वात्- अस्तु वा इतरशब्देनैव निर्देशः कौस्तुभस्य- तथाऽपि पुनश्शब्दो निष्प्रयोजनः- द्वयोरपि यथासंख्य मङ्गभूषात्व कथनमात्रस्य तद्विवक्षिततया ''भ्राता मृगाङ्क इतरश्च तदङ्गभूषे'' इत्येव पठितुमुचितत्वात्- न च पुनश्शब्द स्समुच्चयार्थक एव कुतो न स्यादिति वाच्यम्- अप्रसिद्धेः- ''पुनरप्रथमे भेदे'' इति हि नैघण्टुकाः-''द्वयमप्यङ्गयोर्नेत्र हृदययोर्भूषे इति वे''-ति व्याख्यानमप्यसंगतम्- कौस्तुभस्य हृदयभूषात्वेऽपि- ''चक्षुषी चन्द्रसौर्यौ- सूर्याचन्द्रौ च नेत्रे''- इत्यादि प्रमाणैश्चक्षुष्ट्वेन प्रसिद्धस्य मृगाङ्कस्य चक्षूरूपाङ्ग-भूषणत्ववाचो युक्तेरयोगात्- उभयोरप्यङ्ग भूषात्वतौल्येन प्रथमनिर्दिष्टमृगाङ्कापेक्षया

एतत्प्रबन्धप्रणेतुरपीयमेव शैली यथा- "त्वयोज्ज्वलद्दुग्धपयोधिमध्ये महोद्वयं देवि सहोदियाय। हरेरुरोभूषणमेकमासीदन्य च्छिरोभूषणमष्टमूर्तेः"। "तामत्युदारां कमले श्रये त्वां यया सुधाब्धौ सहजन्ममात्रात्। एकस्तरुर्लुब्धवतंसकोऽन्यः पशुश्च कश्चित्प्रथितो वदान्य" इत्यादौ दृश्यते- तस्मात्तद्व्याख्यानपक्षे मृगाङ्गकौस्तुभयो रुभयोरप्युक्तरीत्या वैलक्षण्याभावेन पुनश्शब्दो व्यर्थ एव- किंच- चन्द्रे मृगाङ्क इति साक्षादेव निर्दिष्टे पर्यायोक्तिरूप पूर्वोत्तर वाक्यवैरूप्यापत्तिश्चेति यथावस्थित पाठे वर्णभ्रमादिनिबन्धनः प्रतीचीन पाठस्तद्व्याख्यानं चानादर्तव्यमेवेत्यलं कुकल्पननिरासमरुमरीचिकाधावनेन ॥4॥

**मू. भ्रातुर्विधो र्वसुसमृद्ध्यसहेषु पद्मे**
**ष्वास्ते रमेत्यपयशःप्रशमाय नूनम्।**
**सोदर्यकौस्तुभशुभावहमब्धिकन्ये!**
**वक्षस्त्वमावससि वेंकटनायकस्य ॥ 5**

अथ श्रियो भगवद्वक्षस्थलावस्थाने प्रयोजनं संभावयन्नाह। भ्रातुरिति। हे अब्धिकन्ये- इदं च तस्याश्चन्द्रकौस्तुभसोदरीत्वज्ञापनाय-रमा- श्रीः- भ्रातुः समानोदर्यस्य- विधोः चन्द्रमसः- न सहन्त इत्यसहाः- पचाद्यच्- वसुसमृद्धेः धन संपदः- असहेषु- चन्द्रकिरणप्राभवसंकुचितेष्विति हृदयम्- "देवभेदेऽनले रश्मौ वसू रत्ने धने वस्वि"त्यमरः- पद्मेषु- आस्ते उपविशति- इति- अपयशसः अकीर्तेः- प्रशमाय नूनं शान्तिं संपादयितुमिव- अयं भावः- "लभ्येत भ्रातृविद्वेषी पुमान् कुत्रापि भूतले। दृश्येतान्विष्यमाणाऽपि न भ्रातृद्वेषिणी वधू"रित्युक्तरीत्या लोके सामान्यतस्त्रीणामेव भ्रातृविद्वेषादि वार्ताऽपि न सोढव्या- किं पुनः-"यस्तान् द्वेष्टि स मां द्वेष्टि यस्ताननु स मा मनु। पाण्डवान् द्विषसे राजन्मम प्राणा हि पाण्डवा" इत्युक्तरीत्या सामान्यतस्स्वाश्रितविषय विद्वेषमपि स्वविद्वेषमभिसंदधतः- विशेषतश्च- "धर्ममर्थं च कामं च पृथिवीं चापि लक्ष्मण। इच्छामि भवतामर्थे एतत्प्रति शृणोमि ते। भ्रातृणां संग्रहार्थं च सुखार्थं चापि लक्ष्मण। राज्यमप्यहमिच्छामि सत्येनायुधमालभे। यद्विना भरतं त्वां च शत्रुघ्नं चापि मानद। भवेन्मम सुखं किंचिद्भस्म तत्कुरुतां शिखी। कथं नु पुत्राः पितरं हन्युः कस्यांचिदापदि। भ्राता वा भ्रातरं हन्यात्सौमित्रे प्राणमात्मनः। न हि ते निष्ठुरं वाच्यो भरतो नाप्रियं वचः। अहं ह्यप्रियमुक्तस्स्यां भरतस्याप्रिये कृते" इति भ्रातृसौहार्द भूमानमात्मनः प्रकाशयत इतरकृतं तदप्रियं स्वाप्रियमेव जानतस्तथैव वदतश्च भगवतः प्रेयस्याः स्वतोऽपि

वैकल्पिकस्सभावः- "समानेदर्य सोदर्य सगर्भ सहजास्समा" इत्यमरः- स चासौ कौस्तुभश्च- तस्य- शुभावहं कल्याणदायि- भगवद्वक्षस्थलावस्थानेनैव हि तस्य तादृश-शुभातिशय इति भावः- वेङ्कटनायकस्य श्रीनिवासस्य- वक्षः- त्वं- आवससि अधितिष्ठसि- "उपान्वध्याङ्वस" इत्याधारस्य कर्मत्वम्- समानोदर्यवसुसंपदसासहिस्थाननिवास निबन्धन मपयशस्सोदर्य संपदुपचायकप्रदेशनिवासेनैव प्रमार्जनीयमिति कौस्तुभसुभगं-भावुके भगवदुरसि स्थितासीत्यभिप्रायः।

अत्रोक्तविधापयशःप्रशमनस्य भगवद्वक्षो निवासाफलस्यासत एव तत्फलत्वेन संभावनादसिद्धविषया फलोत्प्रेक्षा। सोदर्य कौस्तुभ शुभावहमित्यस्य विशेषणस्य तादृशापयशःप्रशमनौपयिकताभिप्रायगर्भत्वात्परिकर इत्यनयोरुपजीव्योपजीवकभावा-दङ्गाङ्गिभाव संकरः। बुधामोदिनी कृतस्तु- "लक्ष्म्या स्स्वतस्सिद्धवक्षस्थिते स्सोदरकौस्तुभनिवासस्थलत्वहेतुकत्वमुत्प्रेक्षितुं स्वतस्सिद्ध पद्मवासस्य सोदरान्तर विरोधिसंसर्गरूपत्व कृताकीर्तिप्रशमनफलकत्व मुत्प्रेक्षत" इति व्याचक्षते-तत्रास्य वाक्यस्यानन्वितत्वं तावदास्ताम्-फलोत्प्रेक्षाया हेतूत्प्रेक्षाङ्गत्वाभिप्रायेण तदुपन्यासोऽप्य-समञ्जसः। सोदर्य कौस्तुभ शुभावह मित्यस्योक्ताभिप्रायगर्भतालक्षण परिकरभावेन फलोत्प्रेक्षोपस्कारकत्व एव चारुतातिशयोन्मेषाद्धेतूत्प्रेक्षाया एवानवकाशे कुतस्तस्याः फलोत्प्रेक्षां प्रत्यङ्गित्वमिति दिक्॥5॥

**मू. भगवतः प्रतिघो हृदि मा स्म भूत्समुदयद्वृजिनेषु जनेष्विति।**
**अवहिता जगदम्ब! हिताय नो हृदयमेव हरे रधितिष्ठसि॥ 6**

अथ श्रियश्श्रीनिवासवक्षस्थलावस्थितौ हेतुं संभावयन्नाह। भगवत इति। हे जगदम्ब- अनेन त्वन्मातृत्वस्य सर्वसाधारण्येन सर्वत्र तुल्यप्रसरत्वाद्दयायाः न तवादयनीयो नाम क्वचिदपि कश्चिदपि विद्यत इति द्योत्यते- तेन च वक्ष्यमाणं कृतापराधकृत्स्नलोक-विषयकभगवन्निग्रहोन्मेषनिरास सावधानत्वं तव युक्तमेवेति व्यज्यते- समुदयन्ति समुदायी-भूयोद्भवन्ति न तु पृथगुद्यन्ति द्वित्राणि त्रिचतुराणि पञ्चषाणि वा- तथासति वा भगवतः प्रतिघो नोन्मिषेदिति क्वचित्संभाव्येतापीति भावः- तथाविधानि वृजिनानि दुरितानि येषां-तथोक्तेषु तेषु- वार्तमानकालिकेन शत्रा समुदयतामपि वृजिनानां सांतत्यं द्योत्यते- तेन चोन्मिषतो भगवत्क्रोधस्य प्राज्याज्याहुतिसंततजाज्वल्यमानस्य हव्यवाहस्येव कदापि

चेतनेषु विषये- भगवतः- "यदिदं किंच जगत्सर्वं प्राण एजति निस्सृतम्। महद्भयं वज्रमुद्यत"मित्युक्तरीत्या यच्छासनातिवृत्तौ किमस्माकं भविष्यति वेति महतो भयाद्वज्रादिवोद्यतात्कृत्स्नं जगत्कम्पते-तस्याप्रतिहत ज्ञानशक्ति बलैश्वर्यवीर्यतेजोमहोदधे श्श्रीनिवासस्य- हृदि मनसि- "पद्द" न्नित्यादिना हृदयशब्दस्य हृदादेशः- स्वतन्त्रो हृच्छब्दो वा- "स्वान्तं हृन्मानसं मन" इत्यनुशासनात्- प्रतिघः क्रोधः- "तानहं द्विषतः क्रूरान् संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिष्वि"त्याद्युक्तो निग्रह संकल्प इत्यर्थः- "कोपक्रोधामर्षरोष प्रतिघा" इत्यमरः- मा स्म भूत् मा जनिष्ट- "स्मोत्तरे लङ्चे"ति चकाराल्लुङ्- "न माङ्योगे" इत्यडागमप्रतिषेधः- इति हेतोः- अवहिता अवधानवती सती- यदि ह्यहं प्रमाद्येयं स्तोकमपि तर्हि निरङ्कुशस्वतन्त्रे "नित्यमुद्यत दण्डस्स्या"दित्युक्तरीत्या दण्डधरे जाग्रति चक्रधरे न शक्यं जीवितुमेतैर्गर्भभूतै स्समेधमान दुरितव्रातैश्चेतनजातैरिति पर्यालोच्य निष्प्रमादा सतीति भावः। अवपूर्वकाद्धधातेः कर्तरि क्तः- "दधातेर्हि"रिति प्रकृतेर्हिरित्यादेशः- कर्तरि प्रत्ययेन नेद मवधानं परप्रेरणया- किंतु स्वत एवेति द्योत्यते- तेन त्वद्वात्सल्यमपरिच्छिन्नमिति व्यज्यते। नः पूर्वोक्त विधानामस्माकम्- हिताय श्रेयस्संपादयितुम्- न तु किंचिदपि स्वप्रयोजनमत्रास्तीति भावः- हरेः तस्यैव श्रीनिवासस्य- "ब्रह्माणमिन्द्रं रुद्रं च यमं वरुणमेव च। प्रसह्य हरते यस्मात्तस्माद्धरिरितीर्यत" इति निर्वचनरीत्या मनाक्कोपसंमुखीनतायामेव ब्रह्मादि सकललोक प्रतिसंचर विधान निराबाध प्रभावस्य तस्यास्मादृश निग्रहः कियानिति भावः- एतदपि श्रियोवधान मुत्तम्भयति। हृदयमेव हृदयसंनिहितं वक्षस्थलमेव- अधितिष्ठसि आवससि- "अधिशीङ्स्थे"त्यादिना आधारस्य कर्मत्वम् - पार्श्वादिसदेशावस्थिता- वङ्गान्तरेऽवस्थाने वा तवावहितचित्तत्वेऽपि मनाक्सान्निध्यव्यवधानान्मादृशापराध- परंपरावलोकानन्तरक्षणमेव भगवतश्चेतसि कचिदुन्मिषेदेव निग्रहसंकल्पः-उन्मिषतक्रोध- प्रशमनं च- "किमेवं निर्दोष" इत्याद्युक्तरीत्या भूयःप्रयत्नसाध्यः-अतः- "भविष्यन्त मनर्थं तु प्रागेव विनिवारयेत्। वरमङ्कुरविष्टम्भो रूढमूलविमूलना"दित्युक्त प्रक्रियया उत्पन्नानर्थ- निवारणप्रयत्नभूयस्त्वायासादप्युत्पत्स्यमानानर्थप्रतिष्टम्भ एव श्रेयानिति परित्यक्तावय- वान्तरादि सान्निध्या प्रतिघोन्मेष भूमिचेतस्संनिहितप्रदेश एवावस्थितासीति भावः। अत्र भगवद्वक्षस्थलावस्थाना हेतोस्तत्क्रोधोन्मेषवारणस्य सत एव हेतुत्वेन संभावनाद्धेतूत्प्रेक्षा- सिद्धविषया व्यञ्जकाप्रयोगादगम्या- अभ्युच्चीयतेऽनुप्रासेन- द्रुतविलम्बितं नाम वृत्तम्। "द्रुतविलम्बितमाह नभौ भरा"विति लक्षणात्। अत्र "लक्ष्म्या भगवदयवेष बहुष सत्स्वपि

मू. फणिशैलपतेस्त्वमिन्दिरे भवसि प्राणसमेति सांप्रतम्।
अमुना भवती यतस्स्वयं हृदये प्राणपदे निवेशिता।। 7

अथ श्रियो भगवता वक्षसि निवेशनात्तत्प्राणतुल्यतामनुमिमीते। फणीति। हे इन्दिरे- पारमैश्वर्यवाचिनाऽनेन श्रियस्स्वतुल्यपारमैश्वर्यतया भगवता प्राणपदे निवेशनं वक्ष्यमाणमुत्तम्भितम्- त्वम्- फणिशैलपतेः श्रीनिवासस्य- प्राणैस्समा प्राणसमा- "तुल्यार्थै"रित्यादिना प्राणशब्दात्तृतीयायां "पूर्वसदृशसमे"त्यादिना समासः- भवसीत्येतत्- सांप्रतं युक्तम्- "युक्ते द्वे सांप्रतं स्थाने" इत्यमरः- गूढार्थ विवरणे तु- "प्राणसमा प्राणवदत्यन्त प्रेमास्पदम्- प्राणतुल्या चे"ति समुच्चित्य व्याख्यातम्- तत्तु द्वयोरनतिरिक्तार्थकत्वेन मन्दम्- यतः यस्माद्धेतोः- भवती- अमुना श्रीनिवासेन- स्वयं अनितरप्रेरितं यथा स्यात्तथा- न हीतरचोदना प्राणपदे निवेशनेऽपि स्वतः प्राणतुल्यताभिसंधि स्स्यादिति भावः- प्राणानां पदे स्थाने "यदिदमस्मिन्नन्तःपुरुषे हृदयमस्मिन्हीमे प्राणाः प्रतिष्ठिता" इति श्रुत्या हृदयस्य प्राणस्थानतोक्तेः- हृदये तत्सन्निहिते वक्षसीति यावत्- निवेशिता निषादितेत्यर्थः - अत्र प्राणपदभूत हृदयस्थाननिवेशितत्वेन हेतुना श्रियो भगवत्प्राण समात्वानुमानादनुमानालंकारः। लक्षणं तु द्व्यन्तरिते शय्यागृहमिति श्लोकेऽवोचाम- प्रयोगस्तु- लक्ष्मीः फणिशैलपतेः प्राणसमा- तेन प्राणपदे हृदि निवेशितत्वादिति। यत्त्वत्र काव्यलिङ्गमिति गूढार्थविवरणकृत आहुः- तन्न- अत्र यत इति साक्षाद्धेतुप्रतिपादक शब्दोपादानेन तदनुन्मेषात्- तथा च तल्लक्षणमुक्तं रसगङ्गाधरे- "अनुमितिकरणत्वेन विवक्षितोऽर्थः काव्यलिङ्गमिति। "उपपादकत्वं च तन्निश्चयजनकज्ञानविषयत्वम्- अनुमानार्थन्तरन्यासयोर्वारणायानालिङ्गितान्तम्- उपमादिवारणायोपपादकत्वेनेत्यन्तम्- पञ्चम्यादिशब्दप्रतिपादितहेतुताकस्य हेतोरेव वारणायोपपादकत्वेन विवक्षित इति- न तु शब्दात्तेन रूपेण बोधित इत्येतदर्थफलकम्- तेन- "भयानकत्वात्परिवर्जनीयो दयाश्रयत्वादसि वीर!सेव्य" इत्यादौ नायमलंकारः- गम्यमानहेतुताकस्यैव हेतोस्सुन्दरत्वेनालंकारिकैः काव्यलिङ्गताभ्युपगमा"दिति तत्रैव विवृतम्- तस्मादत्र यत इति साक्षादेव हेतुबोधकपददर्शनान्न काव्यलिङ्गप्रत्याशेत्यास्तां तावत्- यदपि बुधामोदिनी कारैः- "अद्य हृदयावस्थानस्य प्राणतुल्यतया भगवतैव तद्देशप्रापणकृतत्व मुत्प्रेक्षत" इत्युक्तम्- तदपि न सम्यक्- उक्तरीत्याऽनुमानालंकारस्यैवात्रोद्भटतया उत्प्रेक्षायाः पदन्यासस्याप्यनवकाशात्- अन्यथा अनुमानालंकारसामान्य मुत्प्रेक्षैव स्यादिति महती

गुरुर्वियोगिनी''ति लक्षणात्- इदं वैताळीयमपि भविष्यति- ''षड्विषमेऽष्टौ''वित्यादि-
तल्लक्षणस्यापि संगतेः- गतमन्यत्॥7॥

मू. उरगाद्रिपते रुरस्थलस्था कमले! तद्गळशङ्खगर्भमुक्तैः।
शुचिहारमहस्सुरस्रवन्तीसलिलैरम्ब सदाऽभिषिच्यसे त्वम्॥ 8

इदानीं भगवद्वक्षस्यवस्थितायाश्श्रियस्तदीय दिव्यमुक्ताहारद्युतिसंवलनं वर्णयति। उरगेति। हे अम्ब कमले- उरगाधिपतेः श्रीनिवासस्य- उरस्थलस्था- त्वं- अत्र कण्ठहार महसोराभिषेचनिकं शङ्खसुरनदीसलिलत्वरूपणाद्वक्ष्यमाणाल्लिङ्गादरूपितमपि भगवदुरस्थले दिव्यसिंहासनत्वं गम्यते। तस्य भगवत श्श्रीनिवासस्य- गळः- ''रेखात्रययुता ग्रीवा कम्बुग्रीवेति कथ्यत'' इत्युक्तलक्षणः कण्ठ एव- शङ्खः कम्बुः- ''शङ्खो निध्यन्तरे कम्बु ललाटास्थिनखेषु चे''ति विश्वः- तस्य- गर्भात् उदरात्- मुक्तैः विच्युतैः- मुचेः कर्तरि क्तः- ''अपेतापोढमुक्ते''त्यादिना पञ्चमीसमासः- यद्वा- गर्भेण मुक्तैः विसृष्टैः- कर्मणि क्तः- ''कर्तृकरणे कृते''ति समासः- अत्र भगवत्कंधरायाः- ''वसाम्यथार्केच निशाकरे चे''त्यारभ्य- ''छत्रे च शङ्खे च तथैव पद्मे'' इति विष्णुस्मृत्युक्तरीत्या लक्ष्मीस्थान भूतशङ्खत्वेन रूपणं वक्ष्यमाणाभिषेचनमाङ्गल्यौपयिकतामवगमयितुम्- यत्तु- गूढार्थ विवरणकाराः- ''शङ्खगर्भः शङ्खप्रवरः दक्षिणावर्तशङ्ख इति यावत्- तद्गळ एव शङ्खः- तस्य गर्भः कुक्षिरिति वाऽर्थः- ''गर्भ'' इत्यारभ्य ''कुक्षौ पवनसंकटे। भ्रूणे प्रवरके चे''ति रत्नमाला- तेन मुक्तै''रिति व्याचक्ष्यते- तत्र गर्भः कुक्षिरिति व्याख्यानं सम्यगेव- उदाहृत कोशावलम्बनेन शङ्खप्रवर इति व्याख्यानं तु भ्रान्तम्- ''गर्भोऽपवरकेऽन्नेऽग्नौ सुते पवन संकटे। कुक्षौ कुक्षिस्थजन्तौ च। ''गर्भः कुक्षौ शिशौ संधौ भ्रूणे पवनकण्टके। मध्यमे चापवरके'' इति वैजयन्ती हेमचन्द्रादिकोशसंवादिन्यां रत्नमालायामपि- ''गर्भोऽर्भके नाट्यसन्धौ कुक्षौ पवनकण्टके। भ्रूणेऽपवरके चे''ति पकारस्य *रेफाघटिततयैव पाठदर्शनात् - अपवरकं नाम गर्भागारम् - ''गर्भागारापवरके'' इति त्रिकाण्ड शेषानुशासनात्- प्रयोगश्चास्मिन्नेव प्रबन्धे महोत्सवस्तबके दृश्यते- ''उत्सवापवरके वरकेतनभूषिते'' इति। ''अपवरके उत्सव गृहाङ्गभूते गर्भगृहे'' इति तैरपि तत्र व्याख्यातम्- तस्मात् प्रवरके चेति लेखक स्खलनादिनिबन्धनरेफघटितपाठावलम्बनेन

[illegible]

सर्वलोकमहेश्वरी''मित्याद्युक्तप्रकारेण दिग्गजकर्तृकमवतारकालिकं महेन्द्रसमर्पिते दिव्यसिंहासने तव गङ्गादि दिव्यसलिलाभिषेकं स्वप्रेम्णस्त्वन्महिम्नश्चा पर्याप्तिं जानता भगवता स्वयमेवापूर्वदिव्यशङ्खगर्भगतलोकोत्तरसुरनदीदिव्यसलिलैर्निज वक्षस्थलदिव्य-महानील सिंहासने सर्वेश्वरेश्वरीत्वं प्रथयितुमनारतमभिषिच्यस इवेति भावः।

अत्र हारद्युति प्रसरं विषयमनुपादाय तस्य भगवत्कर्तृकाभिषेचनत्वेन संभावनादनुक्त विषया क्रियास्वरूपोत्प्रेक्षा व्यञ्जकाप्रयोगादृगम्या- उक्तैकदेशविवर्तिरूपकानु प्राणिताऽ नुप्रासोपस्कृता चेति संकरः-यत्तु- ''शुचिश्वेतम्-हारमहः मुक्ताहारकान्तिरेव शुचीनीत्या-वृत्तिः-शुचीनि शुद्धानि-सुरस्रवन्तीसलिलानि-तै''रिति व्याख्यातं गूढार्थ विवणे-तन्न-हारमहोविशेषणतया समासघटितस्य शुचिशब्दस्य व्यवहितसुरस्रवन्तीसलिलविशेषणतया आवर्त्य मध्येसमासं प्रवेशनायोगात्-विषयभूतहार महस श्शुचित्व विशेषण बलादेव विषयिभूत सुरस्रवन्तीसलिलेष्वपि शुचित्वस्य स्वरसतोऽवगम्यमानतया शुचिपदावृत्ते-रनावश्यकत्वाच्चेति दिक्- वसन्तमालिकावृत्तमर्धसमम्- ''विषमे स सजा गुरू परस्तात्सभरा यश्च वसन्तमालिका स्या''दिति लक्षणात्- वैताळीयमौपच्छन्द सिकं वा॥8॥

**मू. कुमारि क्षीराब्धेः कुसुमसुकुमाराङ्गि भवती**
**नवं पद्मं सद्मम्रदिम रमणीयं विजहती।**
**शरण्ये त्रातुं न शरकिणघनं कौस्तुभशिला-**
**कठोरं गाढोरश्श्रयति कृपया कैटभरिपोः॥** 9

अथ ''पश्यतैतान्महाभागा न्परार्थैकान्तजीवितान्। वातवर्षातपहिमान् सहन्तो वारयन्ति नः''। ''स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः प्रतिदिनमथ वा ते वृत्तिरेवं-विधैव। अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं शमयति परितापं छायया संश्रिताना''मिति न्यायेन श्रीदेव्याः पद्मपरित्यागपूर्वक भगवद्वक्षस्थलावस्थानं न स्वसुखेच्छया- किंतु शरणागत परित्राणार्थमेवेति संभावयन्नाह। **कुमारीति**। हे शरण्ये- शरणे रक्षणे साधुश्शरण्या तस्या स्संबुद्धिः- ''तत्र साधु''रिति यत्- अनेन शरणागतक्लेशलेशासहिष्णुतया ''भवितव्यं सदा राज्ञा गर्भिणीसहधर्मिणा। यथा हि गर्भिणी हित्वा स्वं प्रियं मनसोऽनुगम्। गर्भस्य हितमाधत्ते तथा राज्ञाऽप्यसंशयम्। वर्तितव्यं कुरुश्रेष्ठ यथा धर्मानुवर्तिना। स्वं प्रियं तु परित्यज्य यद्यल्लोकहितं भवे''दित्युक्तरीत्याऽनादृत्य स्वसुखमपि [illegible]

व्यज्यते- ईदृशसौकुमार्ये हेतुमभिप्रयन्विशेष्यं निर्दिशति। क्षीराब्धेः कुमारीति। न हि कारणाद्विलक्षणं कार्यं भविष्यतीति भावः- "वयसि प्रथमे" इति ङीप्। प्रथमवयोवाचिना कुमारीशब्देनाप्युक्तसौकुमार्यमेवोत्तभ्यते। भवती- त्वं- नवं अभिनवरविकरोन्निद्रम्- अत एव- मृदोर्भावः म्रदिमा- पृथ्वादित्वाद्भावार्थे इमनिचि "रऋतो हलादेर्लघोः- इष्ठे मेयस्सु"- इति मृदुशब्दावयव ऋकारस्य रत्वम्- तेन रमणीयम्- पद्मं अरविन्दरूपम्- सद्म वेश्म- नवमित्यनेन सुरभित्वाम्लानत्वा शिथिलदळत्वादिकम्- म्रदिमेत्यादिना- कुसुम सुकुमाराङ्ग्यास्तवेदमेवानुरूपं वासस्थानमिति च ध्वन्यते- तेन तस्य कथं चिदपि दुस्त्यजत्वं व्यज्यते। विजहती परित्यजन्ती सती- जहातेश्शतरि- उगिल्लक्षणे ङीपि- "नाभ्यस्ताच्छतु"रिति नुम्प्रतिषेधः- वीत्युपसर्गेणात्यन्तोचितस्यापि सद्मनो निस्सङ्गे- नान्तरात्मना परित्यागस्सूच्यते- तेनाश्रितपरित्राणाभिषङ्गो वेलातीत इति द्योत्यते- नः अस्मान्- अनादिकालसंचितानन्तापराधमलीमसतया भगवदभिमुखीभवनकातरान् जन्मजरामरणाद्यातुरान्निर्विण्णान्तःकरणांस्त्वदेक शरणानिति भावः- त्रातुं भगवन्निग्रहा-द्रक्षितुम्- शराणां प्रत्यर्थिप्रयुक्तानां बाणानाम्- किणैः रूढव्रणपदैः- "रूढव्रणपदं किण" इति हेमचन्द्रः- घनं सान्द्रं दन्तुरमिति यावत्- कठिनमिति वा- "कठिनाधिकसान्द्रेषु वाद्य मध्यमनृत्तयोः। मुस्तामुद्गरमूर्तेषु त्रिषु मेघे घनः पुमा"निति रत्नमाला- न केवल मेतावदेवेत्याह। कौस्तुभेति। कौस्तुभशिलया- कौस्तुभरत्नावस्थानेनेति यावत्- रत्नशब्देन निर्देष्टव्ये शिलाशब्देन निर्देशः विवक्षित कार्कश्यभूयस्त्व द्योतनाय- कठोरं निष्ठुरम्- "कठोरं निष्ठुरं दृढ"मित्यमरः- आभ्यां विशेषणाभ्यामागन्तुकं नैष्ठुर्यमुक्तम्- अथ नैष्ठुर्यमाह। कैटभरिपोरिति। अनेन कुलिशकठिन विकट कैटभ विग्रह विपाटन पटीयस्त्वं द्योतयता विवक्षितं नैष्ठुर्यमेवोत्तभ्यते- गाढं दृढम्- उरः वक्षः- गाढत्वस्य नैसर्गिकता द्योतनायैव समस्ततया निर्देशः- एभिर्विशेषणविशेष्यपदैरत्रैकदेशेऽपि सुखासिका प्रत्याशाऽपि दुर्लभेति ध्वन्यते। कृपया अनभीप्सितस्वप्रयोजनया परदुःख निराचिकीर्षयैव- अन्यथा उक्तविधायास्तवेदृशदुस्थप्रदेशावस्थितिः किमर्थेति भावः- श्रयति सेवते- "श्रीञ् सेवायां" लट्- अत्र वक्षस्थलाश्रयणफलस्य परित्राणस्य परगामितया परस्मैपदम्। भवती शब्दप्रयोगान्न मध्यमपुरुषः। वर्तमाननिर्देशेन तत्रावस्थितेर्नित्यानुवृत्तता व्यज्यते। तेन च सुमहानपि क्लेशः कादाचित्कश्चेत्कथंचित् नेत्रे निमील्यापि शक्यस्सोढुम्- न तु नित्यानुवृत्तो लघीयानपि- अतः कृपापारवश्यैनैवाभ्युपेतो महीयान्नित्योऽयं भवत्याः क्लेशः

स्संकरः- अति सुकुमारतमाया अति सुकुमारतामरसवासिन्याश्च श्रियः- निठुरतम भगवद्वक्षस्थलावस्थानस्य चाननुरूपयो र्घटनस्य वर्णितत्वाद्विषमालंकारः- "विषमं वर्ण्यते यत्र घटनाऽननुरूपयो"रिति लक्षणात्। किंच। क्षीराब्धेः कुमारीत्यस्य कुसुमसुकुमाराङ्गीत्वं प्रतिहेतुत्वात्काव्यलिङ्गम्- शरण्ये इत्यस्य सोढ्वाप्यात्मनः क्लेश माश्रित-संत्राणैकताननताभिप्रायगर्भत्वात्- कुसुमसुकुमाराङ्गीत्यस्य पद्मैकनिवासार्हत्वकर्कशस्थान-निवासानर्हत्वरूपोभयाभिप्रायगर्भत्वाच्च द्वौ परिकरौ-आभ्यामुत्तेजितं पूर्वोक्त विषम-मित्यपरस्संकरः। एकस्या एव लक्ष्म्याः पद्म भगवद्वक्षो लक्षणानेकाधारश्रयण-वर्णनात्पर्यायालंकारश्च- "पर्यायो यदि पर्यायेणैकस्यानेकसंश्रय" इति लक्षणात्। एतेषां सर्वेषामेकवाचकानुप्रवेशलक्षणस्संकरोऽनुप्रासेन चाभ्युच्चीयते। अपि च। भगवद्वक्षो-गाढत्वस्य नैसर्गिकस्य शरकिणघनत्वकौस्तुभशिला कठोरत्वाभ्यामुत्कर्षः प्रतीयत इत्यनुगुणालंकारोऽभि व्यज्यते। "प्राक्सिद्ध स्वगुणोत्कर्षोऽ नुगुणः परसंनिधे"रिति लक्षणात्। अत्र पाठसमयेऽपि वाक्ये पृथक्पदत्व प्रतीतेर्माधुर्यं नाम गुणः। "या पृथक्पदता वाक्ये माधुर्यं तन्निगद्यत" इति लक्षणात्। अन्यच्च। पूर्वार्धे कुसुमसुकुमाराङ्गि नवं पद्मनित्यादौ- उत्तरार्धे कौस्तुभशिलाकठोरमित्यादौ च- तत्तत्प्रदिपाद्यसौकुमार्यपारुष्याभि-व्यञ्जनाय प्रायेण कोमलाः परुषाश्च वर्णाः कविना ग्रथिता इति ध्येयम्- "टवर्ग वर्जिता स्स्पर्शास्स्वस्ववर्गान्त्यशेखराः। लघुरेफ णकारौ च कोमलाः परिकीर्तिताः। रेफेण यस्य कस्यापि योग आद्यतृतीययोः। स्वोत्तराभ्यां तुल्ययोर्वा परुषाष्टगणश्शषा"विति कोमलपरुषवर्णसंग्रहः। बुधामोदिन्यां तु- "भगवत्कोपप्रशमनाय तद्देशसंनिहितास्थिति-फलकत्वमुरस्थिते स्सिद्धवत्कृत्य स्वसौकुमार्याननुगुणकठिनदेशस्थितिरूपतया तत्स्थितेरसह्यक्लेशरूपत्वमभिप्रयन् तत्सहनस्योक्तरीत्या आश्रितरक्षणार्थत्वं स्वभावोक्त्या प्रतिपादयती"ति व्याख्यातम्- तदेतदनुवादस्याप्यनर्हमिति स्वयमेव *व्यतिविद्रते परीक्षका इति किं तद्दूषणप्रयासेनास्माकम्- एवमेव तत्र सर्वत्रापि भूयिष्ठमसंबद्धमेव लिखितम्-शिखरिणी वृत्तम्। लक्षणं तु पूर्वमेवोदैरिराम॥9॥

**मू.** श्रीवत्साङ्कं चिरतरमुरस्सीमगोष्ठं मुरारे-
रध्यासीना मनघहरितोदारकान्त्याऽभिरामम्।
कल्याणि त्वामतुलममृतं संश्रितानां दुहानां
क्षीराम्भोधे स्समुदितवतीं ब्रूमहे कामधेनुम्॥ 10

* व्यतिविद्रते-विविच्य जानन्तीत्यर्थः। वेत्तेर्विभाषा-इति सूत्रेण रुडागमे इदंरूपं विदधातोः लटि

कल्याणि नित्यकल्याणस्वरूपे- "कल्याणी वरदा माते" ति [illegible] पठ्यते। प्रपञ्चित
चैतदस्मिन्नेव स्तबके द्वितीयश्लोके- कल्याणीशब्द व्याख्यानावसरे। कामधेनुपक्षेऽपि "कल्याणी रूपसमृद्धे"ति गोविषयश्रुत्या- "गावो मङ्गळमुत्तम"मित्यादिस्मृतिभिश्च कल्याणीत्वं बोध्यम्- श्रीवत्सनामा- अङ्कः चिह्नं यस्मिंस्तत्- श्रीवत्सो नाम भगवद्वक्षसि रोमावर्तविशेषः- "श्रीवत्सेनोरसि श्रीमान्रोमावर्तेन राजित" इति हरिवंशोक्तेः- "प्रदक्षिणावर्त विचित्ररोमश्रीवत्ससद्बिम्बविभूषिताङ्ग"मिति गारुडोक्तेश्च- स च लक्ष्मी निवासस्थान ममृतमयत्वात्सर्वप्ररोहहेतुः प्रधानाभिमानी- "श्रीवत्ससंस्थानमय मनन्तेन समाश्रितम्। प्रधानं बुद्धिरप्यास्ते गदारूपेण माधवे" इत्यस्त्रभूषणाध्यायोक्तेः। वङ्गि वंशेश्वरैस्तु "श्रीवत्सं पुरतो विष्णोर्हेमप्रभमनुस्मरे"दित्युक्तम्- श्रीवत्स एव- अङ्को भूषणमिति वा- श्रीवत्सस्याङ्कं स्थानमिति वा- "अङ्को रूपक भेदाङ्ग चिह्नरेखाजिभूषणे। रूपकांशान्तिकोत्सङ्गस्थानेऽङ्कं पापदुःखयो"रिति मेदिनी- "अङ्कं स्थानेऽन्तिके मन्तौ रूपकोत्सङ्गलक्ष्मसु। नाटकादिपरिच्छेदे चित्रयुद्धे च भूषणे" इति विश्वश्च- अन्यत्र- श्रीयुक्ताः ये- वत्साः तर्णकाः- शाकपार्थिवादित्वान्मध्यमपदलोपी समासः- ते- अङ्के समीपे यस्य तत्- तेषामङ्कं स्थानमिति वा- तथोक्तम्- यत्तु- "श्रीमान् शोभमानः- वत्सस्तर्णकः- अङ्के यस्ये"ति गूढार्थविवरणादौ व्याख्यातम्- तत्तु तात्पर्यस्य प्रदर्शनं न तु विग्रहस्येत्यवसेयम्- विग्रहप्रदर्शनपरत्वे मतुब्लोपो दुर्घटः- अनुशासनादर्शनात्- अनघा निर्दोषा- हरिता हरिद्वर्णा- उदारा महती- या- कांतिश्शोभा- तया- भगवद्दिव्यविग्रहस्य श्यामलतया प्रसिद्धत्वेऽपि "धत्ते शोभां हरिमरकते तावकी मूर्तिराद्ये"त्यादौ मरकत साधर्म्यस्यापि वर्णितत्वेनात्र तदुरसो हरितवर्णत्वोक्तिर्नानुपपन्ना- हरिन्नील वर्णयोरनति वैजात्यादभेदेन वर्णनं च कविसमयसिद्धम्- तथा च काव्यानुशासन सूत्रम्- "कृष्णनील हरितश्यामाना"मिति। ऐक्यमिति वक्ष्यमाणेन संबन्धः- कृष्णनीलादीना मैक्यवर्णनं कविसमय सिद्धमिति तदर्थः- अलंकार शेखरेप्युक्तम् "कमलासंपदोः कृष्णहरितोर्नाग सर्पयोः। पीतलोहितयोस्स्वर्णपरागाग्निशिखादिषु। चन्द्रे शशैणयोः कामध्वजे मकरमत्स्ययोः। दानवासुरदैत्यानामैक्यमेवाभि संमत"मिति। अत एव "हरिन्मणि श्याम तृणाभिरामैः- घास श्यामान्मरकतमणी"नित्यादि निर्व्यूढम्-अर्थान्तरे तु- अनघाः अम्लाना इति यावत्-याः-हरिताः दूर्वाः-"हरिता स्त्री तु दूर्वायां हरिद्वर्णयुतेऽन्यव"दिति मेदिनी- तासां-या-उदारा महती-कान्तिः-"उदारो दातृमहतो"रिति-पठित्वा-"अनघा क्लेशविरोधिनी- निर्दुष्टा वा-भरिता व्याप्ता-उद्दामा गम्भीरा-या-कान्तिः-अन्यत्र "अनघा

मुभे'' इत्यनुशासनात्- नान्तलक्षणङीपो ''मन'' इति निषेधः- सैव गोष्ठं गोस्थानम्- गावस्तिष्ठन्त्यस्मिन्निति गोष्ठम्- ''सुपि स्थ'' इति कः- ''अम्बाम्ब गोभूमी''त्यादिना षत्वम्- गूढार्थविवरणकृतस्तु- ''गोष्ठं गोस्थानं घृणिस्थानमित्यप्यर्थः- गोशब्दस्य घृणि वाचित्वादिति व्याचक्षते। घृणिस्थानरूपार्थस्य क्वोपयोग इति त एवानुयोज्याः- न ह्युरस्सीम्नो गोष्ठत्वेनैव रूपणे गोष्ठशब्दस्यार्थान्तरमपेक्षितव्यम्- चिरतरं अति बहुकालम्- अनव्यय सुबन्ताच्चिर शब्दात्तरप्- ''कालाध्वनो''रिति द्वितीया- अन्यत्सर्वं प्रारम्भस्तबके ''आन्दोळयित्री चिर''मित्यत्र निरूपितं विस्तरेण।

अध्यासीनां अधितिष्ठन्तीम्- ''अधि शीङ्स्थासा''मित्याधारस्य कर्मत्वम्- संश्रितानां उपासीनानाम्- अतुलं सर्वलोकातिशायित्वादसदृशम्- अमृतं निश्रेयसं- पक्षे- दुग्धम्- ''अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते। अयाचिते च मोक्षे च ना धन्वन्तरि देवयो''रिति मेदिनी। दुहानां ददानामिति यावत्- पक्षे स्वयमेव दोग्ध्रीमित्यर्थः- ''दुहिपच्योर्बहुळं सकर्मकयोरिति वाच्य''मिति दुहे स्सौकर्यातिशयविवक्षया कर्मकर्तरि तङि शानच्- ''न दुहस्नुनमां यक्चिणा''विति यको निषेधः- गूढार्थविवरणकारास्तु ''सुलभममृत''मिति पठित्वा ''अमृतं-सुलभं भक्तियोग श्रमं विना केवलनमनमात्रेणेत्यर्थः। अन्यत्र- अमृतं पयः- सुलभं दुहानां चरमचरण घाताद्युपद्रवलेशं विना स्वयमेव क्षरन्ती''मिति व्याचक्षते- अमृतं दुहानामित्यनेन- ''कामवत्साऽमृतं दुहाने''ति श्रुति वाक्यं प्रत्यभिज्ञाप्यते। नन्विदं श्रुतिवाक्यं श्रद्धाविषयम्- ''कामवत्साऽमृतं दुहाना श्रद्धा देवी प्रथमजा ऋतस्ये''ति श्रद्धासूक्तगतत्वात् कथं लक्ष्मीविषयकमिति चेन्न- अस्य सूक्तस्य लक्ष्मीविभूतिविशेषप्रतिपादकत्वेन लक्ष्मीविषयकताया एवाचार्यै श्चतुश्श्लोकीभाष्यादौ स्थापितत्वात्- ''श्रद्धया देवो देवत्वमश्नुते- अहं श्रद्धा च मेधा च- मेधा श्रद्धा सरस्वती''त्यादौ श्रिय एव श्रद्धा शब्देनाभिधानात्- तस्मिंश्च सूक्ते- ''विश्वस्य भर्त्री जगतः प्रतिष्ठा ताग्ं श्रद्धाग्ं हविषा यजामहे-सा नो लोकममृतं दधातु-ईशाना देवी भुवनस्याधि-पत्नी''- त्युच्यमानस्य विश्वभर्त्रीत्वजगत्प्रतिष्ठात्वामृतप्रदत्व भुवनेशानत्वादेर्लक्ष्म्यामेव संभावितस्य केवलश्रद्धायामसंभावितत्वाच्च- तस्मादुदाहृतं श्रुतिवाक्यं लक्ष्मीविषयकमेवेति न कश्चिद्विरोधः- क्षीराम्भोधेः- समुदितवतीं अवतीर्णाम्- समुत्पूर्वकादिणःक्तवतुः- इदमुभयत्रापि तुल्यम्- त्वाम्- कामधेनुं स्वर्गवीम्- ब्रूमहे- श्लेषोज्जीवितं समस्तवस्तुवृत्ति-सावयवरूपकम्- लक्ष्म्यां कामधेनुत्व रूपणस्य पूर्ववाक्यार्थसमर्थितत्वात्काव्यलिङ्गम्-

अथ लक्ष्म्या भगवद्वक्षस्थलावस्थानप्रयुक्तमुत्कर्षमाह। विश्वेति। वृजिनह्रासदः वृजिन शब्दोऽत्र पुण्यपापोभयरूपकर्मपरः- परमात्म प्रकरणेषु- "नैनगं सेतु महोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्त"- इति सुकृतेऽपि वृजिनसमानार्थकपाप्मशब्दप्रयोगात्- "पाप्मानः कालजरामृत्युशोकादयस्संख्या-तत्वा"दिति वाक्यकारवचनात्- अलौकिकत्वे सत्यनिष्टफलसाधनत्वरूपप्रवृत्ति निमित्तयोगात्पुण्यस्यापि पापशब्दाभिधेयत्वोपपत्तेः- "रम्याणि कामचाराणि विमानानि सभास्तथा। आक्रीडा विविधा राज न्पद्मिन्यश्चामलोदकाः। एते वै निरया स्तात स्थानस्य परमात्मन" इत्यादौ मुमुक्ष्वपेक्षया स्वर्गादीनामप्यनिष्टत्वस्मरणाच्च- ह्रास शब्दश्चात्रा श्लेषस्याप्युपलक्षकः। तदयमर्थः। वृजिनानां पुण्यपापरूपकर्मणां ह्रासं विनाशमश्लेषं च ददातीति तथोक्तः- "आतोऽनुपसर्ग" इति कः- "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य। तत्सुकृत दुष्कृते धूनते- तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवगं ह्यस्य सर्वे पाप्मानः प्रदूयन्ते- तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते- तस्यैवात्मपदवित्तं विदित्वा न कर्मणा लिप्यते पापकेन- तदधिगम उत्तर पूर्वाघयोरश्लेष विनाशौ तद्व्यपदेशा"दित्याद्युक्तरीत्या उपासीनानां विनाशिताश्लेषित पूर्वोत्तराघ इति। इदं च - "तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती" त्याद्युक्तरीत्या निखिलपापनिर्धूननपूर्वकपरमसाम्यप्रदातृत्वरूपमहामहिमानं व्यञ्जय-द्विवक्षितं भगवत स्सर्वलोकातीत्वमुत्तम्भयति। अत्र वृजिनह्रासदे इति संबुद्ध्यन्ततया गूढार्थविवरणकृतां पाठस्तदनुरोधि व्याख्यानं चोक्तवक्ष्यमाणस्वारस्याननुगुणत्वा द्वृत्त्यनुप्राससौन्दर्याधिक्येऽप्यस्माभि रुपेक्ष्यते।

वासुदेवः- भगवान् श्रीनिवासः- सर्वत्रासौ वसति सर्वमस्मिन्वसतीति वा-सर्वभूतानि स्वस्मिन् सवित्रीव वासयतीति वा वासुः- "वसनिवासे"- अस्मात्कर्तर्यधिकरणे वा बाहुलकादुण्- वसेर्णिजन्तात्- "शृस्पृहीत्यत्र चकारा द्वाहुलकाद्वा उप्रत्ययो वा। दीव्यतीति देवः- इगुपध लक्षणस्य कस्यापवादः पचादि पाठादच्- लघूपधगुणः- वासुश्चासौ देवश्चेति कर्मधारयः- यथाह्यसौ निरुच्यते- "सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः। ततस्स वासुदेवेति विद्वद्भिः परिकीर्तितः। सर्वभूतान्वासयति वासुस्स

''ईशावास्यमिदगं सर्वं यत्किञ्च जगत्यां जगत्। यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति। सर्वभूतेषु चात्मानं ततो न विजुगुप्सते। एको देव स्सर्वभूतेषु गूढ स्सर्वव्यापी सर्वभूतान्त-रात्मा। इन्द्रियाणि मनो बुद्धि स्सत्वं तेजो बलं धृतिः। वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञमेव चे''त्यादिप्रमाणान्यनुसंधेयानि। अनेनान्तर्यामित्व निरतिशयदीप्तिमत्त्वाभिधायिना कारणत्वमप्याक्षिप्तं भवति। ''तस्माद्वा एतस्मादात्मन आकाशस्संभूत'' इत्यादिना कारणत्वेन निर्दिष्टस्यैव-''तत्सृष्ट्वा-तदेवानुप्राविश'' दित्यादिनाऽन्तःप्रविश्य नियन्तृत्वा-भिधानात्-कण्ठतश्चोच्यते वासुदेवशब्दवाच्यस्य कारणत्वं पाद्मसंहितायां-''स वासुदेवो भगवान् सृष्टिस्थित्यन्तमुक्तिद'' इति। अतएव-विश्वं चेतनाचेतनात्मकमखिलं प्रपञ्चमतीतो विश्वातीतः- ''विश्वमशेषं कृत्स्न'' मित्यमरः- ''द्वितीयाश्रितातीते''ति समासः- सर्वलोक विलक्षणस्सन्नित्यर्थः- जयति उत्कर्षं प्राप्नोति- धात्वर्थ संगृहीत कर्मत्वेनाकर्मकत्वम्।

ततोऽप्युत्कर्षस्तवातिशेत इत्याह। पद्मे इति। हततमोराजसे- रज एव राजसं-राक्षस वायसादिवत्स्वार्थिकोऽण्- तमश्च राजसं च तमोराजसे- ते हते परिहृते यया-तस्यास्संबुद्धिः- उपासीनानामुत्तरोत्तरपापारम्भ निदानभूतरजस्तमोमूलभेदनपटीयसीति भावः- अनेन संबुद्ध्यन्तेन पदेन पूर्वोत्तराघ निर्धूननिपुणाद्भगवतोऽपि तादृशाघ-जननमूलभूतरजस्तमोहरणनिपुणतयाऽस्या महिमातिशयो निरतिशय इति सूचितम्- हे पद्मे-तवायम्- तावकीनः त्वदीयः- ''युष्मदस्मदो''रित्यादिना शैषिके खञि ''तवक ममकावेकवचने'' इति तवकादेशः- महतो भावः महिमा- महच्छब्दात्पृथ्वादित्वादिमनिच् ''टे''रिति टिलोपः। माहात्म्यम्- पूज्यत्व मित्यर्थः- तस्यापि उक्तरीत्या विश्वातीतस्य भगवतो वासुदेवस्यापि- उपरिभासते अतिशयिततया देदीप्यत इत्यर्थः। अत्र गूढार्थ विवरणकारैः ''विश्वातीतो जयति''- ''अन्तर्बहिश्च तत्सर्व''मित्युक्तप्रकारेण सर्वं जगद्व्याप्य सर्वोत्कृष्टो भवति- तावकीनः महिमा व्यापकत्वं तस्याप्युपरि भासते भगवद्व्यापकत्वमप्यत्येति- तदेवोपपादयति। क्षेत्रज्ञानामिती''ति व्याख्यातम्- तन्न सम्यक्-ग्रन्थकृतैव क्षेत्रज्ञानामित्यादिना ग्रन्थेन श्रियस्सकलचेतनहृदयान्तर्वर्तिवासुदेवहृदय-निवासप्रयुक्ततयैवोत्कर्षस्य कण्ठतः प्रतिपादितत्वेन तस्य व्यापकतामूलकत्वकथनासंगतेः।

उक्तमर्थं हेतुना निर्धारयति। क्षेत्रेति। कंजातं कंजं पद्मम्- कमिति मान्तमव्ययम्-''कं वारिणि च मुर्ध्नि चे'' त्यनुशासनात्- तत् नाभौ यस्य सः- गड्वादित्वान्नाभिशब्दस्य परनिपातः- ''अच्प्रत्यन्ववे'' त्यत्राजितियोग विभागात्समासान्तोऽच्- अनेन- ''अजात

पुष्कर पुष्कराक्षस्य तस्मै पद्मात्मने नमः'' इत्यादि तदुपबृंहणभूतश्रीविष्णुपुराणादिवचनैश्च प्रतिपन्नं सकलभुवन स्रष्टृचतुर्मुखजन्मसद्मभूत पद्मनाभत्वं सूचितम्-तेन च वासुदेवपदोपक्षिप्तं जगदेक कारणत्वं स्थूणानिखनन्यायेन स्थिरीक्रियते- क्षेत्रं जानन्तीति क्षेत्रज्ञाः प्रत्यगात्मनः ''इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते। एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विद'' इति गानात्- बहुवचनेन बद्धमुक्तनित्यसिद्धसर्वचेतनानां संग्रहः- तेषां- हृदयं अन्तःप्रदेशमिति यावत्- अनिशं सदा- अधिशेते- ''योयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिन्न् शेते'' इत्युक्तरीत्या क्षेत्रज्ञ हृदये शेते- न तु भवतीव तस्य हृदये चेतनावन निर्निद्रतया राजत इति भावः- वसतीति वास्तवार्थः- ''अधिशीङि''त्याधारस्य कर्मत्वम्- अनेन ''अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः। ईश्वर स्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। सर्वस्य चाहं हृदि संनिविष्टः'' इत्यादिश्रुतिस्मृतयः प्रत्यभिज्ञाप्यन्ते- पूर्वोक्तमन्तर्यामित्वं च दृढीक्रियते- त्वम्- ''ज्वलन्तीं तृप्ता''मिति श्रुत्युक्तप्रकारेण देदीप्यमानेति भावः- तस्यापि सर्वकारणस्य सर्वक्षेत्रज्ञहृदयेशयस्य भगवतोऽपि- हृदि हृदये- ''पद्दन्नि''त्यादिना हृदादेशः- वक्षसीति तु तत्त्वम्- ''हृदयं चित्तवक्षसो''रिति रत्नमाला- यत् यस्मात्- राजसे- ''अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः। ईशानो भूतभव्यस्य। अन्तश्शरीरे ज्योतिर्मयो हि शुभ्रः''- इत्याद्युक्तप्रकारेण सर्वान्तरात्मनो निरतिशयदीप्तिमतो वासुदेवशब्देन पूर्वं निर्दिष्टात् भगवतोऽप्यतिशयिततम दीप्तिमत्तयैव प्रकाशस इत्यर्थः-अत एव हि ''ज्योतिष्मत्यमृतावहा। महाभासा महानन्दे''त्याख्यायसे च नामसहस्रे- अन्यथा ''न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्नि''रित्युक्तप्रकारेण सर्वातिशायिदिव्यज्योतिषो भगवतो हृदयेऽपि कथं प्रकाशेथा इति भावः। यद्यपि हृततमोराजसे इत्येतत् हृदीत्येतद्विशेषणत्वे-नापि शक्यं योजयितुम्- अथाऽप्युक्तरीत्या भगवतोऽपि लक्ष्म्या अतिशयितमहिमवत्ता प्रकाशनलोभेनास्माभिः पद्मे इत्येतद्विशेषणतयैव योजितम्- गूढार्थविवरणकृतस्तु- हृततमः- अराजसे इति च्छित्वा- ''अराजसे परमसत्वसमाश्रये-हृदि-अनिशं- हृततमः अपहृततमो-गुणं यथातथा- राजसे- भगवदपृथक्सिद्धाया स्तव भगवदधिष्ठितसर्वाधिष्ठानं भगवदधिष्ठानं च वर्तत इति तद्व्यापकत्वमतिशेते त्वद्व्यापकत्वमिति भाव'' इति व्याचख्युः- तन्नातीव हृदयंगमं सहृदयानामिति प्रतिभाति।

अत्र विश्वस्मादपि वासुदेवस्य- तस्मादपि लक्ष्म्याश्चोत्कर्षवर्णनात्सारालंकारः।

व्यञ्जन पुनरुक्ति लक्षण वृत्त्यनुप्रासेन संकीर्यमाणः-श्रिय उत्कर्षस्य साध्यस्य-क्षेत्रज्ञ-हृदयशायिवासुदेवहृदयविभासुरत्वरूप साधनस्य च कथनादुन्मिषितेनानुमानालंकारेण च संकीर्यते- अनुमानालंकार लक्षण लक्ष्येतु काव्यदर्पणे। "अनुमानं तदुक्तंस्यात्साध्य साधनयो र्वचः। भुजारणौ प्रतापाग्नि र्ज्ञायते तेऽसिधूम्यये"ति। यस्य हेतुधर्मिण्य-योगव्यवच्छेदस्तत्साध्यम्-यस्य तु संदिग्ध साध्यवति पक्षे सत्त्वम्-निश्चितसाध्यवति सपक्षेऽन्वयस्सत्त्वम्- साध्याभाववति विपक्षे च व्यतिरेकोऽसत्त्वम् तत्साधनम्-तयोस्साध्य साधनयो र्यद्वचः- तदनुमानम्- यथा असि धूम्यारूपसाधनस्य प्रतापाग्निरूप-साध्यस्य चाभिधानम्- यद्यपि काव्यलिङ्गेऽपि- "जितोऽसि मन्दकन्दर्प! मच्चित्तेऽस्ति त्रिलोचन" इत्यादौ साध्यसाधननिर्देशोऽस्ति- तथाऽपि तत्र हेतुत्वमार्थम्- इह तु शाब्दमिति तत्रैव विवृतम्- एतेनात्र काव्यलिङ्गमिति गूढार्थविवरणादि व्याख्यानमचतुरश्रमेवेति वेदितव्यम्- अत्र साक्षाद्धेतु प्रतिपादक यच्छब्द श्रवणेन तदनवतारात्- अन्यत्तु- अस्मिन्नेव स्तबके फणिशैलपतेरिति श्लोकव्याख्यानावसरे निरूपितम्- प्रयोगस्तु- लक्ष्मीर्विश्वातीता-द्वासुदेवादप्यतिशयितमहिमवती- सकलक्षेत्रज्ञ हृदयेशयस्य तस्यापि हृदये भासमानत्वा-दिति। चतुर्थपादे राजसे राजस इत्यर्थभेदेन सस्वरव्यञ्जन पौनरुक्त्याद्यमकं च। अत्र श्रियो भगवदतिशायितया वर्णनम् "श्रियं त्वत्तोऽप्युच्चै र्वयमिह भणामश्शृणुतरा" मित्यादाविव प्रस्तुतलक्ष्मीवैभवातिशयप्रशंसापरमेव- न तु वस्तुतः- अन्यथा- "न तत्समश्चाभ्यधिकश्च दृश्यते। यस्मात्परं ना परमस्ति किंचित्- तमीश्वराणां परमं महेश्वरम्-क्षरात्मानावीशते देव एकः। एक इद्राजा जगतो बभूव-शास्ता चराचरस्यैकः-एकश्शास्ता न द्वितीयोऽस्ति शास्ता-न वासुदेवा त्परमस्ति किञ्चन। मत्तः परतरं नान्य" दित्यादिभगवदेकोत्कर्षप्रतिपादनपरपरस्सहस्रप्रमाणव्याकोपप्रसङ्गात्-"मच्छेष भूता सर्वेषा-मीश्वरी वल्लभा ममे"त्यादि विरोधप्रसङ्गाच्च-न हि शेषश्शेषिणमतिशेते- तथासति शेषत्वमेव न स्यात्- एवमेव सर्वत्राप्यूहनीयम्- अत एव- श्रिय उक्तविधमहिमसंबन्ध-कल्पनात्मकातिशयोक्त्युज्जीवितो हृदय शब्द प्रतिपाद्यार्थद्वय श्लेषभित्तिकाभेदाध्यवसाय-मूलकातिशयोक्त्युत्तम्भितश्च पूर्वोक्त स्सारालंकार इति ध्येयम्। श्लोकद्वयं मन्दाक्रान्ता-वृत्तम्॥11॥

मू. वीक्षन्ते ये वेंकटक्ष्माभृदिन्दो स्सूरस्थाने शोभमानामिह त्वाम्।
दुग्धोदन्वत्पत्रि दिव्यं पदं ते सूरस्थानं हन्त भित्वा विशन्ति॥ 12

इन्दुः- तत्र स्थितः- इन्दुत्वेनाध्यवसित श्श्रीनिवास इत्यर्थः- तस्य- अनया च गौण साध्यवसानलक्षणयाऽस्यापि सौम्यसुप्रसन्नत्वादि- तेन च लक्ष्म्यवस्थानानुरूपाधारत्वं व्यज्यते। शोभनं च तत्- उरश्च- "कुगतिप्रादय" इति समासः- तद्रूपे स्थाने प्रदेशे- सूरस्थाने इत्यत्र- "खपरे शरि वा विसर्गलोपो वक्तव्य" इति विसर्गलोपः- वक्ष्यमाण सूरस्थानशब्दार्थानुगुण्यात्- यद्वा- द्वितीयार्धे सूरस्स्थानमित्यत्र सूर्यस्थानरूपार्थे द्वितीय सकारस्य "अनचि चे"ति द्वित्वं संपाद्यार्थद्वयेऽपि शब्दावैरूप्यं निर्वोढव्यम्- शोभमानाम्- "धत्ते शोभां हरिमरतके तावकी मूर्तिराद्या तन्वी तुङ्गस्तनभरनता तप्त जाम्बूनदाभा"। इत्याद्युक्तप्रक्रियया नीलनीरदहृदये तटिल्लतामिव प्राप्तपरभागतया दीप्यमानाम्- त्वाम्- इह अस्मिन् लोके- "समे शुचौ शर्करवह्निवालुका विवर्जिते धूम जलाशयादिभिः। मनोऽनुकूलेन तु चक्षुपीडने गुहा निवाताश्रयणेन योजये"दित्युक्त प्रकारे यत्र क्वचिदनुकूलप्रदेश इति भावः। ये उपासकाः वीक्षन्ते- ईक्षितिरत्र "द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः- स वा एष एवं पश्यन्नेवं मन्वान" इत्यादौ दृशिरिव दर्शन समानाकारध्यान परः- वीत्युपसर्गोऽप्यत्रैवानुकूलः। दर्शन समानाकारतया ध्यायन्तीत्यर्थः। नन्वौपनिषदस्य परस्य ब्रह्मण श्रीनिवासस्य- "यत्तदद्रेश्यम्- अदृश्येऽनात्म्ये- न चक्षुषा गृह्यते"- इत्यादि श्रुतिभिरचाक्षुषत्वोक्तेः "द्रष्टव्य" इत्यादौ दृश्यादेर्दर्शनसमानाकार ध्यानपरत्वमेवास्तु युक्तम्- इह त्वर्चात्मनावतीर्णस्य वक्षसि देदीप्यमानाया अस्याश्चाक्षुषत्व संभवेन वीक्षतेस्तादृशध्यानपरताकल्पनं कुत इति चेत्- दर्शनमात्रेण वक्ष्यमाण सूर्यमण्डल भेदपूर्वक परमपदप्राप्तेरयोगा दभ्युपगमे- "भक्त्या परमया वाऽपि प्रपत्त्या वा महामुने। प्राप्योऽहं नान्यथा प्राप्य"- इत्यादि विरोधप्रसङ्गाच्चेत्यवधेहि। न चार्चोपासनेन नोक्तातिशयस्संभवतीति भ्रमितव्यम्- "सुरूपां प्रतिमां विष्णोः प्रसन्नवदनेक्षणाम्। कृत्वाऽत्मनः प्रीतिकरीं सुवर्णरजतादिभिः। तस्यां ब्रह्म समारोप्य मनसा तन्मयो भवेत्। तामर्चये त्तां प्रणमे त्तां यजे त्तां विचिन्तयेत्। विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणी" मित्यादि वचनैरर्चोपासनेनापि तत्संभवादित्यलम्- ते एव मुपासकाः- सूरस्थानं शोभमानं वक्षस्थानम्- भित्वा- पृथक्कृत्वा- हित्वेति यावत्- दिव्यं पदं विशन्ति- हन्त- "यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवती"त्युक्त यथाक्रतुन्यायेन सूरस्थान शोभमान लक्ष्म्युपासनेन परमपदेऽपि सूरस्थान शोभमानतायामेवावश्यं भाविन्यामपि तद्भेदेन दिव्यपद प्रवेशोऽत्याश्चर्यमिति भावः- सूरस्थानम्- सूर्यस्य भानोः स्थानं मण्डलम्- भित्वा निर्भिद्य- दिव्यं अप्राकृतम्- पदं वैष्णवं स्थानम्- "तद्विष्णोः परमं पदम्- योऽस्याध्यक्षः परमे

मुनिभिरभिवर्णितः- "एतैरेव रश्मिभिः पूर्वोक्तैरादित्यरश्मिभिः- स विद्वान्- ओम्- उदिति "ओम् तत्सदिति निर्देशो ब्रह्मण स्त्रिविधस्स्मृतः- तस्योदिति नामे" ति च परमात्मानमाह। आह कीर्तयति। कीर्तयन्नेव च मीयते प्रमीयते- अन्तकालेऽस्य भगवन्नामसंकीर्तनं भवति। यद्वा। एतैरेव रश्मिभिरुन्मीयते उन्नीयते च- एकः वा शब्दोऽवधारणार्थः- स यावत्क्षिप्येन्मन स्तावदादित्यं गच्छति। मनोवेगेनादित्यं गच्छतीत्यर्थः। न च स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छतीति त्वरावचनेन रश्म्यनुसारिमार्गस्य मार्गान्तर वैलक्षण्यप्रतीते र्मार्गभेदश्शङ्क्यः- "अर्चिरादिना तत्प्रथिते" रित्यधिकरणे नानाशाखासु तस्यैव मार्गस्य प्रथितेः प्रत्यभिज्ञाना दर्चिरादिरेक एव मार्गः- अतोऽर्चिरादिनैव मार्गेण विद्वान्गच्छतीति समर्थितत्वात्- स यावत्क्षिप्येन्मन इति त्वरावचनस्य काश्मीरापेक्षया मगधान् क्षिप्रं गच्छतीतिवद् गन्तव्य स्वर्गाद्यपेक्षयाऽदित्यगमनस्य शैघ्र्येणाप्युपपत्तेर्न दोषः। एतदित्यादि- विदुषां ब्रह्मलोकस्य द्वारं प्रपदनम्- प्रपद्यतेऽनेनेति प्रपदनं प्राप्तिसाधनम्- य आदित्यः- द्वारापेक्षया नपुंसक निर्देशः- अविदुषां च निरोधकः- अविद्वांसो हि सूर्यमण्डलभेदासामर्थ्यान्न गन्तुं शक्नुवन्तीत्यर्थ" इति। अत्र "सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृत स्स पुरुषो ह्यव्ययात्मे" त्याथर्वणादि श्रुतयः- "ऊर्ध्वमेक स्थितस्तेषां यो भित्वा सूर्यमण्डलम्। ब्रह्मलोक मतिक्रम्य ते न यान्ति परांगतिम्। "द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ। सूर्यद्वारेण ते यान्ति पुरुषं विश्वतोमुख" मित्यादि स्मृतय श्चानुसंधेयाः- यद्वा- सूरस्थानं- भित्वा अभिव्याप्य- तेन सह संयुज्येति यावत्- भिदेरीदृशार्थकत्वं तु- "एकत्र स्फटिकतटांशुभिन्ननीराः- भिन्नेषु रत्नकिरणैः- संध्यांशुभिन्नघनकर्बुरितान्तरिक्ष- लक्ष्मीविडम्बी" त्यादौ प्रसिद्धम्- दिव्यं पदं विशन्तीति योजना- वास्तवार्थस्तु यथा पूर्ववदेव। अथवा। वेङ्कटक्ष्माभृदिन्दोरित्येत दुत्तरार्धेऽप्यन्वेति। इह लोके- वेङ्कटक्ष्माभृदिन्दो स्सूरस्थाने शोभमानां त्वां ये पश्यन्ति- ते- वेङ्कटक्ष्माभृदिन्दोः- दिव्यं अतिरमणीयम् "दिव्यं वल्गु लवङ्गयो" रिति हेमचन्द्रः- पदं पदनीयम्- उपासनानुगुणमवश्यं गम्यम्- सूरस्थानं शोभमानं वक्षस्थलम्- भित्वा अभिव्याप्य- विशन्ति निविशन्ते- यथाक्रतुनयेन वेङ्कटक्ष्माभृदिन्दुसूरस्थानशोभमानाया भवत्या उपासनेन तादृशसूरस्थानमेवाभिव्याप्य तत्रैव निविशन्त इत्यर्थः- त्वत्सायुज्यं प्राप्नुवन्तीति भावः। वास्तवार्थस्तु- वेङ्कटक्ष्माभृदिन्दोः- दिव्यं-दिवि भवम्- पदं पदनीयं आश्रयभूतम्- सूरस्थानं सूर्यमण्डलम्- "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते- नित्यश्रीर्ब्रध्नबिम्बे स्थित इति स य इत्युक्त एवैष एक" इत्यादिभिस्तत्रापि श्रीनिवास सांनिध्याभिधानात्- भित्वा निर्भिद्य विशन्ति- भिदि विशोरुभयोरपि सूरस्थानमेव कर्म-

“देवानामेव महिमानं गत्वाऽदित्यस्य सायुज्यं गच्छती” त्यत्रेव सूर्यसायुज्यप्राप्तिपूर्वकं परमं पदं प्रविशन्तीत्यर्थ एव ग्राह्यः- हन्तेत्युपायफलयोरानुरूप्यपरिचिन्तन जनितहर्षे।

ननु मोक्षप्रदत्वं भगवत एव सर्वत्र स्थापितम्- श्री सात्वते च स्वस्य मोक्षप्रदत्वम्- अन्येषां देवानामैश्वर्यप्रदत्वं च विभज्योक्तम्-तदत्र लक्ष्म्या मुक्तैश्वर्य प्रापकत्ववचनं प्रशंसा परमेव स्यादिति चेन्मैवम्- “यामालम्ब्य सुखेनेमं दुस्तरं हि गुणोदधिम्। निस्तरन्त्यचिरेणैव व्यक्तं ध्यानपरायणा- इति बन्धहेतुभूत गुणोदधि निस्तरणकारणत्वेन लक्ष्मीसमाश्रयणस्य प्रतिपादनात्। उक्तं च स्वयंभुवा। “सर्वकामप्रदां रम्यां संसारार्णवतारणीम्। क्षिप्र-प्रसादिनीं देवीं शरण्यामनुचिन्तये” दिति। ब्राह्मे च पुराणे तन्नामान्येवं पठ्यन्ते। “सकृद्विभाता सर्वार्तिसमुद्रपरिशोषिणी। भवभङ्गापहारिणी। परनिर्वाणदायिनी। ज्योतिष्मत्यमृतावहे” ति। वैष्णवे च। “आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी” ति। अत्र विमुक्तिफलदायित्वस्यात्मविद्याविशेषणत्वेऽपि तादृशविद्यायास्तदधीनत्वोक्त्या प्रकृतसिद्धिः मोक्षहेतुभूतात्मगुणसिद्धिश्च तदधीनेति तत्र तत्रोक्तम्- एवं स्थिते गद्यारम्भोक्त-न्यायेन मोक्षोपाय तदधिकारयोस्तावदेतन्मूलत्वं दुरपह्नवम्- मोक्षप्रदे भगवति मुमुक्षूणां घटकतयैषा तिष्ठतीति च सर्वसंमतम्- परिपूर्णानुभव प्रदानसंकल्पस्तु भगवत स्स्वस्यैव वा सपत्नीकस्य वेति यथा प्रमाणं भवतु। सर्वदा परमपद प्रवेशदायित्वमस्या इहोच्यमानं न विरुद्धमिति विभावनीयम्- एतच्च “जीवं जीवं प्रत्युदारा” मित्यादि श्लोक व्याख्यानावसरे तत्र तत्र निरूपितमस्माभिस्तन्न विस्मर्तव्यम्- वीक्षन्त इत्यस्य केवलचाक्षुष दर्शनार्थकत्वे- “ओम् नमो वेङ्कटेशायेत्यष्टाक्षरमूलमन्त्रोपासकः। श्रीवेङ्कटेश सकृद्दर्शन पर श्श्रीवैकुण्ठं भुवन मेकस्मिन्नेव जन्मनि गमिष्यतीति” श्रीवेङ्कटेशोत्तरतापिनीयोक्तप्रकारेण तदुरस्थल शोभमानायास्तदनपायिन्याः श्रियो दर्शनेनापि सूरस्थानं भित्वा दिव्यं पदं प्रविशन्तीत्यर्थो वर्णनीयः। इदं दर्शनस्य मुक्त्युपायत्वं च परंपरयैव न तु साक्षात्-भक्तिप्रपत्ति व्यतिरिक्तस्य साक्षान्मोक्षोपायतानङ्गीकारात्- अत्र सूरस्थानमित्यत्र पदभङ्गेनार्थ द्वयप्रतीते र्जतुकाष्ठव च्छब्दयोरेव मिथश्श्लिष्टत्वाच्छब्दश्लेषः- तदुज्जीविता च शोभमानोरस्थान-सूर्यमण्डलरूपार्थद्वयाभेदाध्यवसायमूलकातिशयोक्तिः- सूरस्थानशोभमानां श्रियमुपासीनानां सूरस्थानशोभमानावश्यंभावेऽपि तद्विरुद्ध सूरस्थानभेदपूर्वक परमपद प्राप्ति वर्णनाद्विरोधा-भासोऽलंकारः उक्तातिशयोक्तिप्रसादासादितवैभव इति संकरः। व्याख्यान्तर पक्षे त्वनुरूप-वस्तु वर्णनात्मक स्समालंकार इति दिक्। यत्तु यस्मिन्नुरस्थले त्वां वीक्षन्ते तदुरस्थानं

मू॰ बलिवसुमुषः श्रीमदुच्चोरस्थलमुपेत्य कमले त्वम्।
अस्माकमपथगानां हरसे चिरकालसंचितानर्थान्। 13

नन्वस्तु नाम श्रीनिवासहृदयनिलयां मामुपासीनानां मुक्त्यैश्वर्यलाभ स्तावता कि मायातं सततमपि कदध्वनैव संचरमाणस्य तवेत्यत आह। बलीति। हे कमले- त्वम्- बलि वैरोचनिः- "बलिः पूजोपहारे च करे दैत्यान्तरेऽपि" चेति रत्नमाला, तस्य वसूनि संपदो मुष्णातीति तथोक्तस्य- मुष्णातेः क्विप्- वामनत्वेनावतीर्य पदत्रयमात्रधरित्रीभिक्षा-व्याजेनापचित वदान्यदानवत्रिभुवनैश्वर्यस्य भगवत इत्यर्थः। अन्यत्र- बलं सामर्थ्यं सैन्यं वाऽस्यास्तीति बली- प्रशंसाया मतिशायने भूम्नि नित्ययोगे वा मत्वर्थीय इनिः- "स्थौल्य सामर्थ्यसैन्येषु बल"मित्यमरः- तस्य- इतरदुरासदस्य कस्यचिद्विक्रान्तस्येत्यर्थः- वसूनि धनानि रत्नादीनि मुष्णातीति तथोक्तस्य- परास्कन्दिसार्वभौमस्येति यावत्- "देव भेदेऽनले रश्मौ वसू रत्ने धने वस्वि"त्यमरः- अनेन तत्साहसभूमा निरवधिक इति द्योत्यते। उच्चं "महोरस्को महेष्वासः- व्यूढोरस्को महाबाहुः" इत्याद्युक्तरीत्या पीनोन्नतम्- उरस्थलं वक्षः प्रदेशं-पक्षे-उन्नद्धाः चोराः-यस्मिंस्तत्-उच्चोरम्-"प्रादिभ्यो धातुजस्ये"त्यादिना बहुव्रीहि-रुत्तरपदलोपश्च-तादृशं-यत् स्थलम्-तत्-उच्चोरस्थलमित्यत्रार्थद्वयानुगुण्याय पूर्वश्लोकस्थ सूरस्थान शब्द इवोरश्शब्द पक्षे-"खर्परे शरि वे"ति वैकल्पिक विसर्गलोपो वा- चोरशब्द-पक्षे "अनचि चे"ति द्वित्वं वा यथोचितं ग्राह्यम्- चोरशिरोमणिस्वामिकं तादृशसहायभूत चोरनिबिडितं च प्रदेशमित्यर्थः। अनेन स्व निरासक नरान्तर दुरासदत्वं द्योत्यते। उपेत्य आसाद्य- उपेत्युपसर्गेण सामीप्यद्योतकेन तत्र स्थितावनवधानलेशोऽपि सर्वात्मना व्यावर्त्यते। न पन्थाः अपथम्- तद्गच्छन्तीत्यपथगाः-तेषाम्-नञत्र विरोधार्थकः- यदाहुः- "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाष्षट् प्रकीर्तिता" इति। "पथो विभाषे"ति टचि-"अपथं नपुंसकमिति नपुंसकत्वम्-"अन्यत्रापि दृश्यत" इति गमेर्डः। "अपन्था स्त्वपथं तुल्ये" इत्यमरः।

अनादि पापवासनाविशेषोन्मिषितविषय प्रावण्येन "तस्माच्छास्त्रं प्रमाणं ते" "श्रुतिस्मृतिर्ममैवाज्ञे"त्यादिस्मृतिसिद्ध भगवदाज्ञारूपशास्त्रलक्षणम्-"मन्त्रेषु कर्माणि कवयोयान्यपश्यं स्तानि त्रेतायां बहुधा संततानि। तान्याचरत नियतं सत्यकामा एष वः पन्था स्सुकृतस्य लोके" इत्यादिशास्त्रचोदितकर्मानुष्ठानलक्षणम्- "येनास्य पितरो याता येन याताः पितामहाः। तेन यायात्सतां मार्गं तेन गच्छन्न रिष्यती" त्याद्युक्तं कुलपरंपराप्राप्त

अपथगानां-नञत्रा प्राशस्त्यार्थकः अल्पार्थको वा-प्रमादवशेन महापथात्परिभ्रश्य-मनुजान्तरवदनदर्शनदवीयस्तया तरुलतागुल्मकण्टकशर्करादिकर्कशतयाऽतितरामप्रशस्त-मल्पीयांसं वा यं कंचिन्मार्गाभासं प्रविष्टानां तत्रैव मोमुह्यमानानामिति भावः। अस्माकं-प्राकृतजनमात्रमैत्रीवैशसेनाविदितपरावरयाथात्म्यानां दुश्चरितादजुगुप्समानानां प्रत्युत ग्राम्य सूकरादीनामिव दुर्विषयानेव भोग्यतया स्वीकुर्वाणानां चेति भावः। बहुवचनेन नाहमेक एवेदृश, स्सन्त्यन्येऽपि मदीया मत्तुल्या मत्तोऽप्यतिशयिताश्च भूयांस इति ध्वन्यते। पक्षे-पथिकानामित्यर्थो गम्यते। प्रकृतार्थे चिरकालसंचितानर्थानिति समस्तं पदम्- चिरकालेन संचिताः-ये-अनर्थाः-"अहं ममेत्यसद्ग्राहः-अनात्मन्यात्मबुद्धि र्या अस्वे स्वमिति या मतिः। संसारतरुसंभूतिबीज मेतद्द्विधा स्थितम्-द्व्यक्षरस्तु भवेन्मृत्युः-ममेति द्व्यक्षरो मृत्युः-काम एष क्रोध एष रजोगुणसमुद्भवः। महाशनो महापाप्मा विद्ध्येनमिह वैरिण"मित्याद्युक्तप्रकारेणाहंकार ममकार बीजाङ्कूरितसंसार विषतरु शाखोपशाखायमाना-न्कामक्रोधाद्यनर्थानसह्यापचारपर्यन्तान् प्रहर्षात् यत्रक्वापीश्वरेच्छया कर्मभिर्भ्राम्यमाणा यादृच्छिकादिसुकृतपरिपाक वशा दिदानीमेतानेवान्वेषमाणाया मम कटाक्षविषयतामागता इत्यानन्दातिरेकादिति भावः। हरसे निराकुरुषे-अनर्थहरणक्रियाफलस्य लक्ष्म्यभिप्राय-कत्वेनात्मनेपदम्- अनेन पारतन्त्र्यपराकाष्ठा व्यञ्जिता। अन्यत्र- चिरकालसंचितान्-अर्थानिति व्यस्तं पदद्वयम्- चिरकाल संचितान्- भूयसा कालेन "क्षणशः कणश्चैव विद्यामर्थं च साधये"दित्युक्तनीत्या सतृणमतिलोभेन संपादितानिति भावः- अर्थान् धनानि-प्रहर्षात्-दैववशादिमे मोषणायैव प्रतीक्षमाणाया मम विषयं प्रविष्टा इति प्रमोदातिरेका-दित्यर्थः- हरसे मुष्णासीत्यर्थः- प्रमोषणफलस्य चौरीगामित्वादात्मनेपदम्।

अत्र विश्वातीत इति श्लोके वासुदेवादिशब्दैः प्राप्यस्य ब्रह्मण स्स्वरूपम्-क्षेत्रज्ञानामित्यनेन प्राप्तुः प्रत्यगात्मनस्स्वरूपम्- अनन्तरश्लोके वीक्षन्त इत्यादिना प्राप्त्युपाय स्वरूपम्- दिव्यं पदमित्यादिना फलस्वरूपम्- अस्मिन् श्लोके- अपथगानां चिरकाल संचितानर्थानिति विरोधिस्वरूपं च क्रमेणोपक्षिप्तमिति वेदितव्यमर्थपञ्चकतत्त्वज्ञैः-तदुक्तम्- "प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः। प्राप्त्युपायः फलं प्राप्तेस्तथा प्राप्ति-विरोधि च। वदन्ति सकला वेदा स्सेतिहासपुराणकाः। ऋषयश्च महात्मानो वेदवेदाङ्ग-पारगा" इति। अत्र वर्णनीये लक्ष्मीवृत्तान्ते विशेषणसाम्यात् अप्रस्तुतमहाप्रतिरोधिनी-वृत्तान्त प्रतीते स्समासोक्तिः। पाश्चात्यस्य समालंकारलेखनं तु [illegible]। पदार्थ

मोपला दर्शितस्वयथुचाभवत्तमः दृष्टयस्तिमिरजं सिषेविरे दोषमोषधिपतेरसंनिधा'' वित्यादावित्रापि श्लिष्टविशेषणसाम्यात् समासोक्तेरुद्भटत्वात्-ईदृशस्थले ध्वनित्वाभ्युपगमे च- ''अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः'' इत्यादिश्लिष्टविशेषण साम्यमूलक-समासोक्तयो निरालम्बना एव स्युः- अत उक्तरीत्या समासोक्तिवर्णनमेव सुन्दरम्- गीतिर्नाम मात्रावृत्तम् ॥13॥

**मू. शशिरेखा भवती च श्रीरब्धे रुद्गते तयोराद्या।**
**धारयति कृष्णमन्तः कृष्णेनान्तस्तु धार्यते च रमा॥ 14**

अथ- ''अप्येकगर्भजा लोके दृश्यन्तेऽतिविलक्षणाः। न ह्येकगर्भजन्यत्वं गुणसाम्ये प्रयोजकम्। अप्येकोदरजेष्वेव कश्चिद्धन्यो भवेन्नरः। दीनः कश्चित्सुधीः कश्चि द्भवेद्भाग्यानुसारत''- इत्याद्युक्तरीत्या एकस्मिन्नेव दुग्धाम्बुधौ जातयोरपि चन्द्ररेखा महालक्ष्म्योः कृष्णध्यातृत्व तद्ध्येयत्वाभ्यां तदाधाराधेयभावाभ्यां चास्ति वैलक्षण्यमिति प्रदर्शयन् श्रियो भगवद्वक्षस्थलावस्थानमेव भङ्ग्यन्तरेणाह। शशीति। हे श्रीः- ''नेयङुवङि''त्यादिना नदीसंज्ञानिषेधान्न संबुद्धि ह्रस्वः- शशिरेखा चन्द्रकळा- ''रेखा स्यादल्पके च्छद्मन्याभोगोल्लेखयोरपी''ति हेमचन्द्रः- भवती च- अब्धेः- उद्गते उद्भूते- इत्युभयोस्साधर्म्यमुक्तम्- अथ वैधर्म्यमाह। तयोरिति। सा च भवती च ते त्यदादित्वा त्पूर्वैकशेषः। न च ''त्यदादीनां मिथस्सहोक्तौ यत्परं तच्छिष्यत'' इत्यनुशासनान्नपूर्वैक शेष स्संभवतीति भ्रमितव्यम्- ''पूर्वशेषोऽपि दृश्यत'' इति भाष्यात्- ''स च यश्च ता'' वित्युदाहरणाच्च-तयोर्मध्ये-निर्धारणे षष्ठी-सप्तमी वा-आदौ भवा आद्या-दिगादित्वाद्यत्-उद्देशक्रमे प्राथमिकी शशिरेखेत्यर्थः- कृष्णं श्रीविष्णुम्- अन्तः दहरपुण्डरीके- धारयति धारणापूर्वकं ध्यायतीत्यर्थः। धारणा नाम हृत्पुण्डरीकादौ चित्तस्य चिरकालं स्थापनम्-तदेतत्सूत्रितं भगवता पतञ्जलिना- ''देशबन्ध श्चित्तस्य धारणे''ति- अत्रभाष्यम्- ''नाभि चक्रे हृदयपुण्डरीके मूर्ध्नि ज्योतिषि नासिकाग्रे जिह्वाग्र इत्येवमादिदेशेषु बाह्ये वा विषये चित्तवृत्तिमात्रेण बन्ध इति बन्धो धारणे''ति। चित्तस्य बन्धो नाम विषयान्तरपरिहारेण स्थिरीकरणम्- वैष्णवे चोक्तम्- ''प्राणायामेन पवनं प्रत्याहारेण चेन्द्रियम्। वशीकृत्य ततः कुर्याच्चित्तस्थानं शुभाश्रये। मूर्तं भगवतो रूपं सर्वोपाश्रयनिस्पृहम्। एषा वै धारणा ज्ञेया यच्चित्तं तत्र धार्यते'' इत्यादि।

लक्ष्म तवाङ्के शशसन्निभ''मिति- यद्यप्यत्र वचने चन्द्रमसो भूच्छायरूप शशाङ्कत्वमुच्यते- न तु कृष्णमृगाङ्कत्वम्- तथाऽपि चन्द्रे शशिकृष्ण मृगयोरैक्यस्य कविसमयक्षुण्णत्वादिदं वचन मत्रोदाहरणतामर्हत्येव। तथा च काव्यानु-शासने वाग्भट सूत्रम्- ''चन्द्रे शशिमृगयो'' रिति। वक्ष्यमाण सूत्रस्थेनैक्यमित्यनेन संबन्धः। शशमृगयोरैक्यं कविसमयसिद्धमिति तदर्थः। अन्तः मध्यप्रदेशे- धारयति दधातीत्यर्थः। ननु जलनिधिकृतजन्मनि कलामात्रे चन्द्रमसि कथं कलङ्कसंभवः- प्रादुर्भावस्तबके- ''विश्वासेचनक''मिति श्लोके तस्य निष्कलङ्कताया एव स्थापितत्वादितिचे छ्रूयताम्- ''चन्द्रमा मनसो जात'' इति श्रुत्युक्तरीत्या आदौ भगवन्मानसाज्जातस्य शीतरश्मेर्द्वौ देहौ- तत्रैकोऽब्धिजन्मा पुरारातिशिरोभूषणम्- अन्यस्त्वत्रि नेत्रादुदितो लोका यात्रा नियुक्त इति प्रादुर्भवस्तबके ''त्वयोज्ज्वलदुग्ध- पयोधी''ति श्लोके न्यरूपयाम- अत्र तयोरैक्यानुसंधानेन कलङ्कवत्त्वोक्तिरिति न कश्चिद्विरोधः- ईदृशं चैक्यानुसंधानं महाकविसमय संप्रतिपन्नम्- तथा च काव्यानुशासन सूत्रम्- ''समुद्रात्रिनेत्रसमुत्पन्नयोश्चन्द्रयो''रिति। ऐक्यमिति वक्ष्यमाणेन संबन्धः। अनयोश्चन्द्रयोरैक्यं कविसमय सिद्धमिति तदर्थः। अतएव चन्द्रोदय वर्णनावसरे- ''मदयति यदुत्पन्नो दुग्धाम्बुधेरयमम्बुधिं नयति नयनादत्रेर्जातो मुदं नयनानि नः'' इति मुरारिमिश्रस्य तयोरभेद वर्णनं च संगच्छते। चरमा अन्तिमा भवती तु- ''अन्तो जघन्यं चरम''मित्यमरः- कृष्णेन शान्तिधनस्वान्तसन्तत चिन्तनीयकान्ततम दिव्यमङ्गळविग्रहेण भगवता श्रीनिवासेन- अन्तः-हृदयपुण्डरीके-धार्यते-धारणा पूर्वकं संचिन्त्यते-धारयतेः कर्मणि लट्-सकलयोगि- कुलसाधारण्येन कृष्णमन्तर्धारयन्त्या श्चन्द्रकळाया अपि सकलयोगिविचिन्तनीयशुभाश्रयेण कृष्णेनैवान्तर्ध्रियमाणाया स्तव महिमा वैभवं दूरे वाचामिति भावः। पक्षे- प्रकृत- स्तबकानुरोधेन वक्षसि ध्रियत इत्यर्थस्तु स्पष्ट एव। अत्रोपमानतया विवक्षिताया अन्तः कृष्णं धारयित्र्या श्चन्द्रकलाया अपि लक्ष्म्या अन्तस्तेन ध्रियमाणत्वेन रूपेणाधिक्य- वर्णनादुपमेयाधिक्यपर्यवसायी व्यतिरेकालंकारः। तथा च सूत्रम्- ''भेदप्राधान्ये उपमानादुपमेयस्याधिक्ये विपर्यये वा व्यतिरेक'' इति। ''भेदो वैलक्षण्यम्- स च द्विधा भवति। उपमानादुपमेयस्याधिकगुणत्वे विपर्यये वा भावात्। विपर्ययो न्यूनगुणत्व''मिति सूत्रार्थः। अयं चालंकारः कृष्णादिशब्दवाच्यार्थद्वयश्लेष भित्तिकाभेदाध्यवसाय- मूलकातिशयोक्त्युत्तम्भित इति संकरः। गूढार्थविवरणे तु। ''शशिरेखा-भवती च- अब्धेः शयनस्थलतयाऽन्तः कृष्णं दधानात्- ''कुक्षौ समुद्राश्चत्वार'' इत्युक्तरीत्याऽन्तः

स्सारूप्यवर्णना त्समालंकार'' इति व्याचख्ये- प्रतीच्यस्तु- ''अत्र श्लेषेण-चेत्यपरं-रमा धार्यत इत्यर्थान्तर''मिति व्याचख्यौ- तादृशश्लेषस्यात्र निष्प्रयोजनत्वात्तदनादर एव युक्तः ॥14॥

**मू. वनमालायामुषितां विश्वविभो र्भुजतमालविटपान्तः ।**
**कामपि कनकलतां त्वां कलशाकूपारकन्यके मन्ये ॥ 15**

भगवदुरसि कृतावस्थानां तामेव प्रकारान्तरेण वर्णयति। वनेति। हे कलशा-कूपारकन्यके- विश्वविभोः- ''पतिं विश्वस्ये''त्यादि श्रुतिभिः- ''राजराजोऽखिलस्यास्य विश्वस्य परमेश्वर'' इत्यादिभगवच्छास्त्रवचनैश्च प्रख्यापित सर्वलोकैश्वर्यस्य भगवत एव कस्यचित्सार्वभौमस्येति श्लिष्टरूपकम्- भुजा एव-तमालविटपाः तापिञ्छशाखाः- ''कालस्कन्ध स्तमाल स्स्या''दित्यमरः। ''शाखायां पल्लवे स्तम्बे विस्तारे विटपोऽस्त्रियाम्। विटपः पल्लवे स्तम्बे विस्तारे विटपोऽस्त्रिया''मिति रभसहेमचन्द्रौ। तेषाम्- अन्तः मध्यदेशे- अन्तरित्यधिकरणशक्तिप्रधानमव्ययम्-षष्ठीसमासः- ''पूरणगुणे''त्यादिना अव्ययेन षष्ठीसमास निषेधस्तु पूर्वोत्तरसाहचर्यात्कृदव्ययविषय एवेत्यकृदव्ययेनान्तश्शब्देन समासो न विरुध्यते। शौण्डादिष्वन्तश्शब्दपाठा त्सप्तमीसमासो वा। एतच्च पूर्वस्मिन् स्तबके षोडशश्लोके सुरतरुच्छटान्तरित्यस्य व्याख्यानावसरेऽन्यत्र च सम्यङ्निरूपित-मस्माभिः। अत एव- ''ते नारिकेळान्तरपः पिबन्त'' इत्यादयः प्रयोगा निर्विचित्साः- वनमाला ''पञ्चरूपा तु या माला वैजयन्ती गदाभृतः। सा भूतहेतुसंघातो भूतमूला च वै द्विजे''त्यस्त्रभूषणाध्यायोक्त स्वरूपा वैजयन्त्याख्या माला-''सा भूतहेतूनां पञ्चतन्मात्राणाम्-संघातः पङ्क्ति-भूतमाला च महाभूतपंक्तिश्च-सूक्ष्मस्थूलभूतमयीत्यर्थः-कृष्णशुक्ललोहित पीतश्यामाः पृथिव्यादय इति भूतमालायाः पाञ्चरूप्यमिति तद्व्याख्यानम्- वनमालैव वनमाला उद्यानपंक्तिः- ''मालमुन्नतभूर्माला पंक्तौ पुष्पादिदामिनी''ति रत्नमाला-तस्यां- उषितां कृतनिवासाम्- ''वस निवासे'' अस्मात्- ''गत्यर्थाकर्मके''त्यादिना कर्तरि क्तः- ''वसति क्षुधो'' रितीट्- ''वचिस्वपि यजादीनां चे''ति संप्रसारणे- ''शासि वसि घसीनां चे''ति षत्वम्-त्वाम्- कामपि लोकविलक्षण[illegible]- कनकलतां चम्पकलताम्- कामपीत्यनेन कुसुममात्रस्वर्णवर्णचम्पकलतापेक्षया ''हि[illegible]ण्यवर्णां हरिणी''मिति श्रुतस्वर्णप्रभारुचिर सर्वदिव्यविग्रहत्वेन श्रीरूपकनकवल्ल्या वैलक्षण्यं बोध्यम्- [illegible]- सुवर्णमयीं लतामित्यर्थः। अस्मिन्पक्षे कामपीत्यनेन चेतनत्व नित्यसुकुमारत्व सुरभिळत्वादिभि वैलक्षण्यं ज्ञेयम्-

संभावनां चेदभिसंदध्या त्तदा- उक्तविषयायां स्वरूपोत्प्रेक्षायां विश्रान्तिरित्युभयथाऽपि संभवादनयो स्संदेहसंकरः। उत्प्रेक्षापक्षे भुजतमालविटपान्तरित्यादिरूपकोज्जीवितत्वेन तयोरङ्गाङ्गिभावसंकरः। प्रतीचीनस्तु। वनमालया प्रमुषितां विश्वविभोर्भुजलतैक विटपान्त''रिति पठन्- तदनुगुणं व्याचख्यौ- तन्न समञ्जसम्- वर्णनीयायाश्श्रियो वनमाला-प्रमुषितत्वे- एतावता प्रबन्धेनोपपादितस्य तस्या भगवद्वक्षःपरिष्करणवैभवस्यैव प्रमुषितत्वापातेनापकर्षप्रसङ्गात्- भुजलतैकेत्यत्रैकशब्दस्य निष्प्रयोजनत्वाद्भुजानां केवल लतात्वेन रूपेण लक्ष्म्या उक्तपरभागातिशयसौष्ठवहान्यापत्तेश्च-यदपि- ''अत्र विश्वविभोरिन्द्रनीलविटपस्ये''ति पाठे कल्पिते विच्छित्ति विशेष इत्यभिधाय यथाविटपोऽस्त्यस्य विटपः- अर्श आद्यच्- इन्द्रनीलमयवृक्षसंबन्धिनीं कनकलतां मन्ये'' इति व्याख्यातम्- तदपि न सम्यक्- क्लुप्ते कल्पनस्यायुक्तत्वा त्तथाकल्पनेऽनवस्थापत्तेश्च-यच्चान्यत्- ''इन्द्र आत्मा नीलः विटपो जारवर्यश्च- तस्येति प्रलपितं तेनैव- तदपि सहृदय हृदयोद्वेगदायित्वान्न सम्मन्यन्ते परीक्षका इत्यलम्॥15॥

**मू. परमतुलसीतमनघे वनमालाप्तं सुलक्ष्मणाकलितम्।**
**कलयसि सद्द्रूपयुतं कमले वक्षो हरेर्महारामम्॥ 16**

अथ भगवद्वक्षसो लक्ष्मीविहारोद्यानतामभिसंदधान आह। परमेति। हे अनघे- अविद्यमानं अघं यस्यास्सेति विग्रहः- सर्वाघनिरासिनीत्यर्थः- ''सर्वार्तिसमुद्रपरिशोषिणी-पावनी पापनाशिनी- अनघा सारणी धीरे''ति तन्नामसहस्रे पाठात्- कमलमालयत्वेन हस्ताभरणत्वेन वास्तीति कमला- अर्शआदित्वादच्- तस्यास्संबुद्धिः- पापार्ति निवर्तकत्वाभिधायिना विशेषणेन सौरभ्यरामणीयकाभिव्यञ्जकेन विशेष्येण च- ''हरिर्हरति पापानि- हरणात्सर्वदुःखानां हरिरित्यभिधीयते- मनोनयनहारित्वात्पश्यतां हरिरुच्यते'' इति निरुक्तरीत्या सर्वपापार्तिनिवर्तकत्व-पश्यन्मनोनयनहारित्वरूपप्रवृत्तिनिमित्तशालिना हरिशब्देनात्र निर्देक्ष्यमाणस्य भगवतो दिव्यतुलसीवनमालादिसुरभिळे नैसर्गिकरामणीयक-सुभगं भावुके वक्षसि विहर्तुमुचितत्वमस्या द्योत्यते- परमया सर्वसुगन्धिद्रव्यातिशायिन्या-तुलस्या प्रसिद्धया- इतं अन्वितम्- ''इण् गतौ'' कर्मणि क्तः- वनमालायाः पञ्चवर्णाया वैजयन्त्याख्यमालिकायाः- आप्तं प्रत्ययितं मित्रभूतं तत्सहितमिति यावत्। ''आप्तप्रत्ययितौ समा''वित्यमरः- आभ्यां विशेषणाभ्यां सौरभ्यनैयत्यं सूचितम्- शोभनं च तत् लक्ष्म च-

हरेर्नित्यविभूषणम्। प्रणम्यात्मीयमन्त्रेण ध्यायेत्प्रमुखतो हरेः। पञ्चवर्णामपि पुरो वनमालां गदाभृतः। वैजयन्तीं मृदुतनुं श्रियं मूर्तिमतीमिव। यां वदन्ति पुराणज्ञा भूतमालां मनीषिणः। आधारभूतां भूतानां तां स्वमन्त्रेण संस्मरेत्। प्रधानतत्त्वस्याधारं स्वमन्त्रेणातिसुन्दरम्। श्रीवत्सं पुरतो विष्णोर्हेमप्रभमनुस्मरे''दिति। सत् प्रशस्तं-साधु-अभ्यर्हितं वा ''सत्यं साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च स''दित्यमरः-यत्-रूपं आभरणाद्यभूषितत्वेऽपि भूषितवद्भासमानत्वलक्षण आकारविशेषः- यथा च तल्लक्ष्यते- ''आरोप्यावेध्यविक्षेप्य पारिहार्यैरभूषितम्। यद्भूषितमिवाभाति तद्रूपमिति कथ्यत'' इति। सुस्निग्ध संधिबन्ध पीनोन्नत विशालत्वादि यथोचितसंनिवेशलक्षणं सौन्दर्यं वा रूपशब्देनोच्यते- ''रूपं स्वभावे सौन्दर्ये नालोक पशुबृन्दयोः। ग्रन्थावृत्तौ नाटकादावाकार श्लोकयोरपी''ति मेदिनी। तच्च सौन्दर्यमेवं लक्ष्यते- ''अङ्गप्रत्यङ्गकानां यत्सन्निवेशो यथोचितम्। सुस्निग्धसंधिबन्धं यत्तत्सौन्दर्यमितीर्यत'' इति। तेन- युतम्- पूर्वोक्तं तुलस्यादि परिष्करणमस्य नैसर्गिकमेव रामणीयकमभ्युच्चिनोति- न त्वपूर्वं किंचिदादधातीति भावः।

हरेः श्रीनिवासस्य- सकलजनमनोनयनहारित्वं वदन्नयं शब्दस्तद्वक्षसि विवक्षितस्य लक्ष्मीविहारोद्यानत्वरूपणस्योपस्कुरुते- वक्षः उरःप्रदेशम्। एवं पूर्वोक्तपरिष्करण गुणात्मकोद्दीपनविभावन सामग्र्या अनुरूप महिळामणिनिर्वेशवैधुर्येण काननकौमुदीप्रायता मा भूदित्यभिप्रयन्नाह। महाराममिति। महती सर्वलोकातिशायिसौन्दर्यादिकल्याणगुणवत्तया पूज्या-रामा-यस्मिं स्तत्- महारामं- कलयसि- स्वनिवासेनोदाररमणीमणीरमणीयं करोषीत्यर्थः- ''स्त्रियाः पुंव''दित्यादिना महतीशब्दस्य पुंवद्भावे- ''आन्महत'' इत्यात्वम्। यद्वा। महारामं स्वनिवासेनातिरमणीयमित्यर्थः- ''रामश्श्यामे हलायुधे पशुभेदे सिते चारौ राघवे रेणुकासुते'' इत्यभिधानचिन्तामणिः। ''रामः पशुविशेषे स्याज्जामदग्न्ये हलायुधे। राघवे चासितश्वेतमनोज्ञेषु च वाच्यव''दिति विश्वश्च। महान्तमारामं उपवनं कलयसीत्यप्यर्थः। आन्महदित्यात्वे सवर्णदीर्घः। ''आरामस्स्यादुपवनं कृत्रिमं वनमेव य''दित्यमरः। यद्वा। महस्य उत्सवस्य- आरामः कामोत्सवविलासहेतुभूत मुपवन मित्यर्थः। ''मह उद्धव उत्सव'' इत्यमरः। तं कलयसि भावयसीत्यर्थः।

महोद्यानपक्षे त्वेवमर्थः। परं-अतुलसीतम्-इतिच्छेदः-परं श्रेष्ठम्-अतुलाः- निस्समाः-सीताः सस्यानि-यस्मिन्-तं तथोक्तम्- ''सीता सस्ये नभोनद्यां जानक्यां लाङ्गला-

''मालमुन्नतभूर्माला पंक्तौ पुष्पादिदामनी''ति रत्नमाला। यद्वा। वनैः प्रस्रवणैः- मालाभिः पिशुना पृक्कादिशब्दवाच्यसुगन्धिमूलिकाभिश्चेत्यर्थः- ''मरुन्माला तु पिशुना पृक्का लंकोयिकेत्यपी''त्यमरः। ''पृक्का तु ब्राह्मणी देवी मरुन्माला लता लघु''रिति वाचस्पतिश्च- ''मरुन्मालेति व्यस्तं समस्तं च नामे''ति सुधादौ स्थितम्- अत एव- ''मालः क्षेत्रे स्त्रियां पृक्कास्रजोर्जात्यन्तरे पुमा''निति मेदिन्यां केवलमालाशब्दस्यापि पृक्कावाचित्वाभिधानं संगच्छते- अथवा- वनमालैः विहारार्थैर्जल धारागृहैरित्यर्थः-यद्वा- जलक्षेत्रैः सलिलपूर्णैः केदारैरित्यर्थः। ''मालं क्षेत्रे गृहे मालो माला पुष्पादिदामनी''ति विश्वः। तैः- आप्तम्- गुढार्थविवरणे तु- ''वनमालाप्तं कृत्रिमकाननपंक्तियुत''मिति व्याख्यातम्- तत्तु आरामशब्दस्यैव कृत्रिम वनार्थकत्वेन वनशब्दस्यापि तथाविधार्थवर्णने पौनरुक्त्यापत्तेरुदासितव्यम्- ''आरामस्स्यादुपवनं कृत्रिमं वनमेव य''दिति हि कोशः। सुलक्ष्मणाकलितम्-सुष्ठु-लक्ष्मणाभिः-सारसस्त्रीभिः-ओषधीविशेषैर्वा-कलितं संगतम्- यद्वा-सुलक्ष्मणैः शोभनैश्श्रीमद्भिः-आकलितं अतिभोग्यत्वेन श्लाघितम्-पामादिगणे ''लक्ष्म्या अच्चे''ति पाठाल्लक्ष्मीशब्दान्मत्वर्थीयो नप्रत्ययः ईकारस्यात्वं च- ''लक्ष्मणा त्वोषधी भेदे सारस्यामपि योषिति। रामभ्रातरि पुंसि स्या त्सश्रीके चाभिधेयव''दिति मेदिनी। सद्रूपयुतम्- सन्तः प्रशस्ताः-ये-द्रवः वृक्षाः- नागपुन्नाग वकुळकुरवकचम्पकाशोकादयः- तैः- उपयुतं उपेतम्- अथ- महान्तं पूज्यम्-रामं दाशरथिं कलयसीत्यप्यर्थः- अस्मिन् पक्षे- परं साक्षात्परमात्मानम्- ''परं दूरान्यमुख्येषु परोऽरिपरमात्मनो''रिति वैजयन्ती- अतुला ''न हि सीतासमा नारी नैव देवी न गन्धर्वी नाप्सरा न च दानवी। तुल्या सीमन्तिनी तस्या मानुषेषु कुतो भवे''दित्याद्युक्तरीत्या रूपौदार्यादिभिरप्रतिद्वंद्वा- सीता जानकी- यस्य तं तथोक्तम्- वनमाला दण्डकारण्यरेखा- आप्ता पितृवचनपरिपालनाय प्रविष्टा- येन तं तथोक्तम्- ''जातिकालसुखादिभ्यः परा निष्ठा वाच्ये''ति निष्ठायाः परनिपातः- यद्वा- वनानि- मालाः शैलाद्युन्नतप्रदेशाश्च- आप्ताः- येन-तं-कोशस्तूक्तः।

एतेन ''वनमालाप्तमित्यत्र द्वितीयासमास'' इति गूढार्थविवणव्याख्या- तथैव विग्रहं प्रदर्शयन्ती बुधामोदिनी च प्रत्युक्ता-तादृशानुशासनादर्शनात्-न च ''द्वितीयाश्रिते''ति सूत्रे प्राप्तशब्दपाठादनुपसृष्ट आप्तशब्दोऽपि कुतो न गृह्यतामिति वाच्यम्- तथासति

यत्किंचिदेतत्- सुलक्ष्मणाकलितम्- सुष्ठु- लक्ष्मणेन सौमित्रिणा- आकलितं सेवितम्- "तं जाग्रतमदम्भेन भ्रातुरर्थाय लक्ष्मणम्। अहं सर्वं करिष्यामि जाग्रत स्स्वपतश्च ते" इत्याद्युक्तरीत्या सौमित्रिविरचितसर्वदेशसर्वकालसर्वावस्थोचितसर्वविधकैंकर्यमित्यर्थः। सद्रूपयुतम्- सतां "अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदु"रिति निरुक्तानां ब्रह्मविदां साधूनां वा महर्षीणामित्यर्थः। रूपं आकारः कुशचीरजटादिधारणरूपः- तेन युतं-यद्वा- सत् सत्यं-रूपं स्वभावः- तेन युतं- पितृवचनपरिपालनादिषु सत्यसंधमित्यर्थः। यथोक्तं तेनैव। "सत्यमेवेश्वरो लोके सत्यं पद्मा समाश्रिता। सत्यमूलानि सर्वाणि सत्यान्नस्ति परं पदम्। नैव लोभा न्न मोहाद्वा न ह्यज्ञानात्तमोऽन्वितः। सेतुं सत्यस्य भेत्स्यामि गुरोस्सत्य प्रतिश्रव" इति। "अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम्। न हि प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषत" इति च। अत एव हि "धर्मज्ञस्सत्यसंधश्च- धर्मात्मा सत्यसंधश्चे" त्यादिना तत्र तत्र सत्यसंधत्वेनायं भूयो भूयः प्रशस्यते प्राचेतसेन महर्षिणा। यत्तु। "सता न्यायेन श्रेष्ठेन वा- रुणा युद्धेन उपयुतम्- "रुर्नायुद्धे भये ध्वना"विति बुधामोदिन्यां व्याख्यातम्- तदसमञ्जसम्- "स्त्रीरुग्ज्वालेच्छयोः कान्तौ रुङ्ना युद्धे भये ध्वना"विति रत्नमालायां रुक्छब्दस्यैव पुल्लिङ्गस्य युद्धवाचितानुशासनेन "रुर्नायुद्धे" इत्युदन्त रु शब्दपाठस्य भ्रममूलकतायाः स्फुटत्वादिति। अथ महान्तं रामं बलभद्रं कलयसीत्यप्यर्थः- तदा- परमिति मान्तमव्ययं केवलार्थकम्- "परस्स्या दुत्तमानात्मवैरिदूरेषु केवले। परमव्यय मिच्छन्ती"ति विश्वः। परं केवलं- अतुला लोकविलक्षणेति यावत्- तादृशी- सीता लाङ्गलपद्धतिर्यस्य तं तथोक्तम्- लोके हि कृषीवला लाङ्गलपद्धितिं स्थलेषु विदधते- बलभद्रस्तु तां कालिन्दीजलेषु कृतवानिति लोकविलक्षणत्वं तत्सीताया इति बोध्यम्- वनमालया- संकर्षणावतारत्वेनैककुण्डलवन्निसर्गसिद्धया वैजयन्त्याख्यमालया- आप्तं- अत्र- "वनेषु व्यचरत्क्षीबो मदविह्वललोचनः। स्रग्व्येककुण्डलो मत्तो वैजयन्त्या च मालया। बिभ्रत् स्मितमुखाम्भोजं स्वेदप्रालेयभूषितम्। स आजुहाव यमुनां जलक्रीडार्थमीश्वरः। निजवाक्यमनादृत्य मत्त इत्यापगां बलः। अनागतां हलाग्रेण कुपितो विचकर्ष हे"त्यादि श्रीभागवतीया बलदेवकथाऽनुसंधेया-सुष्ठु-लक्ष्मणेन स्वच्छात्रसुयोधन सुतेन लक्ष्मणनाम्ना-आकलितं सेवितं-यद्वा-शोभना लक्ष्मणानाम्नी श्रीकृष्णदिव्यमहिषी या हि बृहत्सेनसुता-मत्स्ययन्त्रभेदनेनोढेति प्रसिध्यति-तया स्वप्रजावत्या-कलितं- पूजितं- यद्वा-लक्ष्मणा-कलिता पूजिता लालिता वा येन तं तथोक्तम्- "पितृभिर्भ्रातृभि-श्चैताः

आहिताग्न्यादिराकृतिगणत्वान्निष्ठायाः पूर्वनिपातः। ततस्सुशब्देन समासः। यद्वा।
शोभना लक्ष्मणा यस्य सः श्रीकृष्णः। तेन- आकलितं सत्कृतं सहचरितमिति वा- यद्वा- शोभना लक्ष्मणानाम्नी दुर्योधनसुता- तद्विषये- कलितं संजातकलिं- कुरुभिस्सह कृतविवादं प्रक्रान्तसमरं वा- "तदस्य संजात"मिति तारकादेराकृतिगणत्वादितचि- "यस्येति चे"ति कलिशब्दे इकारलोपः- "कलिस्स्यात्कलहे शूरे कलिरन्त्ययुगे युधी"ति विश्वः। "कलिर्विभीतके शूरे विवादेऽन्त्ययुधी"त्यभिधानचिंतामणिश्च-अत्र- "दुर्योधनसुतां राजन् लक्ष्मणां समितिं जयः। स्वयं वरस्थामहरत्साम्बो जाम्बवतीसुत"- इत्यारभ्य साम्बकर्तृकदुर्योधनतनयाहरणोद्दीपितक्रोधगौरवकौरवगर्वदुर्वचन निशमन जाज्वल्यमानप्रतिघानलरौद्रबलभद्र विरचिततत्पराभवपरा श्रीभागवतीया कथाऽनुसंधेया- अथवा- शोभना लक्ष्मणा यस्य सः- साम्ब इत्यर्थः-तेनाकलितमिति। सद्रूपयुतम्- सतः नक्षत्रस्य-यद्रूपम्-तेन युतम्-नक्षत्रवद्विशद दिव्यविग्रहमित्यर्थः- "सन् सत्ये विदुषि श्रेष्ठे साधौ भवति च त्रीषु। सत्क्लीबमृक्षे" इति रत्नमाला- सद्द्रूपमित्यत्रोद्यान व्यतिरिक्तार्थपक्षे "अनचि चे"ति दकारस्य द्वित्वे सर्वेष्वप्यर्थेषु शब्दस्यैकरूप्यं बोध्यम्- परमतुलशीतमिति तालव्यषष्ठतयाऽपि पाठो दृश्यते-तदा-श्रीनिवासहृदयपक्षे-तुलशीत्यस्य तुलसीत्यर्थः- शसयोरभेदात्- तथाचोक्तमहोबलपण्डितीये भोजेन "रलयोर्लडयोस्तद्व ळ्ळयोश्शसयोरपि। वबयोर्नणयोश्चान्ते सविसर्गाविसर्गयोः। सबिन्दुकाबिन्दुकयोः स्स्यादभेदेन कल्पन"मिति। आरामपक्षे-परम्-अतुलाः शीताः नीवार तरवः बहुवारतरवो वा- यस्मिन् तमित्यर्थः- "सिताभ्रपुष्पविदुलशीतवानीरवञ्जुला" इत्यमरः। "शीतो हिमे च जिह्मे च वानीर बहुवारयो"रिति हेमचन्द्रः- अतुलं शीतं शैत्यं यस्मिन्निति वा- राघव बलभद्रपक्षयोरपि- अतुला शीता सीता यस्य तमित्येवार्थः। "शीता नभस्सरिति लाङ्गलपद्धतौ स्याच्छीता दशानन रिपो स्सहधर्मिणी च। शीतं स्मृतं हिमगुणे च तदन्विते च शीतोऽलसे च बहुवारतरौ च दृष्ट" इति सीताशब्दस्य तालव्यादितया धरणिकोशे पाठात्- इदं च "सीता लाङ्गलपद्धति"रित्यत्रामरसुधादौ स्पष्टम्।

अत्र हरिवक्षसो लक्ष्मीविहारोद्यानत्वेन रूपणाद्रूपकालंकारः। स च परमतुलसीत-मित्यादिशब्द प्रतिपाद्यार्थद्वयश्लेषभित्तिकाभेदाध्यवसायमूलकातिशयोक्त्यनुप्राणित इति संकरः।महोपवनदाशरथिबलभद्राणामप्रकृतानां महारामशब्देन संग्रहात्केवलाप्रकृतश्लेषश्च पूर्वोक्तरूपकेणैकवाचकानुप्रविष्टेन संकीर्णः- वनमालाप्तमित्यत्रान्योन्यविलक्षणपद भङ्गानपेक्षमेव नानार्थकोटीकरणादभङ्गश्लेषः- अन्यत्र ...

प्राकरणिकयोः प्राकरणिकाप्राकरणिकयोर्वा श्लिष्टपदेनोपानिबन्धे श्लेषः। तत्राद्य प्रकारद्वय विशेषणविशेष्यसाम्य एव भवति। तृतीयस्तु प्रकारो विशेषणसाम्य एव भवति। विशेष्यसाम्येत्वर्थप्रकरणादिना वाच्यार्थनियमेऽर्थान्तरगतध्वनेर्विषय स्स्या''दिति। अप्पय्यदीक्षितानां मते तु- प्रकृताप्रकृत श्लेषस्थलेऽपि विशेष्यस्य श्लिष्टतावश्यंभाव मभिधाय- ''उच्चरद्भूरिकीलाल श्शुशुभे वाहिनीपति''रित्यादेरुदाहृतत्वान्नात्र प्रकृता प्रकृतश्लेषः- किंतु पूर्वोक्तरीत्या अप्रकृतानेकविषयश्लेष एव। गूडार्थ विवरणे तु - श्लेषालंकार इत्युक्तम्- तदप्यस्मदुक्तरीत्यैव नेयम्- एतेनात्र श्लोके श्लेष उपमा चे''ति पाश्चात्येनोक्तं नातिहृद्यमिति वेदितव्यम्- श्लेषसद्भावेऽप्युपमाया अभावात्- ''वक्षो देशं हरेर्महाराम''मिति पाठतोऽपि ''कमले वक्षो हरेर्महाराम''मिति पाठ एव सुन्दरतमो वृत्त्यनुप्राससौष्ठवात्- बलिवसुमुष इत्यादिश्लोकचतुष्टयं गीतिर्नाम मात्रावृत्तम्।

**मू. दृष्टा(ष्ट्वा)त्म प्रतिबिम्बितेषु (बिम्बमेव)मणिषु द्रागिन्दिरे मा स्म भू**
**दन्तस्तेष्वबलान्तरस्थितिधिया कोप (रोष)स्तवेत्यच्युतः।**
**शङ्कोन्मेषकथापथातिपतितं संत्यक्तरत्नान्तर**
**स्तत्वत्सोदरमेव कौस्तुभमणिं धत्ते भुजाभ्यन्तरे॥ 17**

पूर्वस्मिन् श्लोके श्रियो निवासानुरूप्यं सूचयितुं भगवद्वक्षस स्तुलसीवनमाला-श्रीवत्सभूषितत्वं प्रतिपादितम्- तत्प्रसङ्गेनावश्यवक्तव्यं कौस्तुभरत्नपरिष्कृतत्वमपि तस्य भङ्ग्यन्तरेण वर्णयति। दृष्ट्वेति। हे इन्दिरे- मणिषु रत्नेषु- दृष्टं लक्ष्म्याऽवलोकितम्- आत्मनः प्रतिबिम्बितं प्रतिबिम्बम्- येषु तथोक्तेषु सत्सु- प्रतिबिम्बशब्दात् स्वार्थे णिचि भावे क्तः-यदि कदाचि त्कौस्तुभेतराणि रत्नानि धार्येरन्-तदा-तेषु त्वत्प्रतिबिम्बे दृष्टे सतीति भावः- ''दृष्ट्वाऽत्म प्रतिबिम्बमेवे''त्यपि पाठो दृश्यते। तदा-मणिषु-यदि धृता भगवताऽन्ये मणयस्तेषु रत्नोष्वित्यर्थः। आत्मप्रतिबिम्बमेव-न त्वन्यदीयं प्रतिबिम्बम्- तथा सति वा कथंचित्कोपो युज्येतापीति भावः। ''प्रतिमानं प्रतिबिम्ब''मित्यमरः- अनेनास्याः परां काष्ठामधिरूढो मौग्ध्यातिशयो द्योत्यते- तेषु- प्रतिफलितत्वद्विग्रहाणां रत्नानामित्यर्थः- अन्तः अभ्यन्तरप्रदेशे- शौण्डादिष्वन्तश्शब्दपाठात् ज्ञापकादवयविनां मणीनामाधारत्व

रत्नाभ्यन्तरेष्वमुना गूढविप्रियकृता भगवता गोपितानि इति भ्रमेणेति यावत्- द्राक् झडिति- "द्राग्झडित्यञ्जसाऽह्नाय द्राङ्मङ्क्षु सपदिद्रुते" इत्यमरः- तथ्यातथ्य विमर्शविधान मन्तरेणैवेति भावः। तव- रोषः क्रोधविशेषः- वल्लभविषयत्वादस्य रोषशब्देन व्यपदेशः- तथाचोक्तं रसार्णवसुधाकरे। "वधावज्ञादिभिश्चित्त ज्वलनं क्रोध ईरितः। एष द्वेधा भवेत् क्रोधः कोपरोषप्रभेदतः। वधच्छेदादिपर्यन्तः क्रोधः क्रूरजनाश्रयः। अभ्यर्थनावधिः कोपः प्रायो वीरजनाश्रयः"। इत्युपक्रम्य कोपविषयादीन् प्रतिपाद्य- "मिथ स्त्रीपुंसयोरेव रोषस्त्री गोचरः पुनः। प्रत्ययावधिरत्र स्यु र्विकाराः कुटिलेक्षणम्। अधरस्फुरणापाङ्गराग-निश्श्वसितादयः। द्वेधा निगदितस्त्रीणां रोषः पुरुषगोचरः। सपत्नीहेतुराद्य स्स्या दन्य स्स्यादन्यहेतुज" इत्युक्तम्- अत्र रोषस्य सपत्नीभ्रमहेतुकत्वम्- न तु साक्षात्सपत्नी हेतुकत्वमिति ध्येयम्- कोप इति पाठे- "अभ्यर्थनावधि"रित्युक्तलक्षणः कोप एव गृह्यताम्- तत्र वीरजनाश्रयतायाः प्रायिकत्वकण्ठोक्ते स्तस्य स्त्रीष्वपि संभाव्यत्वात्- अत एव- "कोपेऽपि कान्तं मुखम्। कोपात्कान्तं पराणुद्ये"त्यादयोऽपि संगच्छन्ते- ईदृशः कोपः-मा स्म भूत् मा जनिष्ट-"स्मोत्तरे लङ्चे"त्यत्र चकारात्सर्व लकारापवादो लुङ्-इति एतदर्थमिति यावत्- इत्यभिप्रायेणेति वा- अच्युतः श्रीनिवासः- अविद्यमानं च्युतं यस्येति व्युत्पत्या भाव्यनर्थप्रतिविधाने निष्प्रमाद इत्यर्थो लभ्यते- "अनागतविधानं तु कर्तव्यं शुभमिच्छता। आपदं शङ्कमानेन पुरुषेण विपश्चिते"ति प्रेयसीरक्षणाय लक्ष्मणं प्रत्युपदिश न्नयं स्वयं कथं तत्कोपरूपभाव्यनर्थ प्रतिविधानात् प्रमाद्येतेति भावः- अनेनैव रोषकोपयोः प्रत्ययाभ्यर्थनावधिकत्वेन सुनिवारत्वेऽपि तावत्तदप्रसादवैशसमप्यक्षममाण इति च द्योत्यते- एतेन विश्लेषपर्यन्तः क्रोधो मास्मभूदिति गूढार्थ विवरण मसारमिति वेदितव्यम्-संत्यक्तानि विसृष्टानि- रत्नान्तराणि इतररत्नानि- येन तथोक्त स्सन्- समित्यनेन रत्नान्तरेषु नैस्पृह्यभूमा द्योत्यते- शङ्कायाः अबलान्तरस्थितिसंशयस्य- उन्मेषः उन्मीलनम्-तस्य-कथा वार्ता-तस्याःपन्थाः-मार्गः- "ऋक्पू"रित्यादिना समासान्तोऽप्रत्ययः- तस्मात्-अतिपतितम्-निर्गतम्-भोगोपरती इत्यादाविव सुप्सुपेति समासः-यद्वा-सः-अतिपतितोऽति क्रान्तो येनेति बहुव्रीहिः- आहिताग्न्यादेराकृतिगणत्वा न्निष्ठायाः परनिपातः- एतेन "कथापथमतिपतित"मिति द्वितीयासमासं प्रदर्शयन्ति व्याख्यान्तराण्यनुपपन्नानीति वेदितव्यानि- "द्वितीयाश्रिते"ति सूत्रेऽनुपसृष्ट पतितशब्दस्यैव समासविधानेनोपसृष्टस्य तदयोगात्- एतच्च पूर्वस्मिन्नेव श्लोके- वनमालाप्तमित्यस्य व्याख्यावसरे व्यक्तमुपापी पदाम- एतेनैव "अपेतापोढे"त्यनेन पञ्चमी समास प्रत्याशाऽपि परास्ता- तत्राप्यनुपसृष्ट

"समानस्ये"ति योगविभागात्सभावः- यद्वा- सहशब्देन - सदृश वचनोऽप्यस्ति सहशब्दः "सदृशस्सख्या ससखी"ति यथा- तेनायमस्वपद विग्रहो बहुव्रीहिः- समानं उदरं यस्येति "वोपसर्जनस्ये"ति सभावः- समानोदर्यं भ्रातरम्-न तु भिन्नोदरम्- तथात्वेऽपि वा क्वचित्संदेह उदियादपीति भावः- कौस्तुभमणिमेव- कौस्तुभश्चासौ मणिश्चेति- कैलासाद्रिर्भावपदार्थस्तर्कविद्येत्यादाविव "विशेषणं विशेष्येण बहुळ"मिति समासः- व्याप्य व्यापक भावापन्नयो स्समभिव्याहारे व्यापकस्यैव विशेष्यत्व नियमान्मणि शब्दस्य विशेष्यतेति ध्येयम्- एवकारेण पूर्वोक्तरत्नान्तरनिश्शेषपरित्याग एव स्थिरीक्रियते- भुजाभ्यन्तरे वक्षसीत्यर्थः- "ननाक्रोडं भुजान्तर"मित्यमरः- धत्ते धारयति। लटा सर्वदा नियमेन धारणं सूच्यते- तेन नियमेनेत्यध्याहारेण व्याख्यानमनावश्यकमिति ध्येयम्। "उत्पन्नानर्थशमना द्धावितद्वारणं वर"मिति न्यायेन त्वद्रोषोत्पत्तिरेव मा भूदिति रत्नान्तरत्यजनपूर्वकं त्वत्समानोदर्यं रत्नमेव हृदये बिभर्तीति भावः- त्वत्सोदरं कौस्तुभमणि मित्याभ्यां पदाभ्याम्- "प्रद्योतन सहस्राभं द्योतमानं च कौस्तुभम्। लम्बये दुरसि स्वच्छ मिन्दिरा सोदरं मणि"मिति पाद्मसंहितोक्तं प्रत्यभिज्ञाप्यते। अत्र स्वतस्सिद्धातिशयकवि- प्रतिभासंभावितान्यमणिगतात्मप्रतिबिम्बदर्शनजनिष्यमाणवनितान्तरभ्रमकमला हृदयोन्मिषिष्यद्रोषनिवारणस्य तत्सोदरकौस्तुभैकधारणाफलस्यापि तत्फलत्वेन संभावनात् फलोत्प्रेक्षा- असिद्धविषया- उक्तविध लक्ष्मीरोषनिवारणरूपविषयस्या सिद्धत्वात्- यद्वा- पूर्वोक्तकौस्तुभैकधारणस्योक्तविधलक्ष्मीकोपनिवारण तात्पर्याहेतुकत्वेऽपि तद्धेतुकत्वेन संभावनाद्धेतूत्प्रेक्षेत्युभयथाऽपि संभवादनयो स्संदेह संकरः। ते च रत्नान्तरत्यागासंबन्ध- संबन्धकल्पन रूपया वा- रत्नान्तरसंबन्धासंबन्ध कल्पनरूपया वाऽतिशयोक्त्या उज्जीविते इति संदेह गोचरयोरनयो रुक्तोत्प्रेक्षाभ्यां सहाङ्गाङ्गि भावसंकरः- त्वत्सोदरमिति विशेषणस्य शङ्काकलङ्कोन्मीलनकथापथातिवर्तित्व निर्धारणाभिप्रायगर्भत्वात् परिकरश्च पूर्वोक्तोत्प्रेक्षो- ज्जीवनेन भजत्यङ्गतामिति संक्षेपः- यत्तु- "दृष्टात्म प्रतिबिम्बकेषु- अन्तस्थेष्वि"ति पठन्- "अन्तस्थेषु अवयवस्थेष्वि"ति व्याख्यातवान्प्रतीच्यः- तत्सर्वमस्वरसत्वादुपेक्ष्यम्। शार्दूल विक्रीडितम्॥

मू. सस्नेह पूर्तिरुदितत्रिदशोपसेवो दीप्तो हरेरुरसि देवि तवेष्टगेहे।
अस्माकमान्तरतमः प्रशमय्य मुक्ते र्मार्गं प्रकाशयतु कौस्तुभरत्नदीपः॥

एवं लक्ष्मीविहारनिकेतभूतपीताम्बरोरस्थल परिष्करणवर्णनप्रसङ्गेनोपस्थितं

नामन्तरङ्गतममालोच्य तमेव स्वाभीष्टं प्रार्थयते। सस्नेहेति। हे देवि- सर्वलोकपालेन मूर्धाभिषिक्ते देवदेवदिव्यमहिषि- "देवी कृताभिषेकाया"मित्यमरः। स्नेहः स्निग्धता-मसृणता- "भूयिष्ठं तेज एवाद्भिर्बहुलाभि र्मृदूकृतम्। चक्षुरानन्दजनकं लावण्यमिति कथ्यत" इत्युक्तलक्षणं लावण्यमिति यावत्- स एव स्नेहः तैलम्- तस्य पूर्तिः साकल्यम्- "स्नेहस्स्यात्पुंसि तैलादौ रसद्रव्ये च सौहृदे"- इति मेदिनी- तेन सह वर्तत इति सस्नेह पूर्तिः- अतिशयेन स्निग्ध इत्यर्थः- यथोक्तं मिहिराचार्येण- "स्निग्धः प्रभानुलेपी स्वच्छार्चिष्मान्गुरु स्सुसंस्थानः। अन्तःप्रभोऽतिरागो मणिरत्न गुणास्समस्ताना"मिति। केचित्तु। "तव- इष्टगेहे प्रियगृहरूपे हरेरुरसि- सस्नेहपूर्तिः प्रीति पूर्त्या सहित" इति योजयित्वा व्याचक्षते- तन्नातीव सुन्दरम्- "स्नेहस्य सोदरत्वप्रेम्ण" इति बुधामोदिनी व्याख्यान मप्येतत्तुल्ययोगक्षेममेव। उदिता उत्पन्ना- त्रिदशानां देवानाम्- उपसेवा भजनं यस्य स तथोक्तः- भगवदुरोभूषणत्वेन सर्वसुपर्वसेव्य इत्यर्थः- अन्यत्र- तिसृणां दशानां वर्तीनां समाहार स्त्रिदशम्- "आबन्तो वे"ति स्त्रीत्वस्य वैकल्पिकत्वेन न "द्विगो"रिति ङीप्- किं तु- "स नपुंसक"मिति नपुंसकत्वम्- "दशाऽवस्थावर्तिकयो र्वस्त्रान्ते भूम्नि योषिती"ति मेदिनी- तस्य- उपसेवा सा- उदिता यस्य स तथोक्तः- अनेनास्य दीपस्य भगवत्प्रीतिसंपादकत्वं द्योत्यते- यथोक्तं कार्तिकदीपमाहात्म्ये- "एकवर्तिस्तु दीपो य स्स दारिद्र्यादि दुःखदः। दद्याद्विवर्तिको दीप इहामुत्र च संपदम्। दीपस्त्रिवर्तिको नित्यं त्रिधाम प्रीतिमावहेत्। चतुर्वर्ति र्ज्वलन् दीपश्चतुर्वर्ग फलप्रदः। पञ्चाद्यनेकवर्तिश्चे त्प्रदीप इति कथ्यते। श्रीशालये तं ज्वलयन्ननन्तं फलमश्नुत" इति। दीपपक्षे- आभ्यां विशेषणाभ्यां सामग्री पौष्कल्यम्- तेन तद्वैकल्यप्रयुक्तकादाचित्कप्रकाशमान्द्यव्युदासश्च व्यज्यते- अत्रापि त्रिदशोपसेवैव त्रिदशोपसेवेति योज्यम्- हरेः श्रीनिवासस्य- इदं च तदुरसो रूप्यमाण लक्ष्मीप्रियगृहत्वानुरूपं मनोहारित्वं सूचयितुम्- उरसि वक्षोरूपे- तव- देवीति निर्दिष्टायास्तव- अनेनास्या विशालचन्द्रशालादि लीलाकुतूहलातिरेको द्योत्यते- इष्टं वैपुल्य रामणीयकादिभिः प्रियम्- तथोक्तं च तद्गेहं च- तस्मिन्- दीप्तः- "स्निग्धः प्रभानुलेपी" त्युदाहृतवचनरीत्या स्वच्छार्चिष्मत्तया भ्राजमानः- दीपपक्षे स्नेहपूर्ति दशासंपत्तिभ्यां ज्वलित इत्यर्थः- अनेनास्य रत्नदीपस्य द्युत्यर्थक धातुनिष्पन्नदेवीशब्द निर्दिष्ट लक्ष्म्यनुरूप द्योतनं विवक्षितम्- अविलम्बित लक्ष्मीप्रदत्वं च द्योतितम्- यथोच्यते बृहत्संहितायाम् "दीपस्संहतमूर्ति रायततनुर्निर्वेपनो दीप्तिमा न्निश्शब्दो रुचिरः प्रदक्षिणगतिर्वैदूर्य हेमद्युतिः। लक्ष्मीं क्षिप्रमभिव्यनक्ति रुचिरं यश्चोद्यतं दीप्यते शेषं लक्षणमग्निलक्षणसमं योज्यं यथा

तमोगुणम्- शोकं मोहम्- पापं वा- "तमोध्वान्तो गुणे पापेऽज्ञाने मोहे विधुन्तुदे" इति
वामनः- पक्षे- ध्वान्तमित्यर्थः- प्रशमय्य प्रकर्षेण शान्तिं नीत्वा- प्रपूर्वकात्- "शमु अदर्शने" इति चौरादिकाद्धातोः क्त्वोल्यपि- मित्त्वाद्ध्रस्वः- "ल्यपि लघुपूर्वा"दित्य यादेशः- मुक्तेः अपवर्गस्य- मार्गं अर्चिरादिकम्- उपायं वा- प्रकाशयतु भासयतु- प्रार्थनायां लोट्। सन्तु तावत्त्वदुपासनादीनि सुदुश्चराणि- त्वन्निवासगेहपरिष्करण दिव्य दीपायमानः कौस्तुभमणिरेव सर्वजीवतत्त्वाभिमानित्वप्रत्यासत्त्याऽस्मास्वसाधारण स्नेहवत्तया केवल प्रार्थनयाऽप्यस्माकं परमपुरुषार्थरूपं मुक्तैश्वर्यमतिमात्रसुलभं विश्राणयतीति तमेवाभ्यर्थयामहे- न तु सर्वेश्वरेश्वरीं त्वा मेतदर्थमायासयन्तो वयमपि प्रयस्याम इति भावः।

अत्र दीपस्य स्वात्मना उपासीनान्तरतमः प्रशमनादि रूपकार्यानु योगितया कौस्तुभरत्नत्वेन परिणत्यपेक्षणा त्परिणामालंकारः। स च सस्नेहपूर्तिरित्यादि पद प्रतिपाद्यार्थद्वयश्लेषभित्तिकाभेदाध्यवसायमूलकातिशयोक्त्यनुप्राणितः- हरिवक्षसो लक्ष्मीप्रियगृहत्वरूपणरूपरूपकोत्तम्भितश्चेत्याभ्यामङ्गभूताभ्यां संकीर्यते। यद्वा। बाह्यतमोमात्रनिरासि यत्किंचिद्भौममार्ग प्रदर्शक लोकसिद्ध दीपापेक्षयाऽस्य दीपस्याभ्यन्तर तमोनिरासित्व विमुक्तिमार्गप्रदर्शकत्व कथनेनाधिक्यप्रतीतेरधिक ताद्रूप्य रूपकं पूर्वोक्ताति शयोक्त्याद्यनुप्राणितमिति दुश्शकत्वात्सर्वपथीन कविहृदयसंरम्भनिर्णयस्य संकीर्ण परिणाम रूपकयोस्संदेह संकरः-ननु सस्नेहेत्यादि श्लेषादेरुक्त परिणामरूपकोभयोपकारकत्व तौल्यात्समप्राधान्य संकर एव कुतो न स्यात्- न च- "अवतु न स्सवितुस्तुरगावळी समति- लङ्घिततुङ्गपयोधरा। स्फुरित मध्यगतारुणनायकामरकतैकलतेव नभश्श्रिय" इत्यत्रोत्प्रेक्षा- समासोक्त्योरिवानयोः परिणामरूपकयो रैककालिकत्वाभावात्कथं समप्राधान्यमिति वाच्यम्- कविमतिविकसितालंकारद्वयस्यखलेकपोत न्यायेनैककालिकताया अपि शक्यत्वाद्वक्तुम्- सद्भावेऽपि वा कालभेदस्य न समप्राधान्यव्याहतिः- "पिनष्टीव तरङ्गाग्रै स्समुद्रः फेन चन्दनम्। तदादाय करै रिन्दुर्लिम्पतीव दिगङ्गना" इत्यत्रोत्प्रेक्षयोः कालभेदेऽपि समप्राधान्यस्य दीक्षितैरेव समर्थितत्वादिति चेन्न- न हि द्वयोरलंकारयो स्संकरगोचरयो स्तुल्यतयाऽलंकारान्तरोपकृतत्वमेव समप्राधान्यप्रयोजकम्- किं तु- अन्योन्यापेक्षि- चारुत्वैककालिकत्व- भिन्नप्रतिपादकशब्दनिबन्धनार्थभेदत्वान्यपि तत्प्रयोजकानि- अत्र तु परिणामरूपकयो श्श्लेषाद्युपकृतत्वतौल्येऽपि- कथंचिदैककालिकत्वाभ्युपगमेऽपि- "अवतु न स्सवितु"रित्यत्रोत्प्रेक्षासमासोक्त्योरिवान्योन्यापेक्षया चारुतोन्मेषस्य भिन्न

इत्यनेन समासोक्तिः- मरकतैकलतेवेत्यनेनोत्प्रेक्षा च भिन्नैरेव शब्दैः प्रतिपाद्यते। तयोरैककालिकत्व मन्योन्यापेक्षया चारुतातिशयश्च दृश्यते। इह तु- कौस्तुभरत्नदीप इत्यनेनैकेनैव परिणामरूपकयोः प्रतिपाद्यमानतया नास्ति भिन्न प्रतिपादक शब्द व्यवस्थितार्थ भेदादिकम्।

अत एव-कुवलयानन्दे-"विधुकर परिरम्भा"दिति श्लोके उदात्तातिशयोक्त्यो-रेकवाचकानुप्रवेशसंकर निरूपणावसरे- "नापि समप्राधान्यम्- यैश्शब्दैरिह संबन्धि वस्तु प्रतिपाद्यते- तैरेव तस्यैव वस्तुनोऽसंबन्धे संबन्धरूपस्य प्रतिपाद्यमानतया भिन्नप्रतिपादक शब्दव्यवस्थितार्थभेदाभावा"दिति व्यवस्थापनं च संगच्छते। "पिनष्टीवे"त्यत्र तूत्प्रेक्षयो र्भिन्नप्रतिपादक शब्दनिबन्धनार्थ भेदादिकं स्फुटमेव। अतोऽत्रोक्तदिशा संदेह संकर एव-एकालंकारकोटावन्यालंकारकोटि प्रतिक्षेपस्य स्पष्टत्वात्। किं च। सस्नेहेत्यादि विशेषणाभ्यां दीपस्य दीप्तत्व समर्थना त्तेन चान्तरतमःप्रशमनादेर्वाक्यार्थस्य समर्थना त्काव्य लिङ्गद्वयम्- प्रस्तुते कौस्तुभवृत्तान्ते विशेषण साम्यादप्रस्तुताचार्य वृत्तान्तप्रतीते स्समासोक्तिश्च- प्रागुक्त संदेह संकर गोचरालंकार द्वयस्यानयोश्चैकवाचकानुप्रवेशसंकरः। समासोक्ति पक्षेतु। सस्नेहपूर्तिः स्नेहशब्देनात्र- "अनुकाङ्क्षन्सदाशिष्यं गुरु रौरसपुत्रवत्। विद्यां समाहितो भूत्वा ग्राहये दुपधिं विने"त्यादिप्रमाण प्रतिपादितं वात्सल्यं गृह्यते। अत एव "स्निग्धस्तु वत्सल" इत्यमरोक्तिः- वात्सल्यं च दोषातिरस्कारिणी प्रीतिः- तस्य पूर्त्या सहितः- उदिता जागरूका- तिसृणाम्- दशानां आचार्यकौपयिकीनां शास्त्रार्था चयनाचार स्थापन स्वयमाचरण रूपाणामवस्थानां समाहार स्त्रिदशम्- तस्य उपसेवा यस्य तं तथोक्तम्- यथाह्युच्यते- "आचिनोति हि शास्त्रार्थानाचारे स्थापयत्यपि। स्वयमाचरते यस्मा त्तस्मादाचार्य उच्यत" इति- अनेनैव "विष्णोरनन्यशेषत्वं तथैवानन्यसाधनम्। तथैवानन्यभोग्यत्व माकारत्रयमुच्यत" इत्युक्ताकारत्रय संपन्नत्वमपि सूच्यते- तेन च- "अर्थपञ्चक तत्त्वज्ञाः पञ्चसंस्कार संस्कृताः। आकारत्रय संपन्ना महाभागवता स्स्मृता" इत्याश्वमेधिकोक्तं महाभागवतत्वं द्योत्यते- "अनन्यदेवताभक्ता ये मद्भक्तजनप्रियाः। मामेव शरणं प्राप्ता स्ते मद्भक्ताः प्रकीर्तिताः। द्वादशाक्षर तत्त्वज्ञश्चतुर्व्यूह विभागवित्। अच्छिद्र पञ्चकालज्ञ स्स वै भागवत स्मृत" इति श्लोकाभ्यां प्रत्येकमुक्तमाकारत्रयमपीह यथा संभवं विवक्षणीयम्-हरेः-उरसि-लक्ष्मीनिवास स्थानतया भगवदुरस्सदृश इति यावत्-

सत्पथादिन। प्रश्रित दानशीले च सदैव निवसाम्यहमिति। विष्णुस्मृतिरन्ते च वरंगी प्रति। ''वसाम्यथार्के च निशाकरे चे''त्युपक्रम्य- विप्रे तथैवाध्ययनोपपन्ने'' इति- ''साधौ नरे धर्मपरायणे च। आचार सेविन्यथ शास्त्रनित्ये'' इति। सत्यस्थिते भूतहिते निविष्टे क्षमान्विते क्रोधविवर्जिते च। स्वकार्यदक्षे परकार्यदक्षे कल्याणचित्ते च सदा विनीते'' इति च। ईदृशः कौस्तुभरत्नदीपः- अस्माकम्- अपारसंसार कान्ताराभ्यन्तरेऽनाद्यज्ञानाभिनद्धाक्षतया दुष्कर्मणा पातितानाम्- तत उत्तरणोपायमजानताम्- तत्परिपाक-दशायां क्रन्दतां चेति भावः। आन्तरतमः प्रशमय्य तमोरूपं ज्ञानचक्षुरभिनहनं प्रमोच्येति भावः। अनेन- ''गुशब्दस्त्वन्धकार स्स्याद्रुशब्दस्तन्निरोधकः। अन्धकार निरोधित्वा द्गुरुरित्यभिधीयत'' इत्युक्त गुरुशब्दप्रवृत्तिनिमित्त पौष्कल्यं सूचितम्- मुक्तेर्मार्गं प्रकाशयतु। तत्त्वहित पुरुषार्थावेदकेन शास्त्रेण वेदयत्वित्यर्थः।

अत्र- ''यथासोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजे त्स यथा तत्र प्राङ्वोदङ्वा प्रध्मायीताभि-नद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः- तस्य यथाऽभि नहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति स ग्रामाद्ग्रामं पृच्छन्पण्डितो मेधावी गन्धारानेवोपसंपद्येतैव मेवेहा चार्यवान् पुरुषो वेद तस्य तावदेव चिरं याव न्न विमोक्ष्येऽथ संपत्स्य'' इति सद्विद्यान्तर्गत श्रुत्यर्थोऽनुसंधेयः। अत्र कविगतकौस्तुभविषयकरतिभावस्य तद्गतलक्ष्मीविषयक भक्तिभावोऽङ्गमिति प्रेयोऽपराङ्ग व्यङ्ग्यम्- अयमेव प्रेयोऽलंकारः- गूढार्थ विवरणकारास्तु- कौस्तुभविषयक रतिभावस्य श्रीभक्त्यङ्गत्वात्प्रेयोऽलंकार इत्याहुः। तदपि श्रीभक्तिः अङ्गं यस्येति बहुव्रीहिणा निर्वाह्यम्- लक्ष्मीविषयकभक्तिभावाङ्गकत्वस्यैव कौस्तुभविषयक रतिभावस्यात्रौचित्वात्- किंचात्र प्रकृताप्रकृतश्लेष इति व्याचक्षाणा स्ते प्रष्टव्याः- किमिदं प्रकृताप्रकृत श्लेष इति व्याख्यानं प्राचामनुरोधेन- उत- नव्यानाम्- न तावन्नव्यानाम्- ''उच्चलद्भूरि कीलाल श्शुशुभे वाहिनीपति''रित्यादौ विशेष्यस्यापि श्लेषस्थल एव केवल प्रकृत केवलाप्रकृत श्लेषोन्मेषवत् प्रकृताप्रकृत श्लेषोन्मेषस्य तैरभ्युपगमात्- न ह्यत्र विशेष्यस्य कौस्तुभरत्नदीप इत्यस्य श्लिष्टता। येन प्रकृताप्रकृत गोचरश्लेषोऽत्रोच्येत।

तर्हि प्राचामनुरोधेनेति ब्रूमः। ते ह्यलंकार सर्वस्वकारादयः-यत्र विशेषणविशेष्ययो-र्द्वयोरपि श्लिष्टशब्देनोपादानम्-यत्र वा विशेषण मात्रस्यापि श्लिष्टपदेनोपादानेऽपि द्वयोर्विशेष्ययोः पृथगुपादानम्-तत्रोभयत्रापि श्लेषः-तत्र च द्वयोश्श्लिष्टशब्देनोपादानम्-

मात्रस्य श्लिष्टत्वे विशेष्ययोः पृथगुपादाने- ''उत्तालशब्दोचितचारुपादन्यासा विचित्राभिनयव्यवस्था। वैयासकी भारतवासनाढ्या सरस्वती दीव्यति लासिकेवे'' त्याद्युदाहरणम्- विशेष्यसाम्ये त्वर्थ प्रकरणादिना वाच्यार्थनियमे अर्थान्तरगत ध्वनेर्विषयस्स्यात्। एवं चात्रापि कौस्तुभरत्नं दीप इवेत्युपमित समासस्यास्माभिः प्रदर्शितत्वेन विशेष्ययोरश्लिष्टतया पृथङ्निर्देशात् प्रकृताप्रकृत श्लेष लेखनं युक्तमेवेति चेत्।

सत्यमेवं- तथाऽपि प्राचीनोदाहरणेषु प्रकृताप्रकृतश्लेषविषयेषु विशेष्ययोर्व्यस्ततयैव दर्शनादिह समस्ततया निर्देशेन तदवतारश्चिन्त्यः-अभ्युगमेऽपि सस्नेह पूर्तिरित्यादि सामान्य धर्मप्रयोगादुपमिति समासस्यैवात्र दुर्घटत्वात्कुतस्तन्मूलक प्रकृताप्रकृत श्लेषप्रत्याशा- ननु तर्हि मयूर व्यंसक समास एवास्तु- तस्याप्यस्माभिः प्रदर्शितत्वादिति चेत्- किंचातः- अप्रकृतस्य दीपस्य विषयितया पृथगुपात्तत्वेन तस्यापि शाब्दत्वात् प्रकृताप्रकृतश्लेष सिद्धिरिति चेत्- एवं तर्हि श्लेषरूपकयोस्संकर एव वक्तव्यः- न तु प्रकृताप्रकृत श्लेषः- द्वयोरप्यनयोरन्यत्र लब्ध लक्ष्यतयाऽलंकारान्तर संकरवत्संकरस्यैव युक्तत्वात्- अत एव- ''बाध्यबाधक भावानुपगमे द्वयोर्योगे संकर एवेति वरमभ्युगन्तव्य'' मिति काव्य पदीपकृत्- ननु च श्लेषस्यालंकारान्तरविविक्तविषयालाभात् सावकाश निरवकाशयो र्निरवकाशं बलीय इति न्यायेन रूपकालंकार बाधकत्वादत्र श्लेष एव- न तु संकरः- न च ''सर्वदो माधवः- नीतानामाकुलीभाव'' मित्यादौ चास्ति विविक्त विषयतेति वाच्यम्- तत्राप्याद्ये प्रकृतयोर्धर्मैक्येन द्वितीये चाप्रकृतयोर्धर्मैक्येन तुल्ययोगिताया एव जागरूकतयाऽलंकार द्वयस्यापि श्लेषं व्याप्यैवावस्थानात्- तस्मादस्य विविक्तविषयलाभदौर्घट्यान्निरवकाशेनानेन सावकाशानामन्येषा मलंकाराणां बाधात्तेषां मुखे प्रतिभामात्रम्- अत एवोक्तम्- ''एकप्रयत्नोच्चार्याणां तच्छायां चैव बिभ्रताम्। स्वरितादि गुणैर्भिन्नैर्बन्ध श्श्लिष्ट इहोच्यते। अलंकारान्तरगतां प्रतिभां जनयत्पदैः। द्विविधैरर्थशब्दोक्ति विशिष्टं तत्प्रतीयता'' मिति। ''एकप्रयत्नोच्चार्याणामित्यनेनाभङ्गशब्दोक्तिः- तच्छायामित्यादिना सभङ्गोक्तिः- भिन्नैः स्वरितादिगुणैः- तच्छायाम्- एकप्रयत्नोच्चार्यसादृश्यम्- बिभ्रतामित्यन्वयः- एतादृशानां शब्दानां बन्ध श्श्लिष्ट उच्यते। तद्बन्धे श्लेषालंकार इति प्रथमकारिकार्थः- एवं सभङ्गाभङ्गरूपैः- द्विविधैः पदैः- अलंकारान्तरविषयां प्रतिभाम्- जनयत्- तत्- अर्थात्काव्यम्- अर्थशब्दोक्तिभ्यां विशिष्टम्- अर्थश्लेष शब्दश्लेषाभिधेयं प्रतीयतामिति योजनेति द्वितीयकारिकार्थः- एवमेव काव्यप्रदीप प्रभायां वैद्यनाथेन व्याख्यातम्- तस्मात्

बाध एव युक्त इत्युद्भट इति चेत्।

अत्र.....वदन्ति। न हि सर्वत्र श्लेषोऽलंकारान्तरं बाधत एवेति शक्यं नियन्तुम्- क्वचिच्छ्लेषोत्थापितोऽपि ह्यलंकारस्तद्बाधितोऽपि केन चिदुज्जीवितं स्वविषयं समासाद्य विश्राम्यति- तत्र तेन श्लेष एव बाध्यते- यथा "विद्वन्मानसहंस-सद्वंशमुक्तामणे" इत्यादौ- प्रथमं त्वमेव हंसः त्वमेव मुक्तामणिरिति रूपकस्य प्रतीतिः- ततस्तदालम्बना श्लेषस्य प्रतीतिः- ततो मानसमेव मानसम्- वंश एव वंश इति रूपकस्येति तस्यैवान्ते चमत्कारितया प्रतिष्ठितत्वा त्तेन श्लेषो बाधितः प्रतिभामात्रेण व्यवतिष्ठते। एषैव रीति श्शिलष्टविशेषण निबन्धनायां समासोक्तावपी"ति। एवमिहापि कौस्तुभरत्नमेव दीप इति प्रथमं रूपक प्रतीतौ ततस्तदालम्बन श्लेषोत्थानम्- तत स्स्नेह एव स्नेह इत्यादिरूपक स्फूर्तिरित्यन्ततो रूपकस्यैव चमत्कारितया प्रतिष्ठितत्वात्तेन श्लेषो बाध्यते- तथाचोक्तम् कामदर्पणे- "रूपकं पूर्वं संसिद्धं श्लेषमुत्थापयेद्यदि। तदा रूपकमेव स्यादन्यथा श्लेष इष्यत" इति। अन्येत्वाहुः। ईदृशस्थले न श्लेषस्यालंकारान्तर बाधकत्वोक्तिर्युक्ता-विषयस्य संकीर्णस्यापि लाभे लब्धावकाशत्वेन निरवकाशत्वहानेः। न हि विविक्त विषयाभावेन निरवकाशत्वं तान्त्रिका मन्यन्ते- पदे जुहोतीत्यादीना माहवनीय बाधकत्वव दुत्तरार्धे जुहोतीत्यादीनामाहवनीयबाधकताया वाक्यविदननुमतत्वात्- विविक्त विषयाभिधान दुराग्रहेऽपि "चेतोनलं कामयते मदीय"मित्यादावलंकारान्तर प्रसक्त्यभावेन विविक्त विषयत्वोपपत्तेरिति। एतेन "सकलकलं पुर"मित्यत्रोपमाप्रतिभोत्पत्तिहेतुश्श्लेष इत्यपि निरस्तम्- उपमैव हि तत्र श्लेषप्रतिभोत्पत्तिहेतुः- तत्बाधकत्वात्- तथा हि-साधर्म्याभावेनोपमायाः प्ररोहाभावादेव तावन्नोपमा बाध्या- यतः "कमलमिव वनं मनोज्ञमेतत्कचतितरा"मित्यादौ मनोज्ञत्वस्य गुणस्य दीप्तिरूपायाः क्रियायावा उभयोर्वा साम्ये यथोपमा निर्वहति- तथा "सकलकल"मित्यादावपि शब्दमात्रसाम्येनापि सा युक्तैव। साधर्म्यमात्रस्योपमाप्रयोजकत्वात्- तस्य चार्थरूपस्येव शब्दरूपस्याप्यविशेषण संभवात्- यथाह काव्यालंकारे रुद्रटः। "स्फुटमर्थालंकारावेता वुपमा समुच्चयौ किं तु। आश्रित्य शब्दमात्रं सामान्यमिहापि संभवत" इतीति। अतो न निरवकाशत्व प्रयुक्त बलीय स्त्वावलम्बनेनात्र रूपकं बाधित्वा प्राचां मतेऽपि प्रकृताप्रकृतश्लेषोत्थानमिति दिक्। तस्मादस्माभिरुपपादिता एवालंकारा स्साधीयांस इति स्वयमेव विदांकुर्वन्त्वालंकारिक शिखामणय इत्यलं बहुना।

मू. सरसिजनिलयाऽपि वैभवेन स्फुरसि निरेनसि मानसे मुनीनाम्।
उरसि मुररिपोरुपोढहारे शिरसि च देवि गिरां पुरातनीनाम्॥ 19

नन्वस्मिन् स्तबके प्रथमं "अम्बुजवासिनी"मिति मम पद्मे सततावस्थान मभिहितम्- अनन्तरं च "दैत्यजिदुरःकृत नित्यवासे" इति भगवदुरस्यपि नित्यनिवास उदीरितः- पूर्वस्मिन् श्लोके "हरेरुरसि तवेष्टगेहे" इत्यनेन स एव स्थिरीकृतः- विप्रतिषिद्धमिदं यदेकस्या एव युगपदनेकाधाराश्रयणमिति- यदि भिन्नकालमभ्यधास्यत स्थानद्वयेऽवस्थानम्- तर्हि तदघटिष्यत- युगपदवस्थानं तु कथं घटतामित्यत्र स्वरूपत स्सर्वव्यापनशीलत्त्वात्तव नैतदर्हति पर्यनुयोगमित्यभिप्रयन्नाह। सरसिजेति। हे देवि- त्वं- सहसिजातं सरसिजम्- "भूते" इत्यधिकारे- "सप्तम्यां जनेर्ड" इति डः- "हलदन्ता"दिति वा "तत्पुरुषे कृती"ति वा अलुक्।

नन्वेवं वृत्ति विग्रहयो स्समानार्थकत्व नियमो भज्येत- वृत्तौ भूतत्व सत्वप्रधान- त्वयोः- विग्रहे वर्तमानत्व क्रियाप्रधानत्वयोर्दर्शनादितिचेत्सत्यम्- यदीदृशस्थले सरसिजायत इति केषांचिद्व्युत्पादनम्- तत्तु वृत्तिबोध्य भूतत्वाविवक्षया यथा कथंचिदर्थ प्रदर्शनपरमित्यवसेयम्- नह्ययं नियम स्सार्वत्रिकः- वैयाकरणः पाचक इत्यादौ व्यभिचारात्- तत्र हि व्याकरणमधीते वैयाकरणः- पचति पाचक- इति च विग्रह प्रदर्शनं सार्वलौकिकम्- तत्र "क्रियाप्रधानमाख्यातं सत्वप्रधानानि नामानी"ति यास्कोक्ते र्विग्रहे क्रिया प्राधान्यं वृत्तौ त्वाश्रयप्राधान्यमिति न वृत्ते र्विग्रह तुल्यार्थकत्वम्- उक्तं च हरिणा- "क्वचिद्गुण प्रधानत्वमर्थाना मविवक्षित"मित्युपक्रम्य- "आख्यातं तद्धितान्तस्य यत्किंचिदुपदर्शकम्। गुणप्रधान भावस्य तत्र दृष्टो विपर्यय" इति। "तद्धितग्रहणं कृतामप्युपलक्षणम्- तेन- आक्षिको वैयाकरणः पाचकः इध्मप्रव्रश्चन इत्यादीनि विग्रहवाक्यानीहोदाहरण"मिति मनोरमायां स्थितम्- "क्वचिद्गुणेती"ति प्रतीकमादाय- "अर्थानां वृत्तिविग्रहयोर्गुणप्रधानत्वं समानमिति यत्तदविवक्षितमिति तदर्थः। यतस्तद्धितार्थोपदर्शके आख्याते वृत्त्यपेक्षया गुणप्रधानभावस्य विपर्ययात् वैपरीत्यं क्रियाप्रधानत्वादिरूपं दृष्टमित्यर्थः। तदाह विग्रहवाक्यानीहेती"ति शब्दरत्ने विवृतम्- वैयाकरणभूषणसारे- तद्धितग्रहणं कृतामप्युपलक्षणम्- गुणप्रधानभाव विपर्ययः काल विपर्ययस्याप्युपलक्षक इत्यभिप्रायेणैव "आख्यातं तद्धितकृतोरिति गुणप्रधान भावादा"विति चेयमेव कारिका पठिता- एवं च

वोढेती''त्युक्तम्- तत्र शब्द भेदादित्यस्य वहतीति क्रियाप्रधानम्- वोढेति कर्तृप्रधानमित्यर्थः- अर्थसामान्यादित्यस्य वृत्त्यर्थोपदर्शके तद्वहतीत्यत्रापि विशेषणविशेष्यभावव्यत्यासा द्वहनकर्तेत्येवार्थः। वर्तमानकालस्त्वविवक्षितः। एवमन्यत्राप्यूह्य''मिति- मञ्जूषाया मप्येवमेव व्याख्यातवत शशेखरकृतो मते तु वृत्त्यर्थोपदर्शके सरसिजायत इत्यत्रापि लोकसिद्ध विशेषण विशेष्यभाव व्यत्यासेन जननकर्तृणीत्येवार्थ लाभात्कालस्या विवक्षितत्वाच्च वृत्ति विग्रहयोस्तुल्यार्थकत्व नियमस्य न कापि क्षतिः- कालाविवक्षायामपि लटस्साधुत्वं च- अवयवे हेतुग्रन्थे- ''वर्तमानत्वा विवक्षायामपि विरोधिकालाविवक्षया लटस्साधुत्वा''दित्यत्र गदाधरेण निरूपितम्।

वस्तुतस्तु- राजपुरुष इत्याद्यनित्य समासस्थल इव सरसिजमित्यादौ नित्यसमास स्थले वृत्त्यर्थवृत्तिवैकल्पिकत्व वृत्तिघटक पदस्वरूप बोधनोद्देशेन प्रवृत्त वाक्यरूप विग्रहस्यैवाभावान्नोक्तन्यायप्रसरावकाशः- नित्यश्चायं समासः- ''नित्यंक्रीडा जीविकयो''रित्यतो नित्यमित्यनुवर्तमाने ''उपपदमतिङि''त्यनेन समासविधानात्- अविग्रहोपि नित्यसमासः- अविग्रह इत्यस्य लौकिक विग्रहरहित इत्यर्थः- नित्याधिकारीय समासे समासघटकपदानां व्यपेक्षाया अभावेन लौकिकवाक्यस्यैवासंभवे वृत्तिविग्रह समानार्थकत्व नियमसंचार स्सति कुड्य इति न्यायेन निरवलम्बन एव। ननु च लौकिक विग्रहाभावेऽप्यलौकिक विग्रहोऽस्त्येवेति चेदस्तु नाम- किं तेन- अपरिनिष्ठिततया प्रयोगानर्हत्वेन तस्यासाधुत्वात्- लौकिक विग्रह एव हि परनिष्ठितत्वात् प्रयोगार्हः- तर्ह्य स्वपदविग्रहचास्ति नित्यसमास इत्युपदर्शित न्यायावतारस्सुलभ एवेति चेन्न- अस्वपद विग्रहत्वं च समस्यमानयावत्पदाघटितत्वम्- तथासत्यत्र वृत्तिविग्रहयोस्समानार्थकत्व निर्वाह प्रत्याशा तु दूरादेव भविष्यति। विग्रहे वृत्तिघटक यावत्पदाभावे तत्तुल्यार्थकत्व वर्णन दौर्घट्यात्- तस्मात्सरसिजमिति नित्यसमासे सरसिजायत इति वा सरसिजातमितिवा यथा कथंचिद्वृत्तिघटकपदज्ञापनाय समस्यमान पदार्थबोधक यत्किंचिद्वाक्यप्रयोगमात्रेण तस्य विग्रहत्वं न संभवति। विग्रहत्वव्यवहारोऽपि तस्य वाक्यस्य वृत्तिसमानार्थकत्वाभावेन गौणो बोध्यः- विग्रहो नाम वृत्त्यर्थावभोधकं वाक्यं तत्तत्समासघटक पदानां तत्तत्समास प्रवृत्तियोग्य विभक्त्यन्तानां पृथक्प्रयोगरूपमिति नात्रोक्त न्यायपदन्यासावकाशः- विस्तरस्तु मञ्जूषा शब्देन्दुशेखरादौ द्रष्टव्यः।

धातोः "सप्तम्यां जनेर्ड" इति विगृह्णन्नपि भानुः तत्रैव-कुब्जादिमतोऽपरत्र "अब्जौ शङ्खशशाङ्कौ चे"त्यत्र च-कौ जायते-अप्सु जायते-"सप्तम्या"मिति ड इति- "प्रजास्स्यात्संततौ जने" इत्यत्र "प्रजायते" "उपसर्गे च संज्ञाया"मिति डः-"दन्त विप्राण्डजा द्विजाः। अजा विष्णुहरच्छागा" इत्यत्र "द्विर्जायते-न जायते-"अन्येष्वपि दृश्यत" इति डः-"इति च व्यगृह्णात्-उदाहृत सूत्रविहितो ड प्रत्यय स्सर्वोऽपि भूते इत्यधिकारस्थ एव। अत एव च-"तज्जलानिति शान्त उपासीते" त्यस्य व्याख्यानावसरे "जायत इति जं लीयत इति लम्-जलशब्दौ ड प्रत्ययान्ता" वित्युपनिषद्भाष्यम्-"ब्रह्मणो जातत्वा"दिति श्रीमद्भाष्यं च परस्परं न विवदेते इति ध्येयम्-यथा कथंचित्समस्यमान पदार्थबोधक यत्किंचिद्वाक्यप्रयोगेऽपि भूतार्थ प्रत्यायनमावश्यक मित्याग्रहे जायत इत्यत्र स्मेत्यध्याहारे तदपि सुलभमेव-एवमेव-यज्वा-विसृतम्-विस्तृतम्-इत्यादौ यजतेस्म विसरति स्म विस्तीर्यते स्मेत्यादि विग्रहा स्सुधायां प्रदर्शिताः-न च स्म शब्दस्य साक्षात्प्रयोग एव भूते लट्-नत्वध्याहारे-इति वाच्यम्-तथा नियमादर्शनात्-तथा च पस्पशायां महाभाष्ये "उभयथाह्याचार्येण सूत्राणि पठितानि-आकृतिं पदार्थं मत्वा जात्याख्याया मेकस्मिन् बहुवचन मन्यतरस्यामित्युच्यते। द्रव्यं पदार्थं मत्वा सरूपाणा मित्येकशेष आरभ्यत" इति। अत्र पठितानीति भूतत्वेन निर्दिष्टमेव उच्यते आरभ्यत इति वर्तमान निर्देशेन विवृतम्- नह्यत्र विना स्म शब्दाध्याहारं भूतत्वं शक्यं प्रत्याययितुम्- अत एव हि "ततः पश्यति धर्मात्मा तत्सर्वं योगमास्थितः। दृश्यते ब्रह्मवत्सर्वं क्षेमयुक्तं च चक्रिरे। सप्तर्षयो दीप्तिमन्तो विराजन्ते यथादिवी"त्यादौ पश्यतिस्म दृश्यतेस्म विराजन्तेस्मेति स्म पदाध्याहारेण भूतार्थत्वं निर्व्यूढं रामायण भूषणे। येऽप्यन्ये महाभाष्ये "माङ्गळिक आचार्यो महतश्शास्त्रौघस्य मङ्गळार्थं वृद्धिशब्दमादितः प्रयुङ्क्ते। य एतेऽक्षु प्रत्याहारार्था अनुबन्धाः क्रियन्ते। न खल्वेल्वप्येतेषामक्षु प्राधान्येनोपदेशः क्रियते। य त्तुल्यजातीयां स्तुल्यजातीयेषूपदिशति। तज्ज्ञापयत्याचार्यः-तदेतदाचार्य स्सुहृद्भूत्वाऽन्वाचष्टे। कौशलमेतदाचार्यो दर्शयति। क्वचिदकर्तव्यं च करोति कर्तव्यं च न करोती"त्याद्याभूतेऽपि लड्घटिताः परस्सहस्राः प्रयोगाः-अन्यत्र च-"न तेष्वहस्सु श्रान्तो वा क्षुधितो वाऽपि दृश्यते। ब्राह्मणा भुञ्जते नित्यं नाथवन्तश्च भुञ्जते। तापसा भुञ्जते चापि श्रमणा भुञ्जते तथा। अनिशं भुञ्जमानानां न तृप्तिरुपलभ्यते। नियुद्धकेळिं निशि निर्मिमाते। समीकमेतौ सममादधाते।कौरव्यमाह कुरुसंसदि कंसवैरी" त्यादयः-तेऽप्येवमेव निर्वाह्याः। न च जात्याख्यायामित्यादिसूत्रोक्त्यादि क्रियाणां वर्तमान कालिकतैवेति लडुपपत्तिश्शक्यं कर्तुम्- तत्क्रियाणां चिरातीतत्वात्- अत एव च वर्तमान

जायते इति व्युत्पादनमपि सम्यगेवेयत्त प्रकृतमनुसरामः।

सरसिजं निलय आलयो यस्यास्तथोक्ताऽपि- "पद्मालये पद्मदळायताक्षी" त्यादिकमत्र स्मर्तव्यम्- विभोर्भावः वैभवम्-"इगन्ताच्च लघुपूर्वा"दिति भावार्थेऽण्-तेन- "त्वया च विष्णुना चाम्ब जगद्व्याप्तं चराचर"मित्युक्त जगद्व्यापनेनेत्यर्थः-निरेनसि- अनघे-"कलुषं वृजिनैनोऽघ"मित्यमरः। मुनीनां शुभाश्रयालम्बन मननशीलानाम्-मानसे- "मनसा तु विशुद्धेने"त्युक्तरीत्या विशुद्धे चेतसीत्यर्थः-स्फुरसि दीप्यसे-हाराः-अष्टोत्तरशत लतायुक्ता मुक्तावळयः-"शतमष्टयुतं हार" इति बृहत्संहितोक्तेः-ते-उपोढाः धृताः-येन- तस्मिं स्तथोक्ते- मुररिपोः श्रीनिवासस्य- उरसि- स्फुरसि दीप्यसे- पुरा भवाः पुरातन्यः- "सायंचिर"मित्यादिना ट्युलि-तुटि-यकारस्यानादेशः- टित्त्वलक्षणो ङीप्- तासां अपौरुषेयीणाम्- गिराम्- "अनादि निधनाह्येषा वागुत्सृष्टा स्वयंभुवा। आदौ वेदमयी दिव्या यतस्सर्वाः प्रवृत्तय" इत्युक्तानां वाचाम्- वेदानामित्यर्थः- शिरसि अन्ते च- उपनिषदि चेत्यर्थः- जात्यभिप्रायकमेकवचनम्- शिरश्शब्देनाव्यवहित प्रवृत्तानन्यपरभागस्य स्तुत्यलक्ष्मीविषयप्रमाणस्य निरतिशयोत्कर्षस्सूचितः। स्फुरसि- प्रदर्शनमिदं प्रतिवस्तु परिपूर्णतयाऽवस्थानस्य- अत स्सर्वव्यापिन्या स्तव सर्वत्रापि नित्यनिवासे निराबाधे पद्मभगवदुरसो रुभयोर्युगपन्नित्यावस्थानं न विप्रतिषिद्धमिति भावः। अत्र श्रिय एकस्या एवानेकत्र वर्णनाद्विशेषालंकारभेदः- "विशेषस्सोऽपि यद्येकं वस्त्वनेकत्र वर्ण्यत" इति लक्षणात्। पादचतुष्टयेऽपि प्रथमाक्षरानन्तरमर्थभेदेन सस्वरव्यञ्जनद्वयावृत्तेर्यमकम्- नकार सकारादि व्यञ्जन पुनरुक्ते वृत्त्यनुप्रासश्चे त्येतेषामेकवाचकानुप्रवेश लक्षण स्संकरः। न चात्र पर्यायालंकारः कुतो नस्यादिति भ्रमितव्यम्- श्रियो यौगपद्येनैवानेकत्रावस्थानवर्णनेन पर्यायेणैकस्या अनेकाधाराश्रयण वर्णनाभावात्- "पर्यायो यदि पर्यायेणैकस्यानेक संश्रय" इति हि तल्लक्षणम्। पुष्पिताग्रावृत्तम्॥

**मू. शुभश्रीवत्सांकं शुचि रुचिरहारम् मुररिपो**
**स्तमालाभं वक्षस्तरळवनमालासुरभिळम्।**
**परिष्कुर्वाणां त्वां भवजलधिशोषाय कलये**
**जगन्मातः प्रातस्तनजलजदायादवदनाम्॥ 20**

एवं पुरातनीनां गिरां शिरसि च स्फुरसीति भगवत इवास्या अपि सर्वपरविद्यावेद्यत्वं

कुर्वतीं सर्वलोक सवित्रीं संसार सागरोत्तरण मभ्यर्थयमानोध्यायत्येकेन श्लोकेन। शुभेति। हे जगन्मातः- इदं च- यद्यपि पूर्वश्लोके विशुद्धतम मुनिमानसध्येयाऽसीत्यवोचम्- तथाऽपि दायधनक्रमेण सर्वतनयसाधारणे त्वद्ध्याने प्रवृत्तोऽतिमात्रमविशुद्धहृदयोऽप्यहमपि नापराध्यामीति सूचयितुम्- शुभः कल्याणावहः- श्रीवत्सरूपः- अङ्कः चिह्नं भूषणं वा यस्य तत्तथोक्तम्- शुभश्रीवत्सस्य- अङ्कं स्थानमिति वा- ''अङ्को भूषारूपकलक्ष्मसु। चित्राजौ नाटकाद्यंशे स्थाने क्रोडेऽन्तिकागसो''रित्यभिधानचिन्तामणिः- अनेन निवासार्हं शुभलक्षणवत्त्वमुक्तम्- शुचयः शुद्धाः- रुचिराः मनोहराः दीप्यमाना वा- ''रुच दीप्तावभिप्रीतौ च'' अस्मात् ''इषिमदिमुदी''त्यादिना किरच्। उक्तविधाः हाराः- ''कुर्यान्मौक्तिकदामानि त्रीण्यागुल्फं प्रकल्पयेत्'' इति पाद्मसंहितोक्त प्रकाराणि- मौक्तिकदामानि- यस्मिं स्तत्तथोक्तम्- अनेनागन्तुकपरिष्कार उक्तः-तमालस्य ता पिञ्छस्याभेवाभा यस्य तत्तथोक्तं ''सप्तम्युपमाने''त्यादिना बहुव्रीहिरुत्तरपदलोपश्च- अत एव धर्मोपमानवाचकलुप्तोपमा- विस्तरस्त्वन्यत्र- कालस्कन्धस्तमालस्स्यात्तापिञ्छ'' इत्यमरः। अनेन नैसर्गिकं रामणीयकमभिहितम्- तरळा व्यालोला- ''चञ्चलं तरळं चैवे''त्यमरः- या- वनमाला- ''कल्पयेद्वनमालां तु नानापुष्पसमुज्ज्वलाम्। नानारत्नमयीं वाऽपि यद्वा केवलपङ्कजाम्। कर्णतश्चरणं यावल्लम्बये दद्भुताकृतिम्। अथवा वल्लिकाकारां नाहतश्चतुरङ्गुलाम्'' इति पाद्मोक्तलक्षणा- ''वैजयन्त्याख्या माला-तया- सुरभिळं परिमळितम्- सुरभिशब्दात् घ्राणतर्पणगन्थ वाचकात् सिध्मादित्वान्मत्वर्थीयो लच्- अनेन सौगन्ध्यमभिहितम्- एतावता संदर्भेण ध्येयतयाऽभिमताया श्श्रियो निवासस्थानपरिष्करण वर्णनं ध्यानौत्सुक्योत्तम्भनाय- मुररिपोः श्रीनिवासस्य- वक्षः- परिष्कुर्वाणां अलंकुर्वतीम्- ''संपरिभ्यां करोतौ भूषणे'' इति सुडागमः- इणः परत्वात् षत्वम्- पूर्वोक्त वक्षस्थल परिष्कार स्सर्वोऽपि त्वन्निवासेनैव परिष्कृतः- अन्यथा काननकौमुदीप्राय एव स्यादिति भावः।

अथालम्बनसंशीलनसौकर्यावहां प्रसन्नतामभिप्रयन्विशिनष्टि। प्रातस्तनेति। प्रातर्भवं प्रातस्तनम्- ''सायंचिर'' मित्यादिना ट्युप्रत्यये तुट्यनादेशः- यत् जलजं कमलम्- अनेनाम्लानत्वाशिथिलदळत्व सुरभिळत्व मनोहरत्वादीनि व्यज्यन्ते- तस्य- दायादः बान्धवभूतम्- वदनम्- यस्यास्तां तथोक्ताम्- ''दायादस्तु भवेत्पुंसि सपिण्डे तनयेऽपि चे''ति मेदिनी- दायमादत्ते दायादः- ''आतश्चे''ति कः- यद्वा- अत्तीत्यदः-

वाचित्वा द्दायादादिशब्दा अपि ग्राह्या इति ध्येयम्- अत एव धर्मिव्यवधानेन सादृश्य प्रतिपादनादार्थी उपमा- गूढार्थ विवरण कृतस्तु- "ज्ञातिसोदर बन्ध्वादि शब्दा स्साधर्म्यवाचका" इत्याहुः- अयं ग्रन्थो न काव्यादर्शे दृश्यते। त्वां "सर्वार्ति समुद्र परिशोषिणी"ति प्रख्याताभिख्यामिति भावः- एवं ध्यानालम्बनगतं प्रसन्नतादिकमुक्तम्- अथ ध्यानप्रयोजनं निर्दिशति। भवेति। भवो जलधिरिवेति वा भव एव जलधिरिति वा समासः- अत एवोपमारूपकयो स्संदेह संकरः- तस्य संसारसागरस्य- शोषाय निश्शेषीकरणाय- संसारसागरं शोषयितुमित्यर्थः- कलये पुनः पुनस्संशीलयामि- ध्यायामीत्यर्थः- "कलगतौ संख्यानेचे"ति चौरादिकाददन्तात्कर्तरि लट्- कवीनां कलिः कामधेनुरित्याहुः- अत्र त्वामिति विशेष्यस्य विवक्षितसंसारसागर परिशोषण सामर्थ्याभिप्राय गर्भत्वात्परिकराङ्कुरः- भवजलधिशोषरूप फलेन सह ध्यानरूपहेतोर्वर्णना- द्धेत्वलंकारश्च- भवजलधीति संदेहसंकरगोचरोपमारूपकाभ्यामेकवाचकानुप्रविष्टतया संकीर्यते। तमालाभमित्युपमासंकीर्णेन शुभ श्रीवत्साङ्कमित्याद्युक्तसमृद्धिमद्वस्तु वर्णनात्मकोदात्तेन- प्रातस्तन जलजेत्याद्युपमया च संसृज्येते- अनुप्रास स्त्वभ्युच्चीयते- कवेर्लक्ष्मीविषयक भावाभिव्यक्तेर्भाव ध्वनिः-यत्तु-अथ च हरेर्वक्षश्शुभं शसयोरभेदा- त्सुभम्- सुष्ठु अचलम्- दक्षिणध्रुवत्वाद्भं तारा यस्य अगस्त्यरूपं तत्परिष्कुर्वाणां ततोऽप्यति समर्थामिति। अयं भवजलधिशोषकत्वे यथा कथंचिद्धेतुर्योजनीय" इति प्रतीच्यः प्रललाप- तत्त्वतिक्लिष्टमते स्तस्यैव हृद्यम्- शिखरिणी वृत्तम्॥

**मू.** **प्राचीनवाक्परिषदां परतत्त्वचिन्ताम्**
**व्याळेन्द्रभूधरपति र्व्यपनेतुकामः।**
**कान्तो बिभर्ति भवतीं कलशाब्धिकन्ये**
**भूषाविशेषमिव देवि भुजान्तराळे॥** **21**

अथ भगवता श्रियो वक्षस्थलेऽवस्थापने प्रकारान्तरेण हेतुं संभावयन्नाह। प्राचीनेति। हे देवि सर्वलोकेश्वरि- कलशाब्धिकन्ये- कान्तः "कथाभिरभिरामाभि" रित्याद्युक्त लक्षणः त्वद्वल्लभः-व्याळेन्द्रभूधरपतिः शेषाद्रिनाथः परं ब्रह्म पुरुषोत्तमो नारायणः- प्राचीनाः पुरातन्यः "विभाषाऽञ्चेरदिक्स्त्रिया"मिति स्वार्थिकः ख प्रत्ययः- याः वाचः श्रुतय इत्यर्थः- तासां परिषदः गोष्ठ्यः- "समज्या परिषद्गोष्ठी"त्यमरः- तासाम्- अनेन

हिरण्यगर्भश्शिव इन्द्रादिर्वेति तद्विषयकं संदेहमिति भावः- अत्र श्रुतिपरिषत्सु चेतनत्व समाधिना वा "अभिमानिव्यपदेशस्त्वि"ति न्यायेनाभिमानिदेवतापरत्वेन वा चिन्तोक्तिरिति ध्येयम्- व्यपनेतुं निराकर्तुं कामो यस्य स तथोक्तस्सन्- "तुंकामे"ति मलोपः- भवतीं त्वां स्वस्य परतत्त्वतां निर्धारयित्रीमिति भावः- भूषाविशेषमिव- भुजान्तराळे- बिभर्ति- यथा लोकोत्तरमाभरणमादरातिशयेन भाग्यवान् स्वसौभाग्य प्रकाशनाय वक्षसि स्फुटं बिभर्ति- तद्वदयं श्रीनिवास श्श्रुतिपरिषद्भ्य स्स्वपरतत्त्वतां प्रथयितुं सकललोक लोचनगोचरतया त्वां वक्षसि बिभर्तीति भावः।

इदमत्रानुसंधेयम्- 'यतो वाचो निवर्तन्त' इत्यादि श्रुतमहामहिमशालिपरतत्त्वनिर्णये यथावस्थिततत्साक्षात्कारमन्तरेण स्वयमक्षमाः परमपुरुषेण भगवता कृपया प्रकाशितां स्वस्य लक्ष्मीपरिष्कृतहृदयतां निर्वर्ण्य- "सहस्रशीर्षा पुरुष" इत्यारभ्य- "तस्य धीराः परिजानन्ति योनि"मित्यन्तेन संदर्भेण पुरुषशब्दवाच्यस्य सहस्रशिरःपादादिमत्त्व- विश्वशरीरकत्व- मोक्षदातृत्व-महामहिमत्व- सर्वतोज्यायस्त्वसर्वभूतैकपादत्व- त्रिपाद्विभूतिमत्त्व- विश्वाक्रमणकारित्व-चराचरस्रष्टृनानावयवत्व-तमःपारवर्तित्व- सर्वप्रपञ्चनामरूपव्याकर्तृत्व-कर्मनिबन्धनजन्मविधुरत्व-स्वेच्छाकृतानेकावतारत्वादि- वैभवशालितयाऽस्माभिः प्रतिपादितः पुरुषोऽयमेवेति निश्चित्य- "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ"विति तस्य लक्ष्मीपतित्वमभिधाय-तमेवोत्तरत्र "अम्भस्यपार" इत्यत्र "न तस्येशे कश्चन तस्य नाम महद्यशः- यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्- परात्परं यन्महतो महान्त"मित्यादिना सर्वस्मात्परत्वेन प्रदर्श्य- तत उपरि नारायणानुवाके- "सहस्र शीर्षापुरुषः- पुरुष एवेदग्ं सर्व"मिति पूर्वं पुरुषसूक्तोक्तमेवार्थम्- "सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम्। विश्वं नारायणं देवम्-विश्वमेवेदं पुरुष" इति प्रत्यभिज्ञापयन्त्यः पुरुषनारायणशब्दयोरेकविषयत्वं प्रतिपाद्य- "नारायण परं ब्रह्मे" त्यादिना तत्तत्परविद्याप्रकरणश्रूयमाण परब्रह्मपरज्योतिरादिशब्दवाच्यस्य वस्तुनो नारायणत्वं विदधानाः- "तत्त्वं नारायणः पर" इत्यनेन परमपुरुषो नारायणः पूर्वोक्त श्श्रीपतिरेव परतत्त्वमिति निश्चिन्वन्ति-एवं परमपुरुषः परतत्त्वतानिर्धारकं स्वस्य सलक्ष्मीकत्वमेव यदि नादर्शयिष्यत्तर्हि श्रुतिपरिषदां परतत्त्वविषयिणी चिन्ता न कदाप्यशमिष्यदेवेति। अत एव "यदपाङ्गाश्रितं सर्वं जगत् स्थावरजङ्गमम्। यस्य वक्षसि सा देवी प्रभाग्नेरिव तिष्ठति। स वै सर्वेश्वर श्श्रीमानक्षरः पुरुषोत्तमः। स वै नारायण

यद्वा। परतत्वचिन्तामित्यस्यैवमर्थः- परः परमात्मा- ''परं दूरान्यमुख्येषु परोऽरि परमात्मनो''रिति वैजयन्त्यनुशासनात्- ''ब्रह्मविदाप्नोति पर'' मित्यादौ परशब्देन तस्य निर्देशाच्च- तस्य- यत्तत्वं स्वरूपम् ''तत्त्वं वाद्य प्रभेदे स्यात् स्वरूपे परमात्मनी''ति विश्वः- ''तत्त्वं विलम्बमाने स्यात्स्वरूपे परमात्मनी''ति रत्नमाला च- तस्य चिन्ताम्- तत्स्वरूपं केन निरूप्यं स्यादिति चिन्ताम्- व्यपनेतुकामस्सन्- भवतीं भूषाविशेषमिव भुजान्तराळे-बिभर्तीति। परमात्मस्वरूपं कीदृशं स्यात्- ''यदात्मा वा अरे द्रष्टव्य'' इत्यादिनाऽस्माभिरुपास्यत्वेनाम्नायत इति संदिहाना श्श्रुतिपरिषदो भगवद्वक्षसि भवतीं निध्यायैतन्निदर्शनेन- ''श्रद्धया देवो देवत्वमश्नुत'' इत्यादिना त्वन्निरूपितमेव तत्स्वरूपमिति निश्चिन्वानाः- ''ह्रीश्च ते लक्ष्मीश्चे''ति प्रथमं लक्ष्मीपतित्वेन निरूपितस्वरूपस्य परमपुरुषस्यैव- ''आत्मा नारायणः परः- तस्याश्शिखाया मध्ये परमात्मा व्यवस्थित'' इति परमात्मत्वं नारायणानुवाके प्रतिपादयन्तीति भावः। उदाहृतश्रुतौ श्रद्धाशब्दः- ''अहं श्रद्धा च मेधा चे''त्यादिप्रमाणैर्लक्ष्मीविषय एवेति द्रष्टव्यम्- श्रुति सब्रह्मचारीणि भगवच्छास्त्राण्यपि ''अहन्ता ब्रह्मणस्तस्य साऽहमस्मि सनातनी। अहंतया समाक्रान्तो ह्यहमर्थः प्रसिध्यती''त्यादिना सत्यत्वज्ञानत्वाद्यपेक्षया श्रिय एव प्रथमं ब्रह्मस्वरूप-निरूपकत्वं वदन्ति।

ननु- चेतनान्तरत्वेन द्रव्यवदत्यन्तपारतन्त्र्यासंभवा ल्लक्ष्म्याः कथं स्वरूप निरूपकत्वमिति चेत्- द्रव्यत्वेऽपि यथा प्रभायास्तेजोद्रव्यभूताग्न्याद्यपृथक्सिद्धत्वेन प्रभया विना तत्स्वरूपज्ञानासंभवाच्च स्वरूपनिरूपकत्वम्- एवं ''यथा मयाऽपि सा व्याप्ता तया व्याप्तोऽहमीश्वर'' इत्याद्युक्त्या परस्परापृथक्सिद्धत्वादहन्तेत्युक्ते र्लक्ष्मीमन्तरेण सर्वेश्वरस्य तस्य ज्ञातुमशक्यत्वाच्च चेतनत्वेऽपि स्वरूपनिरूपकत्वमुपपन्नमित्यवधेहि। अन्यथा प्रतर्दन विद्यायां विशेष्यतया वेद्ये परमात्मन्यचेतनप्राणवदिन्द्ररूपचेतनस्य विशेषणत्वेन विद्यावेद्यत्वाङ्गीकारः- स्वात्मशरीरक परमात्मोपासन प्रकरणे चेतनस्य स्वात्मनो विशेषणत्व स्वीकारः- मधुविद्यायां कार्यावस्थे कारणावस्थे चोपास्ये वस्वादेश्चेतनस्य विशेषणत्वा-भ्युपगमश्च विरुध्येरन्-अत एव श्रीमति रहस्यसारे-''ऐकरस्यजुषोश्शेषिदंपत्योस्सर्वकर्मसु। विशेषण विशेष्यत्वं श्रुतं कस्मान्न रोचते। प्रतर्दनादि विद्यासु वेद्येऽपि परमात्मनि। अचेतन वदिच्छाम श्चेतनं च विशेषण''-मित्याचार्यैरनुगृहीतं योयुज्यते। ज्ञानशक्त्यादि गुणानां

चन्द्रवदने त्वदाश्लेषोत्कर्षा द्भवति खलु निष्कर्षसमये। त्वमासीर्मातश्रीः कमितुरिदमित्थं-त्व विभव स्तदन्तर्भावात्त्वां न पृथगभिधत्ते श्रुतिरपी''ति। अथवा। तत्त्वं परमात्मा-कोशस्तूदाहारि। तद्विषयिणी चिन्ता- परा उत्कृष्टा अनवच्छेद्येति यावत्-या-तत्त्वचिन्ता-ताम्- ब्रह्मशिवादिषु मध्ये कस्स्याद्वा परमात्मेति चिन्तामित्यर्थः। व्यपनेतुकामो भवतीं भुजान्तराळे बिभर्ति- पूर्वोक्तरीत्या सलक्ष्मीकममुं परमपुरुषं विलोक्य तस्य लक्ष्मीपतित्वमभिधाय नारायणानुवाके परमात्मतां निरणैषुरिति भावः।

यद्वा। यद्यप्यस्माभिः- ''ह्रीश्च ते लक्ष्मीश्च पत्न्या''वित्यादिना लक्ष्मीपतिरेव परं तत्त्वमिति प्रत्यपादि। तथाऽप्यतीन्द्रियत्वादस्यार्थस्य को वा लक्ष्मीपतिरिति विद्मो वयं-येनायमेव परतत्त्वमिति निश्चिनुयामेति संशयीरन्नपीमे जनाः किं विधेयमिति तद्विषयां श्रुति परिषदां चिन्तां व्यपनेतुकाम स्त्वां स्फुटं हृदये बिभर्ति- तथाचेदृश भगवदवलोकेनेनायमेव परं तत्त्वमिति निश्चिन्वन्ति जना इति निर्णेष्यन्ति ता इति भावः। अथवा। अस्माभिः क्वचित्- ''पतिं विश्वस्ये''त्यादिना नारायण एव सर्वेश्वरतया परं तत्त्वमिति- क्वचित्- ''ईश्वरीगं् सर्वभूताना''मिति लक्ष्मीरेव परं तत्त्वमिति चाम्नातम्- तदनयोः किमन्यतरत्परं तत्त्वम्- आहोस्विदुभयमपीति स्वोक्तार्थान्यतरनिर्धारणाक्षमतानिबन्धनां श्रुतिपरिषदां चिन्ताम्- व्यपनेतुकामः- न खलु भवतीभिस्संदेग्धव्यम्-आवामुभावपि परं तत्त्वमेवेति प्रदर्शयितुं सर्वेश्वरत्वेन स्वतुल्यवैभवां भवतीमनारतं गाढोपगूढतया वक्षस्थले बिभर्तीति भावः। नन्वेवं द्वावपि चे त्परं तत्त्वं तर्हि तत्त्वाधिक्यात् ''भोक्ता भोग्यं प्रेरितारं च मत्वा-क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशतेदेव एकः''। इति श्रुत्युक्त तत्त्वत्रय विभागव्याघात प्रसङ्ग इति चेन्न- उदाहृत श्रुतिभिश्श्रिय ईश्वरकोटावन्तर्भावेन तत्त्वत्रय विभाग व्याघातविरहात्- अन्यथा जीवकोट्यनुप्रविष्टानां जीवानामानन्त्यात्तत्त्वत्रय विभागवचनं व्याहन्येतैव। अत एव लक्ष्मीतन्त्रे षड्विंशाध्याये ''एकमादौ परं तत्त्वं लक्ष्मी-नारायणात्मकम्। पूर्णस्तिमितषाड्गुण्यं स्वच्छ स्वच्छन्द चिद्घन''मिति शक्रं प्रति श्रीवचनं संगच्छते। नन्वत्र वचने एकं लक्ष्मीनारायणात्मकं परं तत्त्वमित्यनेनानयो स्स्वरूपैक्यं प्रतिपाद्यते- तथा सति ''ह्रीश्च ते लक्ष्मीश्च पत्न्यौ-अस्येशाना जगतो विष्णुपत्नी''ति व्यतिरेकनिर्देश विरोध इति चेत् ज्ञानानन्दाद्यत्यन्तसाम्याज्जगज्जनकत्व व्यापकत्वशरण्यत्व-प्राप्यत्वेश्वरत्वादि स्साम्याच्चैक्यव्यपदेशोपपत्तेर्न व्यतिरेकनिर्देशो विरोत्स्यत इत्यवधेहि। ''ज्ञानानन्दात्मकं रूपं ब्रह्मणो मम चोभयो'' रित्यादिभि र्लक्ष्मीनारायणयो र्ज्ञाना-

नन्दात्मकत्वेनात्यन्तसाम्यम्- "आनीदवातग्ं स्वधया तदेकम्- स वासुदेवो भगवान् सृष्टिस्थित्यन्तमुक्तिदः। अधिष्ठायगुणान् सृष्टिस्थिति संहारकारिणी। एषैव सृजते काले सैषा पाति जगत्त्रयम्। जगत्संहरते चान्ते तत्तत्कारण संस्थिता। शक्तिमत्परमं ब्रह्म नारायणमहं भवत्। शक्तिर्नारायणी सा ह महन्ताभावरूपिणी। सप्रदेशो न तस्यास्ति येन भूतं मया विना। स प्रदेशो न मे कश्चिद्विना तद्येन भूयते। एकधा च द्विधाचैव तैस्तैस्तत्त्वाब्धिपारगैः। व्यपदिश्यावहे शास्त्रे तावावां सर्वकारण"मित्यादिभिर्जगज्जनकत्वेन विभुत्वेन चात्यन्तसाम्यम्- "अकारेणोच्यते विष्णुस्सर्वलोकमहेश्वरः। उद्धृता विष्णुना लक्ष्मीरुकारेणोच्यते तथा। मकारस्तु तयोर्दास इति प्रणवलक्षणम्। अस्या मम च शेषं हि विभूति रुभयात्मिका। ईशानो भूतभव्यस्य-अस्येशाना- लक्ष्म्यास्समस्तश्चिदचित्प्रपञ्चो व्याप्यस्तदीशस्य तु साऽपि सर्वम्। तथाऽपि साधारणमीशितृत्वं श्री श्रीशयोर्द्वौ च सदैक शेषि" इत्यादिभिश्शरण्यत्व प्राप्यत्वेश्वरत्वादि नाऽत्यन्तसाम्यं च स्फुटं प्रतिपाद्यते। "स्वधा त्वं लोकभावनी" त्युपबृंहणानुसारेण स्वधा-शब्दस्य लक्ष्मीवाचकत्वात् स्वधाशब्दित लक्ष्मीविशिष्टस्य परमात्मन स्सृष्टिप्राक्काले आनीदिति सत्तायाः प्रतिपादिततया जगज्जनकत्वसिद्धि"रिति श्रीमद्रङ्गरामानुज मुनिभिरानीदिति श्रुत्यर्थोऽनुगृहीतो न्यायसिद्धाञ्जनव्याख्यायाम्। तस्मादनयो श्श्रीश्रीशयोः- "तुल्यशीलवयोवृत्ता" मित्युक्तरीत्या ज्ञानानन्दादि विशिष्ट द्वंद्वरूपेणात्यन्त साम्यादयमेकत्व व्यपदेश इति ध्येयम्।

ननु च स्त्रीपुंसत्व शेषशेषिभावादिभेदकधर्मेषु जागरूकेष्वपि कथमत्यन्तसाम्यम्- अत्यन्तसाम्येऽपि वा कथमैक्यव्यपदेशस्योपपत्तिरिति चेत्- ज्ञानानन्दत्व जगज्जनकत्व शेषित्वादि प्रकारैक्यादिति जानीहि- दृश्यते हि प्रकारैक्येऽप्येकत्व व्यवहारः- एको व्रीहिरित्यादौ- अत एवानुगृहीतं न्यायसिद्धाञ्जने जीवपरिच्छेदे- "जीवाद्वैतवचनानि तु प्रकारैक्यविषयाणि। प्रकारैक्येऽपि ह्येकादिशब्दाः प्रयुज्यन्ते-यथा अयमयं चैको व्रीहिरिति। "रामसुग्रीवयोरैक्य"मित्यादि च भाव्यम्- ततश्चायं संग्रहः। अविरोधान्तरङ्गत्व जाति भोगाद्यभेदतः। एकोक्तिरपृथक्सिद्धेर्देशकाल दशादिभि" रिति। तत्रैव ईश्वर परिच्छेदे श्रीश्रीशयोस्साम्यैक्यादिनिर्वाहः कण्ठत एवानुगृहीतः। "श्रिया सह तु दांपत्यं शाश्वतं तत एव तु। तयोस्याम्यैक्य शक्तित्वतद्वत्त्वादिगिरां गतिः। ज्ञानानन्दाद्यत्यन्त साम्याज्जगज्जनकत्व शेषित्व शरण्यत्व प्राप्यत्वादि साम्याच्च साम्यगिरां निर्वाहो व्यक्तः-

विग्रहैक्यस्य श्रुतिविरुद्ध स्वरूपैक्यादिकल्पकत्वायोगात्- तथाऽप्येकेनैव परमात्मना यथाकथंचित्सर्वनिर्वाहे किमत्रात्मभेदस्वीकारेणेति चेन्न- क्लुप्तौ वक्तव्यस्य श्रुतौ वक्तुमयुक्तत्वात्- उक्ता च श्रुतिः "विष्णुपत्नी"त्यादिः प्रागेव। तदनुगुणं च श्रीविष्णुस्मृतौ भूमिवाक्यम्- "आक्रम्य सर्वां तु यथा त्रिलोकीं तिष्ठत्ययं देववरोऽसिताक्षि। तथास्थिता त्वं वरदे" इति। "त्वया च विष्णुना चाम्ब जगद्व्याप्तं चराचरम्। नानयोर्विद्यते पर"मित्यादि पुराणवचनैः- "अहं नारायणी नाम नारायणमनुव्रता। ज्ञानानन्दक्रियात्मानं ज्ञानानन्द क्रियामयी। तस्य मे न विना भाव स्तेन वा तस्य वा मया। प्रकर्तुं शक्यते काले कस्मिंश्चिद्देश एव वा। तत्तत्कार्यवशाच्चैवान्यद्भूतौ भूतरूपकौ। आत्मयोगबलात्तौ स्वस्सहैव पृथगेव वा। ब्रह्मादिर्दत्तवान्यादृक्तपो योगबलात्कृतः। दैत्यादिभ्यो जगद्ध्वंसकरेभ्यो वरमुत्तमम्। तादृशं तादृशं रूपमास्थायावां सनातनौ। तत्तत्प्रियचिकीर्षायै चरावो देवकार्यतः" इति। "एष चैषा च शास्त्रेषु धर्मधर्मिस्वभावतः। भवद्भाव स्वरूपेण तत्त्वमेक मिवोदितौ। व्यापकावति संश्लेषा देकतत्त्वमिवोदितौ।" इत्यादि लक्ष्मीतन्त्राहिर्बुध्न्यसंहितादि भगवच्छास्त्र वचनैश्च स्वरूपैक्य मनयो रपास्तम्- लाघवात्तन्मात्रावलम्बनेतु सर्वेषामप्यात्मनामैक्यं प्रसजेत्। एवमेव- "वासुदेवः परं ब्रह्म नारायणमयं महत्। तस्याहं परमा शक्ति रहंता नाम चिन्मयी। भिन्नाभिन्ना च वर्तेऽहं ज्योत्स्नेव हिमदीधितेः। तावावां तत्त्वमेकं तु द्विधाभूत्वाव्यवस्थितौ।" इति लक्ष्मीतन्त्रे पञ्चदशाध्याये श्रीपते श्श्रिया सहैक्य भेदाभेदादि व्यपदेशोपि- "ज्योत्स्नेव हिमदीधिते" रिति तत्रत्यदृष्टान्तानुसारेण प्रभा प्रभाश्रययोरिव स्वरूपभेदा विरोधेनैव निर्वाह्यः। यथाश्रुतं स्वरूपैक्याभ्युपगमे- "कान्तस्य तस्य देवस्य विष्णो स्सद्गुणशालिनः। दयिताऽहं सदा देवी ज्ञानानन्दमयी परा। अनवद्याऽ नवद्याङ्गी नित्यं तद्धर्मधर्मिणी"ति। "ताविमौ दंपती दिव्यौ पितरौ जगतां मता" विति च तत्रैवोक्तस्य नित्यदांपत्यस्य विरोधः प्रसजेत्। एवमेव हि "नरनारीमयो हरि"रिति ब्राह्मपूराणादि वचनं निर्व्यूढमाचार्यै श्चतुश्श्लोकीभाष्ये।

अत्र भूषा विशेषमिवेत्युपमानेन- यथा भूषणस्य भगवता सह स्वरूपैक्यं दुर्घटम्- तथाऽस्या अपीति सूचितम्- जगत्सृष्ट्यादि लीलासूभयोस्सामरस्याद्वा ऐक्यव्यपदेशो निर्वोढव्यः। उक्तं चोभयोस्सामरस्यं लक्ष्मीतन्त्रे सप्तदशेऽध्याये। "महिषी देवदेवस्य सर्वकामदुघा विभोः। तुल्या गुणवयोरूपै र्मनः प्रमथनैर्हरेः। तैस्तैरनुगुणैर्भावै र्याऽहं देवस्य शार्ङ्गिणः। करोमि सकलं कृत्यं नित्यं तद्धर्मधर्मिणी। साहमङ्कस्थिता विष्णो र्देवदेवस्य

र्यद्याप्तवचने भवेत्। रामसुग्रीवयोरैक्यमित्यादि वदिहास्तु से''त्याचार्यैरनुजगृहे। ईश्वरद्वित्वप्रसङ्गस्त्वैश्वर्य स्तबके परिहरिष्यत इति नात्र तत्परिहारः प्रतायत इत्यलं प्रसक्तानुप्रसक्तिकया।

प्रकृत मनुसरामः। यद्वा। प्राचीनवाक्परिषदामित्यादेरयं भावः। यद्यप्यस्माभिः ''तत्त्वं नारायणः पर'' इति नारायण एव परं तत्त्वमिति निरणायि- अथापि किमितोऽपि परं तत्त्वं किंचित्स्याद्वेति श्रुतिपरिषदां संशयं व्यपनेतुकामस्स्वस्यापि परतत्त्वतारूपातिशया धायकतया इयमेव मत्तोऽपि परं तत्त्वमिति प्रथयन् दिव्याभरणमिव भुजान्तराळे परमादरेण दधातीति। अस्मिन्पक्षे लक्ष्म्या भगवदपेक्षया परत्ववर्णनम्- ''श्रियश्श्रीश्श्रीरङ्गेशय तव च हृद्यां भगवतीं श्रियं त्वत्तोऽप्युच्चै र्वयमिह भणामश्शृणुतरा''मित्युक्तरीत्या प्रस्तुताया स्तस्याः प्रशंसार्थमेव- न तु वस्तुत इति ध्येयम्- अन्यत्सर्वं ''विश्वातीत'' इत्यादि श्लोक व्याख्यावसरेषु प्रपञ्चितम्- प्रपञ्चयिष्यते च प्राप्तावसरे तत्र तत्र- अत्र भगवतस्स्वाभाविकस्य लक्ष्मीवक्षस्थलावस्थापनस्योक्तविध श्रुतिपरिषच्चिन्ता व्यपनयन कामनाहेतुकत्व संभावनाद सिद्धविषया हेतूत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या-श्रुति परिषदामुक्तविधचिन्ताद्ययोगेऽपि तद्योग कल्पनात्मकातिशयोक्त्याऽनुप्राणिता- भूषाविशेषमिवेत्युपमया संसृज्यत इति संक्षेपः। वृत्तं वसन्ततिलका। यत्तु ''श्रीरेव हि परतत्त्वं हृद्यत्वात्ततो नान्यदिति सूचयितुं भवतीं भुजान्तराळे धत्त'' इति प्रतीचीनेन व्याख्यातम्- तत्र हृद्यत्वादित्यनेन किं हृदयप्रियत्वं विवक्षितम्- उत हृदयावस्थितत्वम्- आद्ये सुरनरतिर्यक्तरुलतादीनामपि केषां चित्तथात्वेन तेषामपि परतत्त्वतापत्तिः- द्वितीये- किं यस्य कस्य चिद्धृदयावस्थितत्वं विवक्षितम्- आहो स्विद्भगवत एव- तत्राद्ये पिपीलिकादीनामपि परतत्त्वता स्यात्- तेषामपि यस्य कस्य चिद्धृदयावस्थानसंभवात्- द्वितीये श्रीवत्सादीनामपि तथात्वप्रसङ्गः। अतो हृद्यत्वादिति हेतोर्व्यभिचारात्साध्यासिद्धिरेवेत्यलम्।

मू. स्वभावादुन्मीलद्बकुळसुमनःकोमलतनो
स्तव क्लेशाशङ्काकुलितहृदयेनापि हरिणा।
त्वदाक्रान्ते हन्त व्युदसितुमुरस्यम्ब पुलका
न शक्यन्ते लोके, न खलु सुलभः कण्टकजयः॥ 22

वन्येतरादाविव सुप्सुपेति वा समासः- अनेन- "अङ्गं पुष्पादिसंस्पर्शासहं येन तदुत्तम" मित्युक्तोत्तमसौकुमार्यं ध्वन्यते- तव- क्लेशाशङ्का श्रमो भविष्यतीति त्रासो वितर्को वा- "शङ्का त्रासवितर्कयो" रिति रत्नमाला। उपसर्गेण शङ्काया अतिमात्रता सूच्यते- तवेत्यस्य संबन्धिशब्दत्वेन क्लेशाशङ्केति समासैकदेशेन्वयोऽपि न दोषाय- प्रतियोगिकारक पदव्यतिरिक्तपदस्यैव वृत्तशब्दैकदेशान्वय निषेधात्- तथा चोक्तम्- "प्रतियोगिपदादन्यद्य दन्यत्कारकादपि। वृत्तशब्दैकदेशेन न तस्यान्वय इष्यत" इति। तया- आकुलितं व्यग्रीकृतम्- "व्यग्रो व्यासक्त आकुल" इत्यमरः- आकुलशब्दात्तत्करोतीति णि- जन्तात्कर्मणि क्तः- तादृशं हृदयं यस्य तेन तथोक्तेनापि- रोमोद्गम निरुरुत्सुनापीति भावः- हरिणा श्रीनिवासेन- हरिशब्देन- "ब्रह्माणमिन्द्रं रुद्रं चे" ति सर्वहरणशक्तिं वदता वक्ष्यमाण पुलक व्युदसन मीषत्करमस्येति द्योत्यते- ईदृश शक्तिमताऽपीति भावः। त्वदाक्रान्ते भवत्या समन्तादव्याप्ते- उरसि स्ववक्षसि- पुलकाः रोमोद्गमाः- "पुलकः कृमिप्रभेदे प्रस्तर भेदे च मणिदोषे। रोमाञ्चे हरिताळे गजान्नपिण्डे च गान्धर्वे"- इति मेदिनी- व्युदसितुं निरसितुम्- न शक्यन्ते- त्वदाश्लेषकृतोद्धर्षा रोमहर्षास्सत्येव तस्मिन् कथं सुनिरसा इति भावः। हन्तेति सर्वहरणपटीयसोऽपि भगवतः पुलक व्युदसनाशक्तत्वचिन्तनजनित विषादे- निश्चये वा- पुलकव्युदसनाशक्तिर्यथार्थैव- नातिशयोक्तिरिति भावः- "हन्त दानेऽनु कम्पायां वाक्यारम्भ विषादयोः। निश्चये च प्रमादे चे" ति हेमचन्द्रः। ननु सर्वहरण शक्ते स्सर्वेश्वरस्य कथं क्षोदिष्ठ पुलकव्युदसनमप्यशक्यमित्यत आह। लोक इति। लोके सर्वस्मिन्नपि भुवने- कण्टकानां क्षुद्रशत्रूणाम्- कर्मणिषष्ठी- रोमहर्षाणामिति तु वास्तवार्थः। "सूच्यग्रे क्षुद्र शत्रौ च रोमहर्षे च कण्टक" इत्यमरः जयः पराभवः- न सुलभः खलु- दुर्लभ एवेत्यर्थः। खल्विति वाक्यालंकारे "खलुस्याद्वाक्यभूषायां जिज्ञासायां च सान्त्वने" इति मेदिनी। अनुल्लङ्घित लोकशास्त्रमर्यादा महान्तश्चेच्छत्रवः कथं चित्सुजया एव सर्व मर्यादोल्लङ्घन जङ्घालास्त्रासलज्जादि वैधुर्येण निरङ्कुश विसृमरपैशुन्याः क्षुद्र शत्रवस्तु महतापि दुश्शका विजेतुम्- न ह्य प्रतिहत शौर्येणापि महाशार्दूलेनात्मवपुषि परापतन्तो दुराधर्षाः खलु भवन्त्यल्पीयांसोऽपि सरघासङ्घाः- ते हि केषु चित्कथंचि त्परास्तेष्वप्यन्ये पुञ्जीभूय दशन्ति-तेषु परास्तेषु तदन्ये वा पूर्वपरास्ता वा द्विगुण विप्रकृताः पुनः पुनः परापत्य दशन्तस्तं कदर्थीकुर्वन्ति- एवमेव क्षुद्र शत्रवोऽपीति तेषां दुर्जयत्वमिति ध्येयम्- गूढार्थ विवरणे तु- "क्षुद्रशत्रोरुपद्रवकरस्यापि निरसनं शूराणामपि दुर्बलहिंसारूपत्वेनाकर्तव्यत्वा द्दुर्लभमिति

रोमोद्गमव्युदसनरूपकार्यानुदयाद्विशेषोक्तिरलङ्कारः- तथा च राजानक रुय्यकीयं सूत्रम्- "कारण सामग्रे कार्यानुत्पत्तिर्विशेषोक्ति"रिति। इयं च पूर्वोक्तकाव्यलिङ्ग प्रसादासादित वैभवा- तन्निरसनदुश्शकत्वाभिप्रायगर्भत्वदाक्रान्तत्वरूपवक्षोविशेषणसमुन्मीलित परिकरालंकारदत्तहस्तावलम्बा-कण्टकशब्दोपात्त क्षुद्रशत्रु रोमहर्ष रूपार्थद्वय श्लेष भित्तिकाभेदाध्यवसायमूलकातिशयोक्त्यनुप्राणितार्थान्तरन्यासोत्तेजिता चेति संकरः- यत्तु- "कण्टकानां चोराणां जय" इति व्याख्याय- "कण्टकः क्षुद्रशत्रौ च चर्मस्थासकयोरपी"ति विश्व" इति कोशमप्युदाहृतवान् पाश्चात्यः- तन्न- कण्टकशब्दस्य चोरवाचितायाः कोशान्तरैस्तदुदाहृत कोशेनाप्यलाभात्- यदपि- "कण्टकजयस्तु न खलु सुलभ एव- नखं लुनातीति नखलु नाराचिका- तया सुलभ इति मतान्तरे इति तदीयं व्याख्यानम्- तदपीदृश श्लेषकल्पनस्य- "शस्त्रं न खलु कर्तव्य" मित्यादाविव प्रकृतानुपयोगादुपेक्ष्यम्- यच्चापि "समासोक्ति"रिति तदीयालंकार लेखनम्- तदप्यत्र प्रस्तुतेऽप्रस्तुतार्थ स्फूर्ते रनुन्मेषेण तद्गन्धाभावाद्भ्रान्तजल्पित मित्यपहास्यम्। नन्वत्र योगशास्त्रमात्र प्रसिद्ध क्लेशशब्द प्रयोगादप्रतीतिककाव्यदोषस्स्यादितिचे न्नैवम्- इह क्लेशशब्दस्योपतापार्थकत्वेना दोषात्- योगशास्त्रेत्वविद्याद्यर्थकत्वेनैव हि क्लेशशब्दः प्रसिध्यति। तथा च पातञ्जलं सूत्रम्- "अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्चक्लेशा" इति। अत एव- "युद्धे क्लेशगत" इत्यत्र क्लेशपदमभिनिवेशपरत्वेन योगशास्त्र प्रसिद्धमित्यप्रतीतिक"मिति साहित्यरत्नाकरोक्ति स्संगच्छते। वृत्तम् शिखरिणी॥

**मू.** **निरत्ययं नीलमहोनिधानं कान्तं मुकुन्दाभिध मिन्दिरे त्वम्।**
**निरञ्जनैरेव जनैर्गृहीतं वीक्ष्य स्थिता वक्षसि रक्षितुं किम्॥** **23**

अथ श्रियो भगवद्वक्षस्यवस्थाने प्रयोजनान्तरं संभावयन्नाह। निरत्ययमिति। हे इन्दिरे- परमैश्वर्यवाचिनाऽनेन वक्ष्यमाण निधिरक्षणावश्यंभाव स्सूच्यते- त्वम्- निरत्ययम्- "सदोपयोगेऽपि गुरुस्त्वमक्षयो निधि श्श्रुतीनां धनसंपदामिवे"त्युक्तप्रक्रियया सार्वकालिकोपभोगेऽप्यपचयविधुरम्- यद्वा- दुरतिक्रममित्यर्थः- इतरैराक्रान्तुमशक्यमिति यावत्- कान्तं मनोहरम्-नीलं-अहो-निधानमितिच्छेदः-नीलं नीलाख्यं-मुकुन्दं मुकुन्दाख्यं च "निधानगर्भामिव सागराम्बरा"मित्यादि प्रयोगात्- निधीयतेऽस्मिन् रत्नादिकमिति निधानम्- "करणाधिकरणयोश्चे"ति ल्युट्- "महापद्मश्च पद्मश्च शंखो मकरच्छपौ।

गृहीतमित्यादिः- वीक्ष्य- साञ्जनास्सन्तः कथंचिद्गृह्णते चेद्गृह्णताम्- न तत्रातीव खेदः- निरञ्जनैः पामरैरेव गृहीतत्वेऽत्याहितमेवेति पर्यालोच्येति भावः।

गूढार्थविवरणकृतस्तु- "गृहीतं अपहृतमिति व्याचख्युः- तत्तु न चतुरश्रम्- अपहारात्पुरस्तादेव रक्षणमपहार्य वस्तुनो दृष्टं श्रुतं च- न त्वपहारादनन्तरमपहृतवस्तुनो रक्षणम्- यथोक्तम्- "अनागतविधानं तु कर्तव्यं शुभमिच्छता। आपदं शङ्कमानेन पुरुषेण विपश्चिते"ति। यद्वा क्तप्रत्ययमादिकर्मणि विवक्षित्वा तन्निर्वाह्यम्- उपक्रान्तापहार मित्यर्थः- अहो इतीदृशानागतविधातृत्व परिचिन्तनजनिते विस्मये। तादृश प्रशंसायां वा- "अहो दिगर्थे शोके च करुणार्थविषादयोः। संबोधने प्रशंसायां विस्मये पादपूरणे" इति मेदिनी। नीलनिधिमपि मुकुन्दनिधिमिति विरोधोऽप्यत्राहो इत्यनेन सूच्यते। अन्यत्र- निरत्ययम्- निर्गतोऽत्ययान्निरत्ययः- तं- अत्ययो नाशः- स च- "षड्भाव विकारा भवन्तीति वार्ष्यायणि र्जायतेऽस्ति परिणमते वर्धतेऽपक्षीयते नश्यती"ति वार्ष्यायणि पठितानां भावविकाराणामन्तिमः- विकारान्तरोपलक्षकः- सर्वविकारासंस्पृष्टमित्यर्थः। यद्वा। निरत्ययं निर्दोषम्- अखिलहेयप्रत्यनीकमित्यर्थः- अखिललोकप्रशासितृत्वेन दुरतिक्रममिति वा- "अत्ययोऽतिक्रमे दण्डे विनाशे दोषकृच्छ्रयो"रिति मेदिनी। नीलस्य इन्द्रनीलमणेः- महसां तेजसां तत्तुल्यतेजसामित्यर्थः- अत एव पदार्थवृत्तिनिदर्शना- नीलानां रुचीनां निधिमिति वा- "नीलो वर्णे मणौ शैले निधिवानरभेदयोः। नीलौषध्यां लाञ्छने चे"ति हेमचन्द्रः- मुक्तिं ददातीति मुकुन्दः- "पृषोदरादित्वात् साधु"रिति सहस्रनामभाष्ये- तथा च निर्वचनम्- "तैरैकान्त्यगरिम्णा प्रार्थित स्स्वयं तेषां मुक्तिं ददातीति मुकुन्द" इति निरुक्तिश्च। "तैः प्रार्थितस्स्वयं मुक्तिं मुकुन्दस्स्याद्ददाति स" इति। मुकुन्द इत्यभिधा यस्य तं तथोक्तम्- "मुकुन्दः पुण्डरीकाक्षे रत्नभेदे च पारदे" इति विश्वः- अनेन मोक्षदानौपयिका स्सत्यकामत्व सत्यसंकल्पत्वमहोदारत्वादयः कल्याणगुणा आक्षिप्यन्ते- कान्तम्- "कथाभिरभिरामाभि"रित्युक्तलक्षणं वल्लभम्- निरञ्जनैः पुत्रमित्रकलत्रादि संसारलेपविधुरैः- जनैः मुमुक्षुभि र्योगिजनैरेव- "अञ्जनं कज्जले चाक्तौ सौवीरे च रसाञ्जने" इति मेदिनी। गृहीतं शरणवरणाय स्वायत्तीक्रियमाणम्- आदिकर्मणि क्तः- यथा हि श्रूयते। "उपयाम गृहीतोऽसि ब्रह्मणे त्वामहस ओमित्यात्मानं युञ्जीते"ति। वीक्ष्य- अयमीदृशैर्निरञ्जनैरेव यदि गृहीतोऽतिवेलप्रसक्तेन तत्संसर्गेणोन्मस्तकमासाद्य वैराग्योन्मादं मय्यपि क्वचिद्विरज्येतापीति साधु विमृश्येति भावः- रक्षितम्- तैरेव यथा

स्वारस्वमसौ निधिपदं मुकुन्दाभिधामित्यस्य विशिष्यानिराव्याहारप्रसङ्गा व्यादासिताध्यः।

नन्वत्र- "निधिः पद्मो निधिश्शंखश्चतुर्दन्तो गजस्तथा। कल्याणसर्पः पश्चास्य श्चिक्लीतो गृहरक्षक" इत्यादि पुराणवचनै र्विभज्य पद्मशङ्खनिध्योरेव लक्ष्मीस्वत्व प्रतिपादनादुक्तरीत्या तस्या नीलमुकुन्द रक्षणमनावश्यकमित्युपपादितोत्प्रेक्षा निरवलम्बना स्यादिति चेन्न- लौकिकदंपति न्यायेन श्रीश्रीशाभ्यामेवं स्वेच्छया विभक्तत्वेऽपि- "अस्या मम च शेषं हि विभूतिरुभयात्मिके"त्यादिप्रमाणै र्नीलमुकुन्दयोरपि लक्ष्मीवैभवत्वानपाया त्तस्यास्तद्रक्षणस्यावश्यकत्वात्- न हि विभक्तमपि पत्युर्वैभवमन्यैराक्रम्यमाणमुपेक्षणीय- मुन्मिषन्त्यैव विभक्तविभवयाऽपि सहधर्मिण्या। न च- "अर्थो विष्णुरियं वाणी"त्यादिव द्विभज्य निर्दिष्टोऽप्ययं विभूत्यंशो नोभयसाधारणो भवितुमर्हतीति युक्तमाश्रयितुम्- उभयोरपि सर्वेश्वरत्वप्रतिपादकबहुप्रमाणव्याकोपप्रसङ्गादित्यलम्।

यत्त्वत्र पाश्चात्येनाद्वैतिना- "न हि रक्षकसद्भावे निध्यपहरणं मयासद्भावे च भगवद्ग्रहणमिति भाव" इति व्याख्यातम्- तत्रेदं प्रष्टव्यम्- किं मायाशब्देनात्र लक्ष्मीर्विवक्षिता- आहो स्वित्- "चिदानन्दमयब्रह्मप्रतिबिम्बसमन्विता। तमोरज स्सत्वगुणा प्रकृतिर्द्विविधा च सा। सत्वशुद्ध्यविशुद्धिभ्यां मायाऽविद्येति ते मते। मायाबिम्बो वशीकृत्य तां स्यात्सर्वज्ञ ईश्वरः। अविद्या वशगस्त्वन्यस्तद्वैचित्र्यादनेकधा"। इत्युक्ता- विशुद्धसत्वप्रधाना प्रकृति र्विवक्षितेति। नाद्यः। रमा पद्मादि शब्दवन्माया शब्दस्य लक्ष्मीवाचकत्वेन वैजयन्तीमेदिनीविश्वरत्नमालादिकोशेषु क्वाप्यनुशासनादर्शना त्तादृश संप्रतिपन्नमहाकविप्रयोगानुपलम्भाच्च- "यशस्तुष्टिकरी माया। ऋते मायां विशालाक्षी"मित्यादौ लक्ष्मीविषये मायाशब्दो दृश्यत इति चेत्- सत्यम्-स तु- "स्यान्मायाशाम्बरी"ति कोशानुसारेण- "जनकस्य कुले जाता देवमायेव निर्मिते" त्यादाविवेन्द्रजालव द्विचित्रकार्यकरत्वेनाश्चर्यावहत्वाभिप्रायकतया गौणः- न तु श्रीलक्ष्मीत्यादिवद्रूढः- इह तु "स्वायत्ते शब्दप्रयोगे नावाचकं प्रयुञ्जीते"ति न्यायाद्विद्य मानेष्वपि प्रसिद्धेषु भूयस्सु लक्ष्मीवाचकपदेष्वतद्वाचिमायापदोपादानेन व्याख्यानमयुक्तमेव। न द्वितीयः। प्रकृतानुपयोगात्- लक्ष्म्या भगवद्वक्षस्थलावस्थानवर्णनं हि प्रकृतम्- न तु प्रकृतिवर्णनम्- अथ निर्विशेषस्वप्रकाशचिन्मात्रब्रह्मस्वरूपतिरोधानकरी मिथ्याभूता मायैव कल्पितरूपविशेषोपश्लिष्टब्रह्मप्रतिच्छन्दवती लक्ष्मीरिति सैव मायाशब्देन व्यपदिश्यत इति

स्सर्ववित्।'' इत्यादि परस्सहस्रप्रमाणै स्तस्य सविशेषत्वकण्ठोक्तेः- स्वप्रकाशचिन्मात्रब्रह्म-स्वरूपतिरोधानकरी मायेत्यप्ययुक्तम्- मायया स्वप्रकाशं ब्रह्मतिरोहितमिति वदता स्वरूपनाश एवोक्तस्स्यात्- प्रकाशतिरोधानं नाम प्रकाशोत्पत्तिप्रतिबन्धः- विद्यमानस्य विनाशो वा- प्रकाशस्यानुत्पाद्यत्वाभ्युपगमेन प्रकाशतिरोधानं प्रकाशनाश एवेत्यादिदोषाणां श्रीभाष्यएव विस्तरेण निरूपितत्वान्न प्रकृते तद्दूषणाय प्रयतामहे- यत्तावदुक्तं कल्पितरूपोपश्लिष्टब्रह्मप्रतिच्छन्दवती मायेति- तदसत्- तादृशकल्पनस्याप्रामाणिकत्वात्- अभ्युपगमे च ब्रह्मण एव मायान्तस्थता स्या न्न तु तद्वक्षसि मायावस्थानम्- तथा च भगवद्वक्षसि लक्ष्म्यवस्थानवर्णनपरमूलश्लोकस्यैव कुठारस्स्यात्त्वद्व्याख्यानमित्यहो तव वैदुषीवैभवम्।

ननु च- ''मूलप्रकृतिरीशाना- जगदुत्पादिका शक्तिस्तव प्रकृतिरिष्यते। सैव नाम-सहस्रेषु लक्ष्मीश्श्रीरिति कीर्त्यते। प्रकृतेः पुरुषाच्चान्य स्तृतीयो नोपपद्यते।'' इति ब्राह्मपुराणादि वचनेषु साक्षात्प्रकृतिरेव श्रीरित्युच्यते- प्रकृतिरेव हि माया- ''मायां तु प्रकृतिं विद्यात्-दैवी ह्येषा गुणमयी मम माया दुरत्यया। दैवीं गुणमयीं माया''मित्यादिषु मायाशब्देन प्रकृतेर्व्यपदेशात्- अतो मायाशब्देनात्र लक्ष्म्या निर्देशो युक्त एवेति चेन्न- प्रकृति शब्दोपात्ततामात्रेण तस्यास्त्रिगुणद्रव्यतादात्म्यायोगात्- अन्यथा- ''वासुदेवः परा प्रकृतिः- प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधा''दिति प्रकृतिशब्दनिर्दिष्टे भगवत्यपि तत्प्रसङ्गात्- उदाहृत पुराणवचनान्यपि लक्ष्मीनारायणयोः प्रकृति पुरुषरूप विभक्तविभूतिविशेषाभिमानित्वाभि-प्रायाणि- अन्यथा- ''ज्ञानादिषाड्गुण्यमयी या प्रोक्ता प्रकृतिस्सदे''ति तत्रत्यग्रन्थविरोध स्स्फुट एव। न हि लक्ष्म्यास्त्रिगुणात्मक प्रकृतिरूपत्वे ज्ञानादिषाड्गुण्यमयत्वं घटेत- अत एव- ''कान्तस्ते पुरुषोत्तम इत्युपक्रम्य- ''यवनिका माया जगन्मोहिनी''ति श्रीमतां यामुनाचार्याणां लक्ष्मीप्रकृत्योर्व्यतिरेकनिर्देशश्च संगच्छते। तस्मान्मायाशब्देन लक्ष्म्या निर्देशो न युक्त एव।

अस्तु वा मायाशब्देन लक्ष्म्या एव ग्रहणम्- तथापि तत्रेदमनुयोक्तव्यम्- न हि मायासद्भावे भगवद्ग्रहणमिति वदता भवता ग्रहणशब्देन किं हस्तादि कर्मेन्द्रियैरुपादानं विवक्षितम्- उत चक्षुरादिज्ञानेन्द्रियैरिति। नाद्यः- न द्वितीयश्च- ''यत्तदद्रेश्यमग्राह्य'' मित्यादिश्रुतेरुभयस्यापि ब्रह्मण्यसंभवेन तद्ग्रहणे मायासद्भावासद्भावयो रुभयोरप्य

वाल्लभ्येनानुतिष्ठन्तीं वात्सल्याद्युपबृंहणीम्। उपायसमये भर्तुर्ज्ञानशक्त्यादिवर्धनीम्।" इत्यादि भगवत्स्वरूपप्रकाशक विद्यात्व-तदाश्रयण पुरुषकारत्वाद्युक्तयो विरुध्येरन्नित्यलम संप्रदायज्ञव्याख्याननिरासायासेन। यद्यपि बुधामोदिन्यामयं श्लोको न व्याख्यातो न धृतश्च- तथाऽपि बहुषु कोशेष्वैकरूप्येण दर्शनाद्ग्रन्थकृच्छैलीसौसादृश्यादति-सौन्दर्यवत्त्वाच्चास्माभिर्व्याख्यातः॥

**मू. जननि पुष्यसि तामरसंपदं वितनुषे च न तामरसंपदम्।**
**परमुरस्फुरणप्रतिरोधिनं परमुरस्फुरणं नयसेऽद्भुतम्॥ 24**

यद्यपि पूर्वं सरसिजनिलयाऽपीति श्लोके लक्ष्म्या वैभवातिशयप्रदर्शनाय सरसिजमुनिमानसहरिहृदयनिगमशिखरेषु तुल्यतयाऽवस्थितिरुक्ता- तथाऽपि- "स्थानं यस्यास्सरसिजवनं विष्णुवक्षस्स्थलं वे"त्याचार्यैस्तुल्यतया विकल्पितयो स्सरसिजभगवदुरसो रेवाभिमततमस्थानत्वमित्यभिप्रयन्नाह। **जननीति।** हे जननि- तामरसं पद्मरूपं, पदं स्थानम्- "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वि"त्यमरः। पुष्यसि पुष्णासि- "पुष पुष्टौ" दिवादिः-अथापि तामरसंपदं स्थानं न वितनुषे चेति विरोधः। नतानां शरणागतानाम्-अमराणां इन्द्रादीनां संपदं च अपूर्वां संपत्तिम्- भ्रष्टैश्वर्यपुनःप्राप्तिरूपां वा- यद्वा- नतानां मनुजानामपि- अमरसंपदं देवतुल्यां श्रियं च वितनुषे इति परिहारः। उरसः-स्फुरणं प्रकाशः-तत्प्रतिरुणद्धीति तं तथोक्तम्- ताच्छील्ये णिनिः- वक्षः प्रकाशप्रतिरोधन शीलमित्यर्थः। अत्रार्थान्तरानुरोधाय "खर्परे शरि वा विसर्गलोपो वक्तव्य" इति वैकल्पिकविसर्गलोपे एक सकारकं रूपम्-अथ वा चतुर्थपादस्थोरस्फुरणशब्दे-"अनचि चे"ति द्वित्वं परिकल्प्यात्रापि यथाश्रुत्रं द्विसकारकमेव रूपमस्तु- न तु पूर्वोक्तविसर्गलोप आवश्यकः- परं परमात्मानम्-परं केवलम्- उरस्फुरणं स्वावस्थानेन वक्षःप्रकाशम्- नयसे- प्रापयसे- इति विरोधः-परश्शत्रुः- यो मुरः- तन्नामा असुरः- तस्य यत् स्फुरणम्- तस्य प्रतिरोधिनं अपहर्तारमिति परिहारः- "परोऽरिः परमात्मा च केवले परमव्यय"मिति रत्नमाला। "प्रतिरोधिपरास्कन्धि पाटच्चरमलिम्लुचा" इत्यमरः- "नीवह्योर्हरतेश्चे"ति द्विकर्मकत्त्वम्- अद्भुतम्- उक्तरीत्या परस्पर विरुद्धकार्यकरणमिदमाश्चर्यमिति भावः।

अत्र तामरसपदपोषणतदपोषणक्रिययोः- उरस्फुरणप्रतिरोधतत्प्रापणक्रिययोश्च श्लेषभित्तिकाभेदाध्यवसायमलकातिशयोक्त्या विरोधवर्णना दिरोधालङ्कारौ। तथा च

राजाऽपि भास्वान्वैदेह्यां रक्तोऽपि श्यामलाकृतिः। कीर्तिमानपि निष्पङ्कानाश्रितान्कुरुते तराम्। कमलोल्लासकलनालालसोऽपि कलानिधिः। कदर्थयत्यरिकुलं चक्रोल्लासं दिशन्नपि। गोत्राभिवृद्धिं तनुते जिष्णुरप्येष राघवः। महासेनोऽपि सर्वज्ञ श्श्रीपति श्चतुरानन'' इति। इमौ च यमकाभ्यामेकवाचकानुप्रविष्टतया पूर्वोक्तातिशयोक्त्या- अङ्गाङ्गिभावेन च संकीर्येते। उरस्फुरणप्रतिरोधताच्छील्यरूपप्रबलप्रतिबन्धकसद्भावेऽप्युरस्फुरणनयनरूपकार्योत्पत्ति वर्णनात्- ''कार्योत्पत्तिस्तृतीया स्या त्सत्यपि प्रतिबन्धके'' इत्युक्तलक्षणो विभावनालङ्कारोऽप्युक्तातिशयोक्त्युज्जीवित इति पूर्वोक्तविरोधालंकारस्यास्य च संदेहसंकरः। पूर्वार्धे उत्तरार्धे चोक्तानां संकीर्णालंकाराणां संसृष्टिरिति विभावनीयम्।

बुधामोदिन्यामेतत्पद्यानन्तरम्- ''अथस्तादिन्द्रादेः स्थितिमथ हरेर्नाभिनळिने विरिञ्चावस्थानं तदुपरि च ते वासमुरसि। ततोऽप्यूर्ध्वम् पश्यन्किमपि मकुटं वेंकटपते र्जनस्तत्रोत्कर्षां स्तरतमतया वेत्ति कमले'' इति किंचित्पद्यं पठित्वा व्याख्यातम्- अस्मिंश्च पद्ये अन्ततो भगवत्किरीटस्यैवोत्कर्षवर्णनं व्यक्तमिति नायं प्रस्तुतलक्ष्मीप्रकर्षवर्णन संदर्भौपयिकः- अनुपात्तश्च केनापीति वयमुदास्महे। द्रुतविलम्बितम्॥

**मू. यदि नाम विष्णुवक्षः क्षणमत्यक्ष्यः क्षमामयि रमे त्वम्।**
**आगस्विनस्तदा नो नैवारक्षिष्यदूष्मळो नाथः॥ 25**

पूर्वं भगवतः प्रतिघ इति श्लोके सापराधचेतनविषयकक्रोधप्रशमनेनास्मद्धितार्थं भगवतो हृदयमधितिष्ठसीत्युक्तम्- तत्र- किं मदवधानेन? परमकारुणिको भगवानेव गोपायेद्युष्मानित्यत्र भवत्याः क्षणमपि वक्षस्यनवस्थाने क्रोधोष्मळोऽसावस्मान्न गोपायेदेवेत्याह। **यदीति**। तावद्भगवत्क्रोधोपशमनौपयिकं तस्याः क्रोधासमानाधिकरणं क्षमावत्त्वमभिप्रयन् संबोधयति। क्षमामयीति। हे क्षमामयि प्रचुरक्षमे- प्राचुर्यार्थे मयट्। ''टिड्ढाणञि''त्यादिना ङीप्- क्षमा च महापराधानामपि सहनम्- इयं च स्वस्मिन् सुदुस्सहापकारकरणसांतत्येऽप्यनुग्रहशीलत्वपर्यन्ता- सा च- ''विदित स्स हि धर्मज्ञ श्शरणागतवत्सलः। तेन मैत्री भवतु ते यदि जीवितुमिच्छसि। प्रसादयस्व त्वं चैनं शरणागतवत्सलम्''। इत्यादिना सुदुस्सहमहापराधनिधिं रावणं प्रत्यपि हितोपदेश प्रवृत्त्यादिनाऽनयैव प्रकटिता। प्राचुर्यार्थाभिधायिनाऽनेन मयटा क्रोधगन्धोऽप्यस्यां न संभवतीति द्योत्यते।

यदि मयटा क्षमायाः प्राचुर्यं लक्ष्म्या बोध्यते- तर्हि तस्याः क्षमासंबन्धवत्क्रोध संबन्धोऽप्यवर्जनीय स्स्यात्- ब्राह्मणमयो ग्रामः- अन्नमयो यज्ञ इत्यादौ यत्र मयटा प्राचुर्यं प्रतीयते- तत्र स्वसमानाधिकरणस्वप्रतियोगि विजातीयाल्पत्व प्रतियोगिकमेव तदवगम्यते। प्राचुर्यप्रतियोगिब्राह्मणविजातीय शूद्राद्यल्पत्वस्य ग्रामादौ प्रतीतेरिति चेदुच्यते। प्राचुर्येण प्रस्तुत मस्मिन्निदमित्यर्थे- "तत्प्रकृतवचने मयडि"ति मयट् स्मर्यते। तत्र तच्छब्दः प्रकृत्यर्थवाची- प्रशब्दस्य प्राचुर्यम्- कृतमित्यस्याधेयत्वमर्थः- वचनशब्दोऽधिकरण ल्युडन्तः- तथा चायमर्थः। प्रकृत्यर्थगतप्राचुर्यावच्छिन्नाधेयतानिरूपिताधिकरणताभिधायको मयडिति। एवं च क्षमागतत्वेन प्राचुर्यं प्रतिपादयन्नयं प्रत्ययस्तद्गतमल्पत्वं व्यावर्तयति। न तु तत्समानाधिकरणविजातीयाल्पत्वं कल्पयति। मानाभावात्- ब्राह्मणमयो ग्राम इत्यादावपि न मयट्प्रत्ययबलायत्तं विजातीयाल्पत्वम्- किं तु ग्रामत्वावच्छेदेन पञ्चकारुकीसंबन्धाविनाभावग्राहकलोकप्रमाणायत्तम्- न ह्येवमत्र विजातीयसंबन्धग्राहकमस्ति किंचित्प्रमाणम्- प्रत्युत तदभावग्राहकमेवास्ति प्रमाणम्- "शतह्रदानां लोलत्वं शस्त्राणां तीक्ष्णता तथा। गरुडानिलयोश्शैघ्र्य मनुगच्छन्ति योषित" इति सामान्यत स्त्रीस्वभावमभिधाय- "इयं तु भवतो भार्या दोषैरेतैर्विवर्जिते"ति श्रीदाशरथिं भगवन्तं प्रति सीताविषयकमगस्त्यवचनम्- अत्र विवर्जितेत्यनेन सर्वात्मना क्रोधादिदोषवर्जनं सूचितम्- "नमामि कमलां क्षान्तिं क्षमां क्षीरोदसंभवा"मिति तन्नामसु पठ्यते- "असाधारण्येन हि व्यपदेशा भवन्ति- तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञव"दिति च न्यायेन विज्ञानानन्दसारत्वाद्विज्ञानानन्दशब्दाभ्यां जीवब्रह्मणोरिव क्षमासारत्वादेवायं क्षान्तिक्षमाशब्दाभ्यां व्यपदेशः- अय मेव हि तत्क्षमाया विजातीयक्रोधा संवलितत्वं व्यनक्ति- तत्सारत्वं च तद्विरोध्यसामानाधिकरण्यमेव। ननु तर्हि कथं प्राचुर्यप्रतिपत्तिः- तद्ध्यन्यगताल्पत्वमपेक्षत इति चेत्सत्यम्- सजातीयाल्पत्वं व्यक्त्यन्तरगतमादाय प्राचुर्य प्रतिपत्तिरुपपद्यत एव- दृश्यते हि- "न क्षमामि वसुंधरे। धिक्क्षमामीदृशे जने" इत्यादि प्रमाणसिद्धं भगवदीयक्षमाया अल्पत्वं- तदादाय लक्ष्मीक्षमायाः प्राचुर्यमुपपद्यते- अस्मिन्नपि श्लोके ऊष्मळ इति विशेषणेन भगवतः क्षमाया अल्पत्वं दर्शितम्- तथाचाभाषि भगवद्भाष्यकारैरानन्दमयाधिकरणे- "तत्प्रचुरत्वं हि तत्प्रभूतत्वम्- तच्चेतरस्य सत्तां नावगमयति- अपि तु तस्याल्पत्वं निवर्तयति। इतरसद्भावासद्भावौ तु प्रमाणान्तरावसेयौ। इह च प्रमाणान्तरेण तदभावोऽवगम्यते अपहतपाप्मेत्यादिना- तत्रैतावदेव वक्तव्यम्- ब्रह्मानन्दस्य प्रभूतत्वमन्यानन्दस्याल्पत्वमपेक्षत इति-उच्यते च तत्-स एको मानुष आनन्द-

प्रतिपादनं संगच्छते- कारणभूतक्रोधसद्भावे तत्कार्यभूतनिग्रहोऽम्भवा दुर्वार एव। न हि स्वसमानाधिकरण विजातीयाल्पत्वप्रतियोगिकमेव प्राचुर्यं मयडर्थ इत्यस्ति नियमः- प्रकाशमयो रनिरित्यादौ व्यभिचारात्। तत्र हि स्वसमानाधिकरण विजातीयतिमिराल्पत्वं प्रत्यक्षविरुद्धं न प्रतियोगि- किं तु स्वव्यधिकरण सजातीयचन्द्रादिगत प्रकाशाल्पत्वं मानान्तराविरुद्धमेव प्रतियोगीति सर्वलोकसिद्धम्- ब्राह्मणमयोग्राम इत्यादावपि ग्रामान्तरगत ब्राह्मणाल्पत्वमेव प्रतियोगीति युक्तं कल्पयितुम्- अल्पब्राह्मणकं ग्रामान्तरं दृष्टवत एव तथा प्रत्ययादिति श्रुतप्रकाशिकाज्ञानरत्नप्रकाशिकादौ मयडर्थविस्तरः- तस्माद्भगवद्गत क्षमाल्पत्व प्रतियोगिकमेव लक्ष्मीगतक्षमाप्राचुर्यमिति तत्क्षमाया निरतिशयत्वं बोध्यम्।

प्रकृतमनुसरामः- नन्वेवमात्मनः क्षमाप्रचुरत्वे युष्मत्कृतानि भूयांस्यपि सहेयाहमागांसि- ईदृशापराधदर्शनक्षुभितहृदयतया दण्डधरं सर्वेश्वरं कथं नु नाम प्रसादयेयमित्यतो विशेष्यं निर्दिशन् संबोधयति। रमे इति। रमयतीति रमा- पचाद्यच्- वाल्लभ्यातिभूम्ना तैस्तैर्विलासैस्तन्मानसाविलतां प्रशमय्य तं प्रसादयितुमसि पटीयसीति भावः। त्वं-एवंविधा भवती- विष्णोः श्रीनिवासस्य- वक्षः- क्षणं अत्यल्पं कालम्- न तु घटिकाद्यवधिकं वा- "परमाणुकालभेदे घटी षडंशे क्षण स्तथाऽवसरे" इति रत्नमाला- "कालाध्वनो"रिति द्वितीया- यदि नामात्यक्ष्यः यद्यहास्यः- नामेति संभाव्यार्थे- "नाम प्रकाश्यसंभाव्य क्रोधोपगमकुत्सने" इत्यमरः- तदा तर्हि- ऊष्मा अपराधिचेतनविषयक प्रतिघौष्ण्यम्- "ऊष्माणस्तु निदाघोष्णग्रीष्मा श्शषसहा अपी"त्यभिधानचिन्तामणिः- सोऽस्यास्तीत्यूष्मलः- "सिध्मादिभ्यश्चे"ति मत्वर्थीयो लच्- संसर्गार्थिकेनानेन क्रोधोष्मण आगन्तुकत्वं द्योत्यते- तेन तत्परमकारुणिकत्वस्य न क्षतिः- क्षमामय्यां त्वयि तादृशोऽप्यूष्मा न संभविष्यतीति तत्क्षमापेक्षया त्वत्क्षमायाः प्राचुर्यं निरर्गळमेवेति भावः। नाथः त्वद्वल्लभो जगदीश्वरः- निरङ्कुशस्वतन्त्र इति भावः- नाथयतीति नाथ इति व्युत्पत्त्या कृतापराधान् जनान्- "तानहं द्विषत" इत्याद्युक्तरीत्या दण्डनेनोपतापयितेत्यर्थोऽप्युपस्कार्यः "नाधृ नाथृ याच्ञोपतापैश्वर्याशीष्ष्वि"ति नाथते रुपतापार्थेऽप्यनुशासनात्- ननु भवतु क्रोधोष्मळ एव स नाथः- निरपराधत्वे युष्मानवश्यं गोपायेदेव। अपराधिष्वेव हि पराक्रमते तत्क्रोधोष्मा। न त्वनपराधेष्वपीत्यत्राह। आगस्विन इति। आग एषामस्तीत्यागस्विनः- अपराधिनः पापिनो वा- "पापापराधयो राग" इत्यमरः। "अस्मायामेधास्रजोविनि"रिति मत्वर्थीयो विनिप्रत्ययः- "तसौ मत्वर्थे" इति भसंज्ञया न पदकार्यरुत्वोत्वे- अयं च भूम्नि

क्रियातिपत्तौ वित्यनुवर्तमान- भूते च त्यनेन- सुवृष्टिश्चेदभविष्यत्सुभिक्षमभविष्य दित्यादाविव भविष्यति वा- ''एधांश्चेदुपालप्स्यदोदनमपक्ष्य''दित्यादाविव भूते वा लृङ्- ''हेतुहेतुमद्भावादिर्लिङ्निमित्तम्- तत्र भूते भविष्यति चार्थे लृङ् स्यात्क्रियाया अनिष्पत्तौ गम्यमानायामिति सूत्रार्थः।

यस्तु ''भविष्यति मर्यादावचने'' इत्यतो भविष्यतीत्यस्यानुवृत्ते ''लिङ्निमित्ते लृङ् क्रियादिपत्तौ''वित्यनेन भविष्यत्येव लृङ्- तत्र ''भविष्यतीत्येवे''ति मूलोक्तेः- न तु भूते इति स्वयं भ्राम्यन्नन्यानपि यतते भ्रमयितुम्- स तु मन्ये- ''भूते चे''ति तदनन्तर सूत्रं नास्मार्षीत्- ''उताप्योस्समर्थयोर्लिङि''ति सूत्रे ''इतः प्रभृति लिङ्निमित्ते क्रियातिपत्तौ भूतेऽपि नित्यो लृङि''ति कौमुदीग्रन्थं नाद्राक्षीत्- ''हेतुहेतुमतोर्लिङि''ति सूत्रे ''क्रियातिपत्तौ तु भूते भविष्यति च नित्यं लृङ्- यद्यवर्षिष्यत् सस्यमुदपत्स्य''दिति तत्वबोधिनीं नावैत्सीत्- ''लृङस्तु भूतत्वं क्रियातिपत्तिश्चार्थः- आपत्तिरनिष्पत्तिरापादना रूपा- सा च शक्या- सा चापादना तर्कः- तर्कत्वं च मानसव्याप्यो जातिविशेषः- एधांश्चेदुपालप्स्यत- ओदनमपक्ष्यतेत्यादौ एथकर्मको भूतत्वेनापादनाविषयो लाभस्तदनुकूलकृतिमानोदनकर्मको भूतत्वेनापादनाविषयो यः पाकस्तदनुकूलकृतिमां श्चेति बोध'' इति परमलघुमञ्जूषाग्रन्थं न पर्यचैषीत्- ''मन्दोऽभविष्यन्नियतं विरिञ्चो वाचांनिधे वञ्चितभागधेयः। दैत्यापनीतान्दययैव भूयोऽप्यध्यापयिष्यो निगमा न्नचेत्त्व'' मित्यादि-प्रतिपन्नप्रयोगान्नाज्ञासीच्चेति।

अत्र लक्ष्मीकर्तृक भगवद्वक्षस्त्यागतर्कणेन भगवत्कर्तृकागस्विजनारक्षणतर्कणा-त्संभावनालंकारः। ''संभावनं यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये'' इति लक्षणात्- यत्र किंचित्तर्कणमन्यत्करणसाधनं तत्संभावनमिति तदर्थः- काव्यप्रकाशकृन्मते त्वतिशयोक्तिभेदः- स हि- ''यद्यर्थोक्तौ च कल्पन''मित्यतिशयोक्तिभेदं लक्षयित्वा- ''राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः। तस्या मुखं तदा साम्यपराभवमवाप्नुया'' दित्युदाजहार- यत्तु- ''श्लेषविरोधाभासावलंकारा''विति प्रतीच्यः- तत्त्विह तद्गन्धाभावा-दुपेक्षितव्यम्- यदपि ''क्षमामयिरमे'' इत्यत्र ''क्षमात्मजे नु त्व''मिति पठन् स एव व्याचख्यौ- तदपि न सम्यक्- नु शब्दवैयर्थ्यात्- सीतावतारे श्रियो भगवद्वक्षस्थलावस्थाना प्रसिद्ध्या तत्त्यागापादनानवकाशात्- तत्तदवतारासाधारणचरितवर्णनावसर एव हि तत्त-दवतारनामभिरामन्त्रणमस्मिन् प्रबन्धे- ''राघवस्य हृदयं स्थिराघवद्वायसं प्रति नवायस-

द्वितीयार्थे ''नैवारक्षिष्यदूष्मळो नाथ'' इत्यत्र ''ऊष्मलः काल'' इति पठन्- ''अयमूष्मलः क्रोधनः- कालः कृष्णवर्णो नाथः- स तु कालः यम एव- निदाघश्च- आगस्विनः अपराधिनः आयासिनश्च- नः अस्मान्- नैवारक्षिष्यत्- उपाश्रितशीतमेवोष्मलः कालो न बाधते- तद्भवत्साहित्येनैवोपासितो हरिः प्रीयते- नान्यथेति भाव'' इति तदीयमेव व्याख्यानम्- तदप्यननुरूपम्- तथाहि- तावत्- ''कालः कृष्णवर्णो नाथ'' इत्यर्थवर्णनं न समञ्जसम्- पीताम्बरादिशब्दवत्तस्य विशेष्यप्रतिपत्तिकारितायाः संप्रतिपन्नैरनभ्युपगमान्निर्विशेष्येण कालशब्देन भगवद्रूपार्थाप्रतिपत्तेः- ईदृशाप्रसिद्धार्थकपदप्रयोगे ''प्रयुक्तमप्रसिद्धेऽर्थे गूडार्थं परिकीर्तित''मित्युक्तगूढार्थाख्यकाव्यदोषापत्तेश्च- अत एव शोणितशब्दस्य रुधिरे प्रसिद्धस्य पाटलवर्णपरत्वेन प्रयोगो न संमन्यते काव्यविद्भिः- ''स तु कालो यम एवे''त्युक्तिरपि सहृदयहृदयोद्वेगदायित्वादसमीची। ऊष्मलः काल इत्यस्य निदाघपरत्वेनार्थवर्णनायाः कथंचिदभ्युपगमेऽपि न प्रकृतोपयोगः- आगस्विन इत्यायासिन इति व्याख्यानमप्यसत्-आगश्शब्दस्यायासार्थकत्वाननुशासनात् ''उपाश्रित शीतमेवोष्मलः कालो न बाधत'' इति ग्रन्थाद्बहिर्भूतदन्त्यतालव्यसशाभेदगर्भश्लेषेण समाधानलेखनं व्याख्यातृ शैलीविरुद्धमित्यलमनुचित व्याख्यानाभासनिरासायासेन।मात्रावृत्तेषु गीतिरियम्॥

**मू. हृदये कमलदळाक्षि त्वत्पदलाक्षीयलक्ष्म भवतीं च।**
**दधदूष्मलोऽपि कृष्णोऽप्यधिकारुण्यं वहत्यहिगिरीशः॥** **26**

**मू. इति श्रीमदात्रेय वेङ्कटाध्वरिकृतिषु श्रीलक्ष्मीसहस्रे**
**वक्षस्थलावस्थानस्तबकस्तृतीयः॥**

अथ वक्षसि लक्ष्मीसंबन्धादेव भगवतः परमकारुणिकत्वमिति वर्णयन्नर्थादनुपद वक्ष्यमाणकारुण्यस्तबकार्थमप्यधिकारुण्यशब्देन सूचयन्वक्षस्थलात्रस्थानवर्णनस्तबक-मुपसंहरति। हृदय इति। कमलदळे इव अक्षिणी यस्यास्सा कमलदळाक्षी-तस्यास्संबुद्धिः ''बहुव्रीहौ सक्थ्यक्ष्णो''रिति समासान्तष्षच्- ''षिद्गौरादिभ्यश्चे''ति ङीष्- अनेन नयनयोः प्रसन्नविकस्वरत्वं व्यज्यते- तेन श्रियः करुणाभरपरिपूर्णत्वं द्योत्यते- अहिगिरीशः शेषाद्रिनाथः- अनेन वक्ष्यमाणमस्योष्मळत्वमुत्तभ्यते। कृष्णोऽपि श्यामलोऽपि-ऊष्मलोऽपि चेतनापराधनिर्वर्णनोदीर्णप्रतिघातिभारभीष्मोऽपि- त्वत्पदस्य भवच्चरण तलस्येति यावत्- या लाक्षा अलक्तकरस इति यावत्- तस्या इदं त्वत्पदलाक्षीयम्- यत्-

ऊष्मलोऽपीति योजितम्- अन्यथा उक्तयथासंख्यान्वयविरोध स्स्यात्-एवमेव-
"पाण्ड्योयमंसार्पितलम्बहारः क्लुप्ताङ्गरागो हरिचन्दनेन। आभाति बालातपरक्तसानुस्स-निर्झरोद्गार इवाद्रिराज" इत्यादौ पाठक्रमादर्थक्रमस्य बलीयस्त्व-मनुसृत्यैव यथासंख्यं बिम्बप्रतिबिम्बभावो निर्वोढव्यः- पाठक्रमस्यैवानुरोधे तु- अंसार्पितलम्बहारत्व-चन्दनक्लुप्ताङ्गरागत्वयोः बालातपरक्तसानुत्व सनिर्झरोद्गारत्वयोश्च यथासंख्यमन्वय-विवक्षायां बिम्बप्रतिबिम्बभाववैघट्यं स्यात्- न हि तत्र मुक्ताहार-बालातपयोस्सादृश्यं विवक्षितम्- असंभवात्- किं तु हरिचन्दन बालातपयोरेव- एवं हारनिर्झरयोरेव सादृश्यम्-न तु हारबालातपयोः- तस्माद्यवागू पाकन्यायोपजीवनेनार्थ-क्रमस्य बलीयस्त्वानुसरणे-नैवैतादृशस्थले यथासंख्यनिर्वाह इति पाठक्रममुपेक्ष्यार्थक्रमेणैव अस्माभिर्व्याख्यातम्।

स च न्यायः पञ्चमाध्यायप्रथमपादे मीमांसितः- तथा हि यवाग्वाऽग्निहोत्रं जुहोति-यवागूं पचतीति श्रूयते- तत्र संशयः- किमग्निहोत्र यवागूपाकयोरनियतः क्रमः- उत नियतः-यदा नियतः- तदा पाठेन नियम्यते- उतार्थेन- तत्र विध्योरनुष्ठानमात्रपर्यवसानात्क्रमस्य नियामकत्वाभावादनियतः क्रम इत्येकः पूर्वः पक्षः- पूर्वाधिकरणेषु "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयती"त्यत्र पाठक्रमस्य नियामकत्वाभ्युपगमादत्रापि तस्य संभवाद्यथापाठं क्रमनियम इत्यपरः पूर्वः पक्षः- यवाग्वेति तृतीयाश्रुत्या होमसाधनत्वाव-गमादसति च द्रव्ये होमानिष्पत्तेरर्थाद्यवागूपाकः पूर्वभावीति सिद्धान्त इति संक्षेपः- केचित्तु-अपौरुषेयेषु वाक्येषु यथा तथा वा प्रवर्ततामयं न्यायः- पौरुषेयेषु तु न युक्तः प्रवर्तयितुम्-श्रवणानन्तरमेव प्रयोक्तुस्तारतम्यानभिज्ञत्वप्रतीते रन्वयविलम्बासहिष्णुत्वाद्यथासंख्यान्वय विरोधाच्च क्रमभ्रष्टदोषदुष्टमेवेदृशं वाक्यमिति वदन्ति-यद्वा-लक्ष्मीपदलाक्षारसाङ्क लक्ष्मीधारणयोरुभयोरप्यूष्मलस्यापि भगवतोऽधिकारुण्यधारणे- कृष्णस्यापि तस्याधिकारुण्य धारणे च प्रत्येकं समुच्चित्य हेतुत्वं बोध्यम्- अयमर्थः- अहिगिरीशः- त्वत्पदलाक्षीय लक्ष्म-भवतीं च- हृदये दधत्सन्- ऊष्मलोऽपि कृष्णोऽप्यधि कारुण्यं वहति- "करुणां वेदमातर"मित्युक्तरीत्या करुणामय्याः- "आदित्यवर्णे तपसः"- "पद्मे स्थितां पद्मवर्णा" मित्युक्तरीत्या पद्मारुणांशुवर्णायाश्च तव पादलाक्षारसाङ्कधारणेन तथाविधायास्तव धारणेन चातिशयितं कारुण्यमारुण्यं च बिभर्तीत्यर्थः- त्वत्पदलाक्षाधारणादारुण्यं कारुण्यं च

पूर्वोक्तक्लेशोऽपि सह्यतत्यलम्- अत्र- ऊष्मलोऽप्यधिक कारुण्यं वहतीत्यको विरोधः। कृष्णोऽप्यधिकमारुण्यं वहतीत्य परश्चाभासत इति विरोधाभासद्वयम्- तच्चाधिकारुण्यशब्द प्रतिपाद्याधिककरुणत्वाधिकारुणत्वरूपार्थद्वय- श्लेषभित्तिकाभेदाध्यवसायमूलकाति- शयोक्त्यनुप्राणितम्- कृष्णोऽप्यधिकमरुणिमानं वहतीत्यनेन स्वगुणत्यागपूर्वकान्यगुणग्रहण- वर्णनात्तद्गुणालंकारश्चातिशयोक्त्युज्जीवित उक्तालंकारद्वयेनैकवाचकानुप्रविष्टतया संकीर्यते। पाठक्रमादर्थक्रमस्य बलीयस्त्वाश्रयणेन यथासंख्यान्वयवर्णनपक्षे सहृदयहृदयानामनुद्वेगश्चे द्यथासंख्यालंकारोऽपि मन्दमन्दं पदं निदधाति- तथा पूर्वोक्तालंकारैस्सहास्यैकवाचकानु- प्रवेशसंकर इति विभावनीयम्- वृत्तं गीतिः- बुधामोदिन्यां तु ''यदि नाम विष्णुवक्षः- हृदये कमलदळाक्षी''ति श्लोकद्वयं व्युत्क्रमेण पठितम्- तथाऽपि यथोक्तक्रमेण पठनमेव सुन्दरम्- हृदये कमलेतिश्लोकस्थाधिकारुण्यशब्देनानुपद वक्ष्यमाणकारुण्यस्तबकार्थस्यापि सूचितत्वलाभात्- अत एव मुद्रालंकारोऽपीति सर्वमनवद्यम्॥

वनिताकृति प्रशान्तं वल्लभवक्षस्थलीकृतनिशान्तम्।
विनतामरेशकान्तं विशतु परं ब्रह्म तन्मम स्वान्तम्।

श्रीवासब्रह्मतन्त्रादिमपदकलिजिद्देशिकेन्द्रानघाङ्घ्रि-
द्वंद्वाब्जानुग्रहात्तप्रतिपदविविधिग्रन्थनिर्माणशक्तिः।
कृष्णश्रीशैलवंश्यस्स्तबकमतिशुभं नूत्नदुर्गाधिवासी
व्याख्यद्वक्षस्थलावस्थितिविभवपरं साधु लक्ष्मीसहस्रे।

इति श्रीमच्छ्रीशैल घनगिरि कुलक श्रीमत्तातार्यवर्य
द्वैतीयीक नन्दनस्य श्रीकृष्णाम्बागर्भशुक्तिमुक्ताफलस्य
श्रीमत्प्रत्यग्र दुर्गाभिजनस्य श्रीकृष्णकविसार्वभौमस्य कृतिषु

**श्री लक्ष्मीसहस्र व्याख्यायां रत्नप्रकाशिकाख्यायां**

**वक्षस्थलावस्थानस्तबकस्तृतीयः**